उस्यपदान्तात् ॥ अधुः । आदन्तादेवेति किम् । अभूवन् । लुगभावे अधासीत् । धेयात् ।

पा पाने ।

**पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ॥७।३।७८॥**

पादीनां क्रमात् पिबादय आदेशाः स्युः शिति । पिबादेशोदन्तस्तेन नोपधागुणः । पिबति । गातिस्थेति सिचो लुक् । अपात् । पेयात् ।

घ्रा गन्धोपादाने । जिघ्रति । अघ्रात् । अघ्रासीत् ।

---

अधासीदिति । 'यमरम—' इतीट्सकौ । दधौ । धाता । धेयात् इति । 'एर्लिङि' इत्येत्वम् । धास्यति । अधास्यत् ।

पा । पा पाने न पा रक्षणे लुग्विकरणत्वात् ।

घ्रा गन्धोपादाने । ध्मा शब्दाग्निसंयोगयोः । ष्ठा गतिनिवृत्तौ । म्ना अभ्यासे । दाण् दाने । दृशिर् प्रेक्षणे । ऋ गतिप्रापणयोः । सृ गतौ । एतौ भौवादिकौ । जौहोत्यादिकयोस्तु शितौ संभवान्न ग्रहः । चानशः संभवेपि शश्वासाविचेति कर्मधारयात् शितीति शिदादौ विज्ञायते तेन तत्र न । शद्लृ शातने । षद्लृ विशरणे । भौवादिकतौदादिकयोर्ग्रहणम् । अपात् । अपाताम् । अपुः । पपौ । पपिथ । पपाथ । पाता । पेयात् । 'एर्लिङि' इत्येत्वम् । पास्यति । अपास्यत् । घ्रा । जिघ्रतीति । जिघ्रादेशः । अघ्रादिति । 'विभाषा घ्रा—' इति वा सिचो लुक् । अघ्रासीदिति । लुगभावे

---

१. इति dropped $D_3$. २. लुगभावे $D_1$. ३. धेयात् । धाता । धास्यति । अधास्यत् $B_2$. ४. नोपधाया गुणः $B_2$. ५. Before it–पपौ । पाता । 'एर्लिङि' । इत्येकारः । $B_1$, $B_2$ ; पेयात् dropped $D_4$. ६. Dropped $Dc_1$, $Dc_3$. ७. जुहोत्यादिकयो । $Bc_2$, $Dc_3$. ८. ग्रहणम् $Bc_2$. ९. शित्यार्ध $Dc_3$. १०. °शरणगत्यवसादनेषु $Bc_2$, $Dc_3$. ११. Dropped $Dc_1$, $Dc_3$.

घ्रौ । घ्रेयात् । घ्रायात् ॥ ध्मा शब्दाग्निसंयोगयोः । धमति ।
अध्मासीत् । ध्मेयात् । ध्मायात् ॥ ष्ठा गतिनिवृत्तौ । तिष्ठति ।
सिचो लुक् । सत्वे कृते प्रकृतिस्तवर्गः स्यात् ।

नकारजावनुस्वारपञ्चमौ झलि धातुषु ।
सकारजः शकारश्चेर्षाट्टवर्गस्तवर्गजः ॥

---

यमरम—' इतीट्सकौ । जघ्राविति । 'आत औ णलः' ।
जघ्रिय । जघ्राथ । घ्रेयात् । घ्रायादिति । 'वान्यस्य–' इत्येत्वं वा ।
ध्मा । शब्दो मुखानिलादिना अग्निसंयोगे वा । धमतीति । धमादेशः ।
अध्मासीदिति । इट्सकौ । दध्मौ । ध्माता । ध्मेयात् । ध्मायादिति
एत्वं वा । ष्ठा । तिष्ठतीति । तिष्ठादेशः । सिचो लुगिति । 'गातिस्था–'
इत्यनेन । सत्वे कृते इति । 'धात्वादेः षः सः' इति सत्वे कृते निमित्ता-
भावात् । तवर्गः प्रकृतिः स्यादिति । ठस्य प्रकृतिभूतस्थकार एव श्रूयते
इत्यर्थः । ननु नायं तवर्गजष्ठकारः किं तु स्वाभाविक इत्याशङ्क्याह ।

नकारजावित्यादि । धातुषु झलि परतः अनुस्वारपञ्चमौ ।
अनुस्वारश्च पञ्चमश्च । पञ्चमो नाम ङञणनमाः । एतौ नकाराज्जातौ
वेदितव्यौ । झलि शकारः सकारजः षकारात् परष्टवर्गस्तवर्गाज्जातो
वेदितव्यः । अथवा सकारजः शकारजश्चेर्षाट्टवर्गस्तवर्गजः इति वा
पाठः । चे चकारे परे शकारः सकारजः । र्षात् रेफषकाराभ्यां परष्टवर्ग-
स्तवर्गज इत्यर्थः । तत्रानुस्वारस्य नकारजत्वे शंसेः शशंसुरित्यत्र
'असंयोगाल्लिट् कित्' इति कित्त्वनिषेधः । तथा चित्प्रत्यये सति
प्रथमैकवचने संयोगान्तलोपे कृते शानिति तस्य श्रवणं स्यात् । पञ्चमस्य
नकारजत्वे अङ्क्ष्यङि 'अजादेर्द्वितीयस्य' । 'नन्द्राः संयोगादयः'

---

१. Before it–दध्मौ $D_2$, $D_4$. २. 'गातिस्था–' इति सिचो लुक् $B_1$, $B_2$,
?, C. ३. प्रकृतेस्त° C; तवर्गः प्रकृतिः Com. ४. मुखानलादिसंयोगे
व $Bc_2$. ५. °संयोगेन $Dc_3$. ६. वा एत्वम् $Dc_3$. ७. ज्ञेयः $Bc_2$.
. Dropped $B_2$. ९. कृते सति तस्य श्रवणं स्यात् $Dc_3$.

अस्थात् । अड्व्यवायेपि षः । न्यष्ठात् । अभ्यास-
व्यवायेपि षः । नितष्ठौ ।[2] स्थेयात् ॥ म्ना अभ्यासे । मनति ।[3]
दाण् दाने । प्रणियच्छति[4] । प्रण्यदात् । देयात्[5] ॥ हृ कौटिल्ये ।
ह्वरति । अह्वार्षीत् । जह्वार ॥

---

इति अनौ परित्यज्य ककारस्य द्वित्वं स्यात् आञ्चिकदिति । अन्यथा-
ङ्स्यैव द्वित्वे आङ्ङ्क्कदिति स्यात् । चे शकारस्य सकारजत्वे व्रश्चेः
वृश्चः सुवृड्ढित्यादौ 'स्कोः संयोगाद्योः—' इति लोपः स्यात् ।
रेफात् टवर्गस्य तवर्गजत्वे ऊर्णोतेरूर्णुनात्रित्यादौ नकारस्य श्रवणं
स्यादित्येवमादीनि कार्याणि नकारजावित्यादेर्ज्ञेयानि ।

अस्थादिति । लुङ् । अड्व्यवायेपि ष इति । 'प्राक् सित—'
इत्यनेन । अभ्यासेति । 'स्थादिष्वभ्यासेन' इति । नितष्ठाविति । 'आत औ
णलः' । 'शर्पूर्वाः खयः' । स्थाता । स्थेयादिति । 'एर्लिङि'
इत्येत्वम् । स्थास्यति । म्ना । अभ्यासः पारम्पर्येणावृत्तिः । मनतीति ।
मनादेशः । अम्नासीत् । मम्नौ । म्नेयात् । म्नायात् । दाण् । णकारो
दाणश्च सा चेदिति विशेषणार्थः । प्रणियच्छतीति । यच्छादेशः ।
'नेर्गद—' इति णत्वम् । प्रण्यदादिति । लुङ् । सिच् । 'गातिस्था—'
इति सिचो लुक् । ददौ दाता । देयादिति । 'एर्लिङि' इत्येत्वम्
दास्यति । हृ । ह्वरतीति । तिप् । शप् । गुणः । रपरः । अह्वार्षीदिति
लुङ् । सिच् । 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धिः । अट्
'अस्ति—' इतीट् । जह्वारेति । णल् । वृद्धिः । स्थानिवत्त्वम्[6] । द्वित्वम्
'उरत्' । 'हलादिः शेषः' । अभ्यासस्य[7] जश्त्वम् ।

---

१. षत्वम् C, D₁, N. २. After it—नितष्ठतुः । नितष्ठुः । स्थाता । स्थास्यति B₂. ३. After it—अम्नासीत् । मम्नौ । म्नाता । म्नायात् । म्नेयात् । म्नास्यति अम्नास्यत् B₁, B₂ (मम्नतुः B₂). ४. प्रनियच्छाति । प्रन्यदात् D₁. ५. देयात् दाता । दास्यति B₂. ६. स्थानिवत्त्वात् द्वित्वम् Bc₂. ७. अभ्यास जश्त्वम् Bc₂.

**ऋतश्च संयोगादेर्गुणः ॥७।४।१०॥**

संयोगादेर्ऋदन्तस्य गुणः स्यादवृद्धिनिमित्ते लिटि
े ॥ जह्वरतुः । जह्वरुः । ऋतो भारद्वाजस्येति थलि नेट् ।
ह्वर्थ । क्रादिनियमादिट् । जह्वरिव । जह्वरिम । ह्वर्ता ।

**गुणोर्तिसंयोगाद्योः ॥७।४।२९॥**

अर्तेः संयोगादेर्ऋदन्तस्य गुणः स्याद्यकि असार्वधातुके
ङि च ॥ ह्वर्यात् ।

**ऋद्धनोः स्ये ॥७।२।७०॥**

ऋतो हन्तेश्च परस्य स्यस्य इट् स्यात् ॥ ह्वरिष्यति ।

---

**ऋतश्च** । ननु सर्वत्रात्र साभ्यासमङ्गं न च तत्संयोगादिरभ्यासस्य
ोगविघातकत्वात् । एवं तर्हि प्राक् द्विर्वचनात् संयोगादिरिति
ज्ञास्यते । ननु च वृद्धिविषयेपि पश्चाद्गुणेन भाव्यम् । नैवम् ।
विप्रतिषेधेन वृद्धिरेव भवतीत्येतदभिप्रेत्याह । **अवृद्धिनिमित्ते लिटि**
इति । जह्वरतुरिति । 'उरत्' ।

**गुणः** । ऋ गतिप्रापणयोः । भ्वादिः । ऋ सृ गतौ । ह्वादिः ।
ोरप्यर्तीति छान्दसो लुका निर्देशः । **असार्वधातुके** लिङीति । या
नुवृत्तेर्यकारादावेव स्यात् । तेन स्तीर्षीष्टेत्यादौ न । ह्वर्यादिति ।
रण् रपरः' । अह्वरिष्यत् ।

---

१. B₁, B₂ drop जह्वरतुः. २. Dropped D₄. ३. च गुणः N₁, D₃.
चादावसार्वधातुके B₂. ५. D₁ drops च. ६. स्यप्रत्ययस्य B₂.
After it—अह्वरिष्यत् D₃. ८. ऋतश्चेति Bc₂. ९. Dropped Bc₂.
Dropped Bc₂. ११. परत्वात् D₃. १२. ऋ गतौ Bc₂.

स्वृ शब्दोपतापयोः ॥ [1]स्वरति । [2]स्वरतिसूतीति वेट् । अस्वारीत् । अस्वार्षीत् । [3]स्वर्ता । स्वरिता ॥ स्वरतेः स्यस्य नित्यमिड् वाच्यः । स्वरिष्यति ॥ सृ गतौ । पाघ्राध्मेति धौरादेशः । धावति । [4]सर्तेः शीघ्रगतावेवायमिष्टः । अन्यत्र तु सरति ।

**सर्तिशास्त्यर्तिभ्यश्च ॥३।१।५६॥**

एभ्यः परस्य च्लेरङादेशः स्यात् ॥ पृथक्सूत्रकरणादुभयपदेषु

**ऋदृशोऽङि गुणः ॥७।४।१६॥**

ऋवर्णान्तानां दृशेश्च गुणः स्यादङि ॥ असरत् ॥

---

स्वृ । स्वरति । [5]अस्वारीदिति । 'इट ईटि' इति सलोपः । 'सिचि वृद्धिः—' इति वृद्धिः । अस्वार्षीदिति । वृद्धिः । रपरः । षत्वम् । स्वरतेरिति । [6]वाच्यो व्याख्येय इत्यर्थः । तत्रेदं व्याख्यानं स्वरती[7]त्यस्माद् 'ऋद्धनोः स्ये' इति स्याद्विप्रतिषेधेनेति नित्यं स्यस्येडिति । तथा चोक्तं काशिकायाम् । 'स्वरतेरेतस्माद्विकल्पात् 'ऋद्धनोः स्ये' इत्येतद्भवति 'विप्रतिषेधेन' इति । अस्वरिष्यत् । सृ ।

सर्तीति । पृथगिति । यदि 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' 'सर्तिशास्त्यर्तिभ्यः' इत्येकमेव सूत्रं क्रि[8]येत तर्हि सर्तिप्रभृतिभ्योपि परस्मैपद एव स्यान्नात्मनेपदे । तस्मादेतेभ्यः समारतेत्यादावात्मनेपदेपि यथा स्यादित्येवमर्थं पृथक् सूत्रकरणम् । [9]असरताम् । असरन् ।

---

१. Dropped $D_1$, $D_2$, $D_3$, $N_1$. २. स्वरतीति वेट् $D_3$. ३. सस्वार । सस्वरतुः । स्वर्ता $B_2$. ४. Dropped $N_1$, $D_2$, $D_3$, $D_4$. ५. After it—सिच् $Dc_3$. ६. वाच्ये व्याख्येये $Dc_3$. ७. °तीत्यस्य $Bc_2$. ८. क्रियते $Bc_2$, $Dc_3$. ९. आरताम् । आरन् । $Bc_2$.

ामङ् वेति केचित् । असार्षीत् । सस्रतुः । ससर्थ ।
ान्नेट् । ससृव ।

रिङ् शयग्लिङ्क्षु ॥७।४।२८॥

शे यकि योदावसार्वधातुके लिङि च परे ऋतो
ः स्यात् ॥ रीङं बाधित्वा रिङ्विधिसामर्थ्यादकृतसार्व-
ोरिति न दीर्घः । स्रियात् । सरिष्यति ।[५]

ऋ गतौ प्रापणे च । ऋच्छति ।[६] आरत् । आर्षीत् ।
। उरत् । वृद्धिः । आर ।

---

मिति । तथोक्तं कातन्त्रवृत्तिपञ्जिकायाम् । अर्तिसर्त्तीति
ातुमात्रनिर्देशो तिपि विशेषाविवक्षायां विकरणे न भवति ।
लुग्विकरणयोरेव ग्रहणं शास्तिना साहचर्यादित्याद्युक्त्वा
योः सिजेव आर्षीत् असार्षीदिति एवं व्यवस्थायामुक्तायां
एव उक्तः स्यादित्युक्तम् । ससार । सस्रतुरिति । 'इको
इति यण् । 'द्विर्वचनेचि' इति स्थानिवत्त्वात् साकच्कस्य
उरत् । ससर्थेति । गुणः । सर्ता ।
ङ् शय इति । 'तुदादिभ्यः शः' । 'कृञः श च' । यक् ।
ुके यक्' । रीङं बाधित्वेति । 'रीङृतः' इति । सरिष्यतीति ।
स्ये' इतीट् । असरिष्यत् ।
' । ऋच्छतीति । 'पाघ्राध्मा—' इति ऋच्छादेशः ।
'सर्तिशास्त्यर्तिभ्यश्च' इत्यङ् । 'ऋदृशोऽङि गुणः' । 'आडजादी-
आर्षीदिति । मतान्तरे । सिच् । वृद्धिः । आर्ष्टाम् ।
द्वित्वमिति । 'लिटि धातोरनभ्यासस्य' इत्यनेन । वृद्धिरिति ।
ाति' इत्यनेन ।

---

भ्या° P, Com. २. ससार । सस्रतुः $B_2$, $D_2$. ३. यादावार्ध-
४. योर्दीर्घो न । $D_3$. ५. After it—असरिष्यत् $D_4$. ६. After
ेत् $D_1$, $D_2$, $B_1$; प्राच्छेत् $B_2$. ७. विकरणो $Bc_2$. ८. Drop-
९. °ति केचिदित्युक्तम् । $Bc_2$.

ऋच्छत्यॄताम् ॥७।४।११॥

तौदादिकऋच्छेर्ऋधातोर्ॠतां चोवृद्धिनिमित्ते लि गुणः स्यात् ॥ आरतुः । आरुः ।

इडत्त्यर्तिव्ययतीनाम् ॥७।२।६६॥

अद्ऋव्येञ् एभ्यस्थलो नित्यमिट् स्यात् ॥ आरिथ आरिव । अर्ता । गुणोर्त्तीति गुणः । अर्यात् । अरिष्यति ।

---

ऋच्छ । अर्तेरप्यत्र प्रश्लेषो बहुवचननिर्देशादवसीयत इत्यभि त्याह । तौदादिकऋच्छेर्ऋधातोरिति । अथार्तिप्रश्लेषः किमर्थः आरतुरित्यादिरूपसिद्धये । अन्यथा ऋ अतुस् इति स्थिते विव्यतुरि वत् यणः पूर्वं द्वित्वम् । उरत्वं साङ्गं बाधित्वा सवर्णत्वादन्तरङ्गत्व सवर्णदीर्घः । तत्र यद्यभ्यासग्रहणे ग्रहः स्यात् उरत्वं हलादिः शे अत आदेः आतो लोपः आरुरिति स्यात् । अथ धातुग्रहणाद्ग्रहः त ऋदन्तत्वाद् गुणे अरतुरिति स्यात् । ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु ऋ गतौ प्रापणे च । ॠकारान्ताः कॄ विक्षेपे इत्यादयः । अत्र वृद्धिविष पूर्वविप्रतिषेधेन वृद्धिरेव भवतीत्यभिप्रेत्याह । अवृद्धिनिमित्तेति वृद्धेर्निमित्तं वृद्धिनिमित्तम् । यस्मिन् लिटि परतो वृद्धिर्न प्राप्नोति वर्जयित्वान्यस्मिन् लिटि गुणः स्यादित्यर्थः । अयं भावः । वृद्धिप्रा वृद्धिरेव पूर्वविप्रतिषेधेनेष्यते । यत्र वृद्धिर्न प्राप्नोति तत्र गुण इति ।

इट् इति । अद भक्षणे । ऋ गतौ प्रापणे च । ऋ सृ गतौ व्येञ् संवरणे । आरिथेति । ऋादिनियमादिट् । अरिष्यतीति 'ऋद्धनोः स्ये' इतीट् ।

---

१. च वृद्धि $D_2$, $D_3$, $D_4$, P, C, $B_1$, $B_2$. २. आरिव । आरिम । I $D_3$. ३. After it—आरिष्यत् $D_4$. ४. वर्णत्वादन्त° $Dc_3$. ५. यद्यभ्या $Dc_1$. ६. °ग्रहणे ग्रहः $Dc_3$. ७. °ग्रहाद्ग° $Bc_2$. ८. इत्याद्याः । B ९. एव dropped $Bc_2$. १०. Dropped $Bc_2$; ऋ dropped D

श्रु श्रवणे ।

**श्रुवः शृ च ॥३।१।७४॥**

श्रुवः श्नुप्रत्ययः स्यात् कर्तरि सार्वधातुके परे शृभावश्च ।
ो । शृणुतः ।

**हुश्नुवोः सार्वधातुके ॥६।४।८७॥**

हुश्नुवोरनेकाचोरसंयोगपूर्वोवर्णस्य यण् स्यादचि

---

श्रु ।

श्रुवः । शपि प्राप्ते श्नुर्विधीयते । श्रुव इति । प्रत्यय-
ञ्चमी यदा श्वादेशेन संबध्यते तदार्थात् षष्ठी संपद्यते ।
। प्रत्ययान्तरे शृभावस्यासंभवं दर्शयति । शृणोतीति । तिप् ।
श इत् । श्नोर्ङित्त्वाद्गुणाभावः । णत्वम् । श्नोस्तिपि गुणः ।
इति । 'सार्वधातुकमपित्' इति ङित्त्वम् । 'क्ङिति च'
ानिषेधः ।

हुश्नुवोः । अनेकाचोरिति । अङ्गयोरिति शेषः । ओरित्यनु-
असंयोगपूर्वस्योकारविशेषणार्थम् । अन्यथा हुश्नुवोरेव विशेषणं
ततश्च तक्ष्णुवन्ति इत्यत्रैव निषेधः स्यात् । राध्नुवन्तीत्यत्र न
। उर्व्वा जुह्वतीत्यत्र यणादेशो न स्यात् । तस्मादोरित्यनु-
म् । तस्य च विशेषणमसंयोगपूर्वस्येति तदेतदभिप्रेत्याह । **असंयोग-
स्येति** । असंयोगपूर्वो य उवर्णस्तस्येत्यर्थः । हुश्नुवोरिति किम् ।
। इदमेव श्नुग्रहणं ज्ञापयति भाषायां यङ्लुगस्तीति ।

---

ेfore श्रुवः शृ च $B_1$ has—श्रुवो वा शृ च । श्रुवो धातोः श्नुप्रत्ययो
। पक्षे कर्तरि शपिति शप् । यत्र शप् तत्र शृ आदेशो वा । शरति ।
कर्तरि सार्वधातुके परे शृभावश्च । शृणोति. २. परे Dropped C.
३. ३. यद्यत्रादेशेन । $Bc_2$. ४. श्नु इत्यत्र ङित्त्वा° $Bc_2$.
न्ती° $Bc_2$.

तुके। शृण्वन्ति।

**लोपश्चास्यान्यतरस्यां म्वोः ॥६।४।१०७॥**

असंयोगपूर्वस्य प्रत्ययोकारस्य लोपो वा स्यान्म्वोः ॥ शृण्वः। शृणुवः। शृण्मः। शृणुमः। परत्वाद्गुणेन लोपो। शृणोमि। शृणुयात्।[1] पररूपत्वम्। शृणुयुः ॥[2]

**उतश्च प्रत्ययादसंयोगपूर्वात् ॥६।४।१०६॥**

असंयोगपूर्वात् प्रत्ययस्योकारात् परस्य हेर्लुक् स्यात् ॥ गुणावादेशौ। शृणवानि। शृणवाव। शृणवाम। अशृणव।

---

हि 'छन्दस्युभयथा' इत्यार्धधातुकत्वादेव यणोप्रसङ्गः।

यङ्लुगन्तादन्यदुवर्णान्तमनेकाच असंयोगपूर्वं सार्वधातुकं ह्रणमस्ति। अरुवन्निति तु नानेकाच्। 'असिद्धवदत्र—' द्धत्वात्।

लोपः। असंयोगपूर्वस्येति किम्। तक्ष्णुवः। तक्ष्णुमः। स्येति किम्। युवः। युमः। पररूपत्वमिति। 'उस्यपदान्तात्' शृणुयुरिति। 'जुसि च' इति गुणो न। यासुटो ङित्त्वात्।

उतश्च। असंयोगपूर्वस्येति किम्। तक्ष्णुहि। गुणावादेशाविति। सार्वधातुकार्धधातुकयोः' इति। अवादेशः। 'एचोयवायावः'। नीति। 'मेर्निः'। 'आडुत्तमस्य' इत्यादि। शृणवाव। मेति। 'लोटो लङ्वत्' इति सलोपः। अशृणोत्। अशृण्व।

---

After it—यासुटो ङित्त्वान्न गुणः B2. २. After it—शृणोतु ३. प्रत्ययोकारात् B2, D1, D3. ४. °ह्न्यत्र Dc3. ५. सार्वधातुके

ुव । अशृणम । अशृणुम । अश्रौषीत् ।[१] शुश्राव । शुश्रोथ ।

। श्रूयात् ।

षु प्रसवे ।

**स्तुसुधूञ्भ्यः परस्मैपदेषु ॥७।२।७२॥**

एभ्यः सिच इट् स्यात् परस्मैपदेषु ॥ असावीत् ।[४]

ाव । रुदुसुनुधातूनां लिटं विना इड् वेति केचित् ।

। सविता ।

स्रु गतौ ।

---

वेति । लङ् वस् । उलोपो वा । 'नित्यं ङितः' इति सलोपः ।

ीदिति । लुङ् । च्लिँ । सिच् । वृद्धिः । इलोपः । इट् । षत्वम् ।

शुश्राव । शुश्रुवतुः । शुश्रोथेति । थल् । गुणः । द्वित्वम् ।

दिः शेषः' । क्रादिनियमान्नेट् । श्रूयादिति । 'अकृत्सार्वधातुकयोः

ीर्घः । श्रोष्यति ।

षु । सवति ।

**स्तुसु** । ष्टुञ् स्तुतौ । षुञ् अभिषवे । षु प्रसवे । धूञ् कम्पने ।

ीदिति । 'सिचि वृद्धिः—' इति वृद्धिः । सुषाव । सुषविथ ।

। **सुषुविवेति** । क्रादिनियमादिट् । रुदु इति । रु शब्दे । दु

षु प्रसवे । षुञ् अभिषवे । णु स्तुतौ । **केचिदिति** । **हेमसूर्या-**

सूयात् । सविष्यति । सोष्यति ।

स्रु । स्रवति ।

---

३1 has अश्रौष्टाम् । शुश्राव after it ; D1 drops शुश्राव; अश्रौषीत् ।
ाम् । अश्रौषुः । शुश्राव । शुश्रुवतुः । शुश्रुव । श्रूयात् । श्रोता । श्रोष्यति ।
श्रौषीत् । अश्रौष्टाम् । शुश्राव । शुश्रुवतुः । शुश्रोथ । शुश्रुव । शुश्रुम ।
D2. २. Dropped N, D3 ; After it—शुश्रुवतुः । शुश्रुवुः । D4.
ोप्रसवे B2, D4. ४. After it–सुषाव D4, B1, P, C. ५. B1 has
ः it—सुषुवतुः । सुषुवुः । सुषविथ । सुषोथ । सुषुवथुः । सुषुव । सुषाव ।
ःnd after it—सुषुविम. ६. After it—सोष्यति । सविष्यति B2.
। Bc2. ८. Dropped Bc2.

**णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ॥३।१।४८॥**

ण्यन्तात् श्र्यादिभ्यश्च्लेश्चङादेशः स्यात् कर्त्रर्थे लुङि ॥
( । उवङादेशः । असुस्रुवत् । 'ऋतो भारद्वाज—' इति
्द् ऋादिसूत्रेणापोद्यते । सुस्रोथ । सुस्रुव ।[4] स्रूयात् ॥

द्रु गतौ । अदावीत् । अदौषीत् ।[5] दुदविथ । दुदोथ ।
तरे नित्यमिट् ।[6] दुदुविव ।[7] दोता । मतान्तरे इड् वा । दविता ॥

---

णिश्रि । सिजपवादश्चङ् विधीयते । श्रिञ् सेवायाम् । द्रु गतौ ।
ा । चङितिङकारो गुणनिषेधार्थः[11] । चकारश्चङीति विशेषणार्थः ।
मेति । 'चङि' इति । उवङादेश इति । 'अचि श्नुधातु—'
असुस्रुवदिति । लुङ् । तिप् । च्लिः । 'हलादिः शेषः' । 'इतश्च'
ारलोपः । असुस्रु अत् इति स्थिते तिबाश्रयो लघूपधगुणः प्राप्तः
ाय उवङ् । तत्रान्तरङ्गत्वादुवङ् । कर्तरि किम् । अकारिषातां
इेवदत्तेन । कर्तरीति 'अचः कर्मकर्तरि' इत्यचः प्रागनुवर्तते ।
्वताम् । असुस्रुवन् । सुस्राव । सुस्रोथेति । थलि गुणः ।
। स्रूयादिति । 'अकृत्सार्वधातुकयोः' इति दीर्घः । स्रोष्यति ।
द्रु । दवति । अदावीत् । अदौषीदिति । 'स्नुक्रमोरनात्मनेपदनिमित्ते' इति
'सिचि वृद्धिः—' इति वृद्धिः । इट्पक्षे 'इट ईटि' इति
ः । अन्यत्र सस्य षः । दुदविथ । दुदोथेति । थल् । गुणः ।
ड् । 'ऋतो भारद्वाज—' इति पक्षे इट् । मतान्तरे दुदविथेति
मेट् । हेमसूर्यादिमते स्नुक्रमोरनात्मनेपदनिमित्ते लिटं विनेत्युक्तत्वादिति
। दोता । दविता । दूयात् । दविष्यति । दोष्यति ।

---

लुङि परे $D_3$. २. भारद्वाजस्य—$D_1$. ३. °पोह्यते $B_2$. ४. After
स्रुम $D_3$. ५. Before it—दविता $B_2$. ६. After it—अदौष्टाम् ।
: । दुदाव । दुदविथ । मतान्तरे नित्यमिट् । दुदुविव । दोता । दूयात् ।
रे इड् वा । द्रु गतौ &c. $D_4$. ७. After it—दुदविथ $D_3$. ८. C has
रे इड् वा after दविता. ९. After it—दुदुविम । C; दोता । दोष्यति ।
। $D_2$. १०. Dropped $D_1$, $D_3$, N, $B_2$; दोता । दविता $D_2$.
निषेधार्थम् $Dc_1$, $Dc_4$; ओर्गुणप्रतिषेधार्थः $Dc_3$. १२. °श्रये $Bc_2$, $Dc_3$.
ड् $Bc_2$. १४. मतान्तरे इति $Bc_2$. १५. दुदविथेत्यत्र नित्यमिट् $Dc_1$, $Dc_4$.

द्रु गतौ । [1] 'णिश्रि—' इति चङ् । अदुद्रुवत् । दुद्रोथ ।
। द्रोता ।

गम्लृ गतौ । '[2] इषुगमि—' इति छः । गच्छति ॥

**पुषादिद्युताद्यॢदितः परस्मैपदेषु ॥३।१।५५॥**

श्यन्विकरणपुषादेर्द्युतादेर्लृदितश्च परस्य च्लेरङ् स्यात्

---

द्रु । द्रवति । अदुद्रुवदिति । 'चङि' इति द्वित्वम् । 'हलादिः
। 'अचि श्नुधातु—' इत्युवङ् । दुद्राव । दुद्रोथ । दुद्रुवेति ।
यमान्नेट् । द्रोता । द्रूयते । द्रोष्यति ।

गम्लृ । गच्छतीति । लट् । तिप् । शप् । 'इषुगमि—' इति छः ।

पुषादि । पुषो हि भ्वादौ पठ्यते दिवादौ च । क्र्यादौ च । अत्र
को यदि गृह्यते तर्हि पुषाद्यनन्तरं द्युतादीनां पाठात् पृथग्
कुर्यात् । तेनैव सिद्धत्वात् । क्र्याद्यन्तर्गणोपि न । तत्र हि
एव पठ्यन्ते । यदि तेभिमतास्तर्हि लृदित एव तान् कुर्यादिति ।
ारिशेष्याद्दिवादिक एव । न हि स लृदित् कर्तुं शक्यते तत्रो-
भावे तयोरभावः स्यादित्येतन्मनसि कृत्वाह । श्यन्विकरण-
ेति ।

: शुषिस्तुषिश्चैव दुष्श्लिषी शकि ञिष्विदा ।
धिक्षुधी शुधिः षिधूरधृनश्यतृपो द्रुपद्रुही अपि ॥१॥
: ष्णुहिः ष्णिहिः शम् तम् दम् श्रम् भ्रम् क्षम् क्लमो मदी ।
र् यस् जस् तस् दसु वसु व्युष् प्लुष् बिस् कुसि बुस् मुसः ॥२॥

---

ter it— द्रवति $B_2$. २. इषुगमियमां छः $D_1$, $B_2$. ३. ऋदितः P.
रणे C; °विकरणस्य $B_2$. ५. परस्मैपदेषु च्लेरङादेशः स्यात् $D_1$.
$Bc_2$. ७. गम्लृ गतौ । 'पाघ्रा–' इति गच्छादेशः $Dc_3$. ८. पुषादि $Bc_2$,
९. तत्रोदितकार्ये भाव्ये तयोरभावेः स्यात् $Bc_2$, $Dc_3$ ( स्यात्
। $Dc_3$ ).
: [ प्र. कौ. ]

परस्मैपदेषु । अनङीत्युक्तेरुपधालोपो न । अगमत् । जगाम 'गमहनजन—' इत्युपधालोपः । तस्य 'द्विर्वचनेचि' इ स्थानिवत्त्वात् साच्कस्य द्वित्वम् । जग्मतुः । जग्मुः । जगमिथ जगन्थ । जग्मिव । जग्मिम ।

**गमेरिट् परस्मैपदेषु ॥७।२।५८॥**

गमेः सकारादेरार्धधातुकस्येट् स्यात् परस्मैपदेषु गमिष्यति । परस्मैपदग्रहणं तङानयोरभावं लक्षयति । तेनासत्या

---

मसीलुठी लुटिं केचित् उच्भृश्भ्रंशुवृशकृशः ।
तृषि हृष् रुष् रिष डिपः कुप्गुपौ युप् रुपोपि लुप् ॥३॥
लुभक्षुभौ णभतुभी क्लिदमदा क्ष्विद् ऋधुगृधु ।
पञ्चषष्टिरिमे ज्ञेयाः पुषाद्या अङ्विधौ बुधैः ॥४॥
एकोनविंशतिः केचिद्वदन्त्येतान् शमावधीन् ।
द्युतश्विताञिमिदुञ्विदौ क्ष्विद्रुचघुट् रुट्लुटी अपि ॥५॥
शुभिक्षुभी णभतुभी स्रंसुभ्रंसू तथा परौ ।
ध्वंसुभ्रंशू तथा भ्लंसु ध्वस् वृतौ वृध् शृधावपि ॥६॥
स्यन्दू कृपू द्युताद्याः स्युश्चतुर्विंशतिरत्र तु ॥७॥

अनङीत्युक्तेरिति । 'गमहनजनखनघसां लोपः क्ङित्यनङि' इत्यत्र जगामेति । णल् । 'अत उपधायाः' इति वृद्धिः । द्वित्वम् । चुत्वम् जगमिथ । जगन्थेति । थल् । 'उपदेशेऽत्वतः' इतीडभावः । 'ऋ भारद्वाज—' इति पक्षे इट् । इडभावे 'नश्चापदान्त—' इत्यनुस्वार 'अनुस्वारस्य ययि परसवर्णः' ।

गमेः । गमेरित्यादेशानादेशयोर्ग्रहणमविशेषात् । गमिष्यती लृट् । स्यः । षत्वम् । परस्मैपदग्रहणमित्यादि । तेनासत्य

---

१. परस्मैपदेषु dropped P. २. Dropped $D_1$. ३. 'गमहन—' ] ४. Dropped $D_1$. ५. Dropped $D_2$. ६. जग्मिम dropped N, $D_3$, ] ७. °स्येडागमः $B_2$. ८. गम्यात् । गन्ता । गमिष्यति $B_2$. ९. °ति धा $Dc_1$, $Dc_3$, $Dc_4$. १०. द्विः $Bc_2$. ११. वेट् $Bc_2$.

स्मैपदे इट् स्यात्[१] । आत्मनेपदयोग्योद्वेति केचित् ।[२]

सृप्लृ गतौ । सर्पति । लृदित्वादङ् । असृपत् । 'कृषमृश—' । वा सिच् । 'अनुदात्तस्य च—' इत्यम् वा । असार्प्सीत्[४] । ाप्सीत् । ससर्पिथ । ससृपिव ।[६] स्रप्ता । सर्प्ता ।।[७]

स्कन्दिर् गतिशोषणयोः ।

---

पि परस्मैपदे अथवान्यस्मिन् सकारादौ प्रत्यये कृति परे इट् दित्यर्थः । तथा चोक्तं काशिकायाम् । 'आत्मनेपदसमानस्थस्य रयमिडागमो नेष्यते । अन्यत्र सर्वत्रैवेष्यते । कृत्यपि भवति ःमैपदलुकि च । संजिगमिषिता व्याकरणस्य जिगमिषत्वमिति । शेषकारस्य पुनरिदं दर्शनं गम्युपलक्षणार्थं[१०] परस्मैपदग्रहणम् । मैपदेषु यो गमिरुपलक्षितस्तस्मात् सकारादेरार्धधातुकस्येड् तीति । तन्मतेन संजिगंसिता व्याकरणस्येति । भवितव्यमिति । मनेपदयोग्यादिति । अर्वाचीनमतमेतत् । अगमिष्यत् ।

सृप्लृ । सर्पतीति । लट् । शप् । गुणः । रपरः । लृदित्वाद- ते । 'पुषादि—' इति । असृपदिति । अट् । 'इतश्च' इतीकार ः । असार्प्सीदिति । अमभावे रूपम् । 'वदव्रज—' इति वृद्धिः । स्त—' इतीट् । अस्राप्सीदिति । अमृपक्षे रूपम्[११] । वृद्धिः । र्प । ससृपतुः । ससर्पिथ । ससृपिवेति । क्रादिनियमादिट् । सर्प्ता । ति । 'अनुदात्तस्य—' इत्यम् वा । सृप्यात् । सर्प्स्यति । यति । अस्रप्स्यत् । असर्प्स्यत् ।

स्कन्दिर् ।

---

. After it—जिगमिषुः $B_2$. २. °योगाद्वे° $D_4$, P, C, $B_1$, $B_2$ N. After it—जिगमिषुः $D_4$. ४. अस्राप्सीत् । असार्प्सीत् C. ५. Before असृपत् । ससर्प $D_2$. ६. After it—ससृपिम $D_4$. ७. After सर्प्स्यति । स्रप्स्यति $B_2$. ८. Dropped $Bc_2$. ९. एव dropped १०. °लक्षणं $Bc_2$ ११. Dropped $Bc_2$.

वेः स्कन्देरनिष्ठायाम् ॥८।३।७३॥

वेः परस्य स्कन्देः षत्वं वा स्यान्न तु निष्ठायाम् ।[2]
कन्दति । विष्कन्दति । निष्ठायां तु

परेश्च ॥८।३।७४॥

अस्माद् स्कन्देर्वा षत्वम् । परिस्कन्दति । परिष्कन्दति ।
ायामपि वा षत्वम् ।[6] परिष्कण्णः । परिस्कन्नः । ईरित्वादङ्
। अस्कदत् । अस्कान्त्सीत् । अस्कान्ताम् ।[9] चस्कन्दिथ ।
। झरि सवर्णे । चस्कन्थ । स्कंद्यात् ।

---

वेः । विष्कन्दति । विस्कन्दतीति । लट् । शप् । विस्कन्न इति ।
ष्ठा ' इति क्तः । ' रदाभ्याम्— ' इति तकारदकारयोर्नत्वे
निदिताम्— ' इति ल्लोपः ।

परेः । निष्ठायामपि वा षत्वमिति । पृथग्योगकरणसामर्थ्या-
ते भावः । स्कन्देत् । अस्कान्त्सीत् । चस्कन्द । चस्कन्दतुः ।
कन्दिथेति । ' ऋतो भारद्वाज— ' इति वेट् । स्कन्ता ।
द्यादिति । ' अनिदिताम्— ' इति ल्लोपः[12] । स्कन्त्स्यति ।
कन्त्स्यत् ।

---

. अनिष्ठायां षत्वं वा स्यात् $D_1$. २. विष्कन्दति । विस्कन्दति $D_4$, N.
षत्वं वा स्यात् $D_3$. ४. परिष्कन्दति । परिस्कन्दति N. ५. वा निष्ठायामपि
म् । $D_1$. ६. After it—अनिष्ठायामिति योगविभागसामर्थ्यादनुवृत्तेः
. ७. परिष्कन्नः $B_2$. ८. From इरित्वात् to अस्कान्ताम् dropped
; N and $D_3$ have for it only अस्कान्त्सीत् । अस्कदत् ।; च्लेरङ् वा
. ९. After it—अस्कान्त्सुः C. १०. स्कन्ता । स्कन्द्यात् । स्कन्त्स्यति ।
कन्त्स्यत् $D_1$, $B_2$; झरो झरि सवर्णे । स्कन्ता । स्कद्यात् । $N_1$.
. नलोपः $Dc_3$. १२. नलोपः $Dc_3$.

तॄ प्लवनतरणयोः । ऋत इदितीत्वे प्राप्ते इत्वोत्वाभ्या
ो विप्रतिषेधेनेति गुणः । तरति । अतारीत् । ऋच्छत्यॄता-
ुणः । गुणाकारत्वेपि तॄफलभजेत्येत्वम् । तेरतुः । तेरुः ।
ःवात् सर्वत्रेट् । तेरिथ । तेरिवे ।

**वॄतो वा ॥७।२।३८॥**

वृङ्वृञ्भ्यामॄदन्ताच्च इटो दीर्घो[४] वा स्यान्न तु लिटि[५] ॥
। तरीता । लिटि तु । तेरिम ।

---

' । सेट् । तरतीत्यत्रान्तरङ्गत्वादित्वं स्यादित्याशङ्क्याह ।
तीत्वे इत्यादि । तरेत् । अतारीदिति । लुङ् । सिच् 'आर्ध-
ाड् वलादेः' । 'सिचि वृद्धिः—' इति वृद्धिः । अतारिष्टाम् ।
ः । ततार । गुणाकारत्वे इति । गुणाकारत्वे सति न
:—' इत्येत्वाभ्यासलोपनिषेधे प्राप्तेपीत्यर्थः ।

तः । वॄत इति किं वॄ वरणे अस्यैव ग्रहणमथवा ॠकारा-
ास्य ॠकारान्तानां च अथवा वृङ्वृञोश्चान्येषामॄकारान्ता-
वृङ्वृञोश्च ॠकारान्ताम् । तत्र यदि प्रथमः पक्षः स्यात्
इत्येत्वं निर्देशं कुर्यात् यथा 'ग्रो यङि' इति । अथ
अस्य पृथग् ग्रहणं न कुर्यात् । ऋत इत्यनेनैव सिद्धत्वात् ।
यः 'ॠतश्च' इत्यत्र पुनर् ऋशब्देन ह्रस्वग्रहणं न कुर्यात् ।
वर्तिष्यते । अथ चतुर्थः वृङ्वृञोः पृथग् ग्रहणं न कुर्यात् ।
पारिशेष्यात् पञ्चमोत्राश्रितः पक्ष इति मत्वाह । वृङ्वृञ्-
ाच्चेति । तरिता । तरीतेति । लुट् । तासिः । इट् । गुणः ।
ारिमेति । 'ऋच्छ—' इति गुणः । रपरः[६] । द्वित्वम् ।
—' इत्येत्वाभ्यासलोपौ ।

---

has भजतः after it; $D_3$ has भवतः after it. २. Dropped
$D_4$; before it—स्कन्त्ता $D_4$. ३. After it—तेरिम $D_3$.
: $B_1$, $D_2$, $N_1$. ५. $B_1$, $D_2$, $N_1$ have तेरिव before it;
तेरिम dropped $D_3$. ६. रपरत्वम् । 'तॄफल—' $Dc_3$.

**सिचि च परस्मैपदेषु ॥७।२।४०॥**

वृङ्वृञ्भ्यामॄदन्ताच्च इटो दीर्घो न स्यात् सिचि परस्मैपदेषु । अतारिष्टाम् ।

**न लिङि ॥७।२।३९॥**

वॄत इटो लिङि न दीर्घः । तरिषीष्ट । यासुटः कित्त्वान्न गुणः ।

**ॠत इद्धातोः ॥७।१।१००॥**

ॠदन्तस्य धातोरिकारान्तादेशः स्यात् । रपरत्वम् । हलि चेति दीर्घः । तीर्यात् । तरिष्यति । तरीष्यति ।

षञ्ज सङ्गे ।

---

**सिचि** । अतारिष्टामिति । 'तस्थस्थमिपाम्—' इति तसस्ताम् । इट् । सिच् । वृद्धिः ।

**न लिङि** । तरिषीष्टेति । आशीर्लिङ् । कर्मण्यात्मनेपदम् । 'लिङः सीयुट्' । इट् । 'सुट्तिथोः' । षत्वम् । ष्टुत्वम् । **यासुटः किच्त्वादिति** । तॄयात् इति स्थिते 'किदाशिषि' इत्यनेन यासुटः किच्त्वात् । 'क्ङिति च' इति **गुणनिषेध** इत्यर्थः ।

**ॠतः** । धातोः किम् । मातॄणाम् । ननु चात्र लाक्षणिकत्वादेव न स्यात् । नैवम् । लाक्षणिकस्याप्यत्रेष्यते चिकीर्षतीति । तरिष्यति । तरीष्यति । 'वॄतो वा' इति वा दीर्घः । अतरिष्यत् । अतरीष्यत् ।

**षञ्ज** । इत आरभ्य त्रयोनिटः ।

---

१. न दीर्घः D4. २. वृङ्वृञ्भ्यामॄदन्ताच D3. ३. षत्वष्टुत्वे Dc3.

दंशसञ्जस्वञ्जां शपि ॥६।४।२५॥

ां न्लोपः स्याच्छपि । षत्वम् । निषजति । अटोन्तरेपि
द्धिः । 'चोः कुः' । अनुस्वारपरसवर्णौ । न्यषाङ्क्षीत् ।
न्तरेपि अभ्यासस्य च षत्वम् । निषषञ्ज । ससञ्जतुः ।
ससाञ्जिथ । ससङ्क्थ । सङ्क्ता । सज्यात् ।
॥

। दंश दशने । षञ्ज सङ्गे । स्वञ्ज परिष्वङ्गे । षत्वमिति ।
सुनोति—' इत्यनेन । निषजतीति । 'धात्वादेः षः सः' ।
षत्वमिति । 'प्राक्सितादड्व्यवायेपि' इति । वृद्धिरिति ।
ा । न्यषाङ्क्षीदिति । लुङ् । तिप् । सिच् । अट् । 'इतश्च' ।
षाङ्क्ताम् । 'झलो झलि' इति सलोपः । न्यषाङ्क्षुः ।
ते । 'स्थादिष्वभ्यास—' इत्यनेन । निषषञ्जेति ।
ससञ्जतुरिति । संयोगाल्लिटो वा किर्त्वमिति केचित् ।
। ससङ्क्थेति । 'ऋतो भारद्वाज—' इति वेट् ।
। लुट् । तासिः । 'चोः कुः ।' अनुस्वारपरसवर्णौ ।
। 'अनिदिताम्—' इति न्लोपः । सङ्क्ष्यतीति । लृट् ।
ः कुः' । षत्वम् । अनुस्वारपरसवर्णौ । कषयोगे क्षः ।
।

?; D4. २. स्वञ्जां N1, D4. ३. नलोपः C, D2, D3, D4. पि B1, D3, D4; अडन्तरेपि D1, D2. ५. Before it— D3. ६. After it—असाङ्क्ताम् B1; न्यषाङ्क्ताम् B2, C. सस्य च D1; अभ्यासान्तरेण्यभ्यासस्य षत्वम् D3. ८. After D2. ९. ससजतुः for it D3 १०. After it—ससञ्जथुः । . ११. After it—असङ्क्ष्यत् D4. १२. स्वञ्ज Bc2, Dc3. ीति Dc3. १४. अडन्तरेपि Bc2 ; अटान्तरेपि Dc3. १५. सिचो १६. संयोगात् परो Dc3. १७. नस्य लोपः Bc2 ; नलोपः Dc3. Bc2.

दृशिर् प्रेक्षणे । पश्यति ।

**न दृशः ॥३।१।४७॥**

दृशश्च्लेः क्सो न स्यात् ॥ इरित्त्वादङ् वा । ऋदृशं
गुणः । अदर्शत् । सिच्पक्षे ।

**सृजिदृशोर्झल्यमकिति ॥६।१।५८॥**

अनयोरमागमः स्यात् झलादावकिति[2] ॥ वृद्धिः । व्रश्चा
षत्वम् । क[4]त्वम् । अद्राक्षीत् । अद्राष्टाम् ।

**विभाषा सृजिदृशोः ॥७।२।६५॥**

आ[5]भ्यां थल इड्वा स्यात् ॥ ददर्शिथ । दद्रष्ठ ।[6]

---

दृशिर् । पश्यतीति । 'पाघ्राध्मा—' इति पश्यादेर
**इरित्त्वादिति** । 'इरितो वा' इत्यनेन । **अदर्शादिति** । 'इतः
अद् । अदर्शताम् ।

**सृजि** । लघूपधगुणापवादोयमम् । **वृद्धिरिति** । अमि कृते ह
लक्षणा वृद्धिः । पूर्वं त्वमा बाध्यते । झलि किम् । सर्ज
दर्शनम् । अकितीति किम् । सृष्टः । दृष्टः । धातोः स्वरूपग्रहे तत
कार्यविज्ञानादिह न भवति । देवदृग्भ्याम् । रज्जु[7]सृग्भ्या
**अद्राष्टामिति** । तसस्ताम् । अम् । वृद्धिः । 'झलो झलि'
सलोपः । षत्वम् । ष्टुत्वम् । अद्राक्षुः । ददर्श ।

**विभाषा** । **ददर्शिथ** । **दद्रष्ठेति** । अम् । षत्वम् । ष्टु
द्रष्टा । दृश्यात् । द्रक्ष्यति । अद्रक्ष्यत् ।

---

१. क्सादेशः C, $D_1$, $D_4$. २. °ङीति $N_1$, $D_4$. ३. After it—
४. कत्वम् dropped P, $B_1$. ५. आभ्यां परस्य $D_3$. ६. After
द्रष्टा । द्रक्ष्यति $B_2$. ७. रज्जुसृड्भ्याम् $Bc_2$.

दंश दशने । दशति । अदाङ्क्षीत् ।[1]

किंत[2] निवासे रोगापनयने[3] च ।

**गुप्तिज्किद्भ्यः सन् ॥३।१।५॥**

एभ्यः सन् प्रत्ययः स्यात् ॥[4]

**सन्यङोः ॥६।१।९॥**

ानभ्यासस्य धात्ववयवस्यैकाचो द्वे स्तः सनि यङि च[6] परे ॥

---

दश । दशतीति । 'दंशसञ्ज—' इति नलोपः । अदाङ्क्षीदिति ।
वृद्धिः—' । 'व्रश्च—' इति षत्वम् । कत्वम् । अनुस्वार-
गौ । इट् । अट् । ददंश । ददंशिथ । ददंष्ठ । दष्टा । दश्यात् ।
ते । अदङ्क्ष्यत् ।

किंत । द्वौ सेट्कौ ।

ुप्ति । गुप गोपने । तिज निशाने क्षमायां च । कित
रोगापनयने च ।

ान्यङोः । ननु च सन्यङोरित्यस्य सनि यङि चेति व्याख्या-
नम् । एवं हि व्याख्यायमाने प्रतीषिषतीति न सिध्येत् ।
सनो निमित्तत्वात् द्वित्वं न स्यात् । भाष्यं च सनो द्वित्वेन[10] ।
व्याख्याने एष[11] दोषो न । तत्र हि सन्नन्तस्य यङन्तस्येत्यर्थः ।
ादपि सिध्यति । अत एव वृत्तिकृतोक्तम्[12] । षष्ठ्यन्तमेत-
न्यासकारेण चैतदेव विवृतम् । सत्यम् । सप्तमीव्याख्यानेपि
य यङन्तस्य द्वित्वं स्यात् सन्यङोरकारोच्चारणात्

---

 has दश्यात् after it. २. किति D2, D3, P, C, B1, B2.
as संशये before it ; रोगापनयने निवासे च D2. ४. B1,
, D4 have स्वार्थे after it. ५. अनभ्यासधात्व° D1. ६. B1
t ; सनि यङि च परे dropped D3. ७. ईट् Dc3. ८. इतो द्वौ
 शातने Bc2. १०. द्वित्वम् Bc2, Dc1, Dc4. ११ चैष Dc3,
कारेणोक्तम् Dc3.

धातोरित्यविहितत्वात् सनोत्र नार्धधातुकत्वं तेनेड्गुणौ न '[3]सनाद्यन्ता—' इति धातुत्वात् शप्तिबादि ॥

**पूर्ववत् सनः ॥१।३।६२॥**

पूर्वधातुवत् सन्नन्तादपि पदं स्यात्

---

ज्ञापकात् । अत एवाग्रे वक्ष्यति शपोकारेण सिद्धे सन्यङ ग्रहणमजादेरिति द्वित्वार्थमिति । अथवा सन्यङोरिति सत्स सन्प्रदेशेषु सत्सप्तमीति 'सन्यतः' इत्यादिना ज्ञापितं परसप्तमीपक्षे प्रतीषिषतीत्यत्रेत्वमपि न स्यात् समुदायस्य स्वात् सन्परत्वाभावात् । तथा च **पदमञ्जर्यां** सतौ सूत्रेभिहितम् । प्रतीषिषतीत्यत्र सन एव द्विर्वचनमिति भावादयं नियमो न प्रवर्तयिष्यते सन्यत इतीत्वमपि तर्हि न समुदायस्य सद्रूपत्वादस्य च सन्परत्वाभावात् । सन्प्रदेशेषु सप्तमी विज्ञेयति ।

पूर्ववत् । **पूर्वधातुवदिति** सनो यः पूर्वधातुस्तेन धातुवत् पदं स्यात् । आत्मनेपदं स्यादित्यर्थः । येन नि स्मादात्मनेपदं तेनैव सन्नन्तादपीति भावः । आस्ते शेते ङित्त्वं चात्मनेपदनिमित्तमत्र तत् सन्नन्तादपि । आ शिशयिषते । 'नेर्विशः' । निविविक्षते । इह न । मुमूर्षति । न ह्यत्र शदिम्रियतिमात्रमात्मनेपदनिमित्तम् । शिदाद्यपि । यस्य च पूर्वत्रैवं निमित्तत्वं निषिध्यते त

---

१. D₁ drops it. २. 'सनाद्यन्ता धातवः' इति धातुसंज्ञा । ३. °तिबादिः D₄. ४. सप्तमीयम् । Bc₂, Dc₃. ५. सत्सप्तम इति । Bc₂. ६. पूर्वमेव Bc₂, Dc₃.

दे: क्रमात् निन्दाक्षमारुग्जयेषु सन्निष्यते । नान्यत्र ।
केत्साति । कित: संदेहे च । विचिकित्साति । अचिकित्सीत् ।[२]
केत्सामास ।[३]

**ऋतेरीयङ् ॥३।१।२९॥**

ऋति: सौत्रो धातुर्घृणार्थ: । तस्मादीयङ् प्रत्ययः स्यात् ॥

---

मित्तम् । अनुचिकीर्षति । पराचिकीर्षति । इह जुगुप्सते
सते इत्यादौ 'अनुदात्तङित—' इत्येव तङ् । अवयवे कृतं
समुदायस्य विशेषकं भवतीति । इह त्वस्य सूत्रस्य पाठः
सङ्गादिति ज्ञेयम् । गुपादेरित्यादि । रुग्जयेति प्रायिकमन्यत्रापि
त् । 'क्षेत्रियच् परक्षेत्रे चिकित्स्य:' । अत्र चिकित्स्यो नाद्यो
थोपि निन्दाद्यर्थाभावे । चुरादित्वाण्णिच् । गोपायति । तेजयति ।
यति । चिकित्सतीति । द्वित्वम् । 'कुहोश्चु:' । लट् । तिप् ।
चिकित्सेत् । चिकित्सतु । अचिकित्सत् । अचिकित्सीदिति ।
सिच् । 'इट ईटि' । चिकित्सामासेति । 'कास्प्रत्यय—'
। 'कृञ्चा—' इत्यस्यानुप्रयोगः । चिकित्सिता । चिकित्स्यात् ।
त्सिष्यति । अचिकित्सिष्यत् ।

ऋते । घृणार्थ इति । जुगुप्सार्थे इत्यर्थः । छेङित्येव सिद्धे

---

ग्यजेषु $D_1$. २. After it—अचिकित्सिष्टाम् $B_1$. ३. After
किल्स्यात् । चिकित्सिता । चिकित्सिष्यति । अचिकित्सिष्यत् $B_2$.
: dropped N, $B_2$, $D_4$. ५. Dropped $Bc_2$. ६. °षणं $Bc_2$.
ते $Dc_3$. ८. जुगुप्सा इत्यर्थः $Dc_3$. ९. ऋतेः छाङि° $Bc_2$; ऋतेश्च ङित्वे
: । $Dc_3$.

ाङ् । ऋतीयते ।

इति परस्मैपदप्रक्रिया ॥

ज्ञापनार्थमित्युक्तम् । ङित्वात्तङिति । 'अनुदात्त—'
ऋतीयते । ऋतीयेत । ऋतीयताम् । आर्तीयत । ऋतिरयं
रित्यस्य इयङ्विषय एव प्रयोगः । तेनार्धधातुके विकल्पो
'वञ्चिलुञ्च्यृतश्च' इति निष्ठायामकित्त्वविधानात् । तत्रेयङ्-
ायः । वृत्तिकारमते त्वार्धधातुके सर्वत्र विकल्पः । तेनार्ति-
यम् । आर्तीयिष्ट । ऋतीयांचक्रे । ऋतीयिता । ऋतीयिषीष्ट ।
े । आर्तीयिष्यत ॥

ामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विट्ठलाचार्यमार्यम् ।
ा श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन् प्रसादे निरगुरथ परस्मैपदिभ्वादयोमी ॥

er it—आर्तीयिष्ट C, $D_1$ ; (after आर्तीयिष्ट $D_1$ has ऋतीयिता); ऋतीयताम् । आर्तियत । आर्तियिष्ट । आर्तीत् । आनर्त । ऋतीयां-
ता । ऋतीयिता । ऋत्यात् । ऋतीयिषीष्ट । $D_3$ ; आर्तीयिष्ट ।
अर्तिता । ऋतीयिता । $D_4$. २. ज्ञापकार्थ° $Bc_2$, $Dc_3$.
नोदाहृताः । $Dc_3$.

# अथात्मनेपदिनः ॥

एध वृद्धौ[1] । एधते । ऐधिष्ट । ऐधिध्वम् ।[2]

**आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य ॥१।३।६३॥**

आम् प्रत्ययो यस्मात्[3] कृतः तदनुप्रयुज्यमानस्[4] कृञ आत्मनेपदं स्यात् अकर्तृगामिन्यपि फले[5]

---

एध । इत आरभ्य व्यञ्जनवर्जिता गाङवधिकाः द्वाविंशति सेट्काः[6] । एधते इति । अनुदात्तेत्त्वादात्मनेपदम् । त । शप् 'टित आत्मनेपदानां टेरे' । एधेते । एधन्ते । एधेत । एधेयाताम् एधेरन् । एधताम् । एधेताम् । एधन्ताम् । ऐधत । ऐधेताम् ऐधन्त । ऐधिष्टेति । लुङ् । च्लिः । सिच् । 'आर्धधातुकस्य— इतीट् । षत्वम् । ष्टुत्वम् । 'आडजादीनाम्' । 'आटश्च इति वृद्धिः । ऐधिषाताम् । 'आत्मनेपदेष्वनतः' । ऐधिषत ऐधिध्वम् । 'धि च' इति सलोपः । ध्वे सलोपो वा सस्य दः इ केचिदिति पक्षे ऐधिड्ढ्वम् ।

**आम्प्रत्ययवत्** । 'तत्र तस्येव' इति षष्ठीसमर्थाद्वतिः आम्प्रत्ययो यस्माद्विहितस्तस्य च अनुप्रयुज्यमानस्य कृञो आत्मनेपदं भवतीत्यर्थः[7] । एतच्चाकर्त्रभिप्रायार्थमित्याह । अकर्तृगा इति । ननु यद्यकर्त्रभिप्रायार्थं तर्हि विध्यर्थं स्यात् । ततश्च उदुम्भ ञ्चकारेत्यत्र[8] कर्त्रभिप्राये तङ् प्राप्नोति । नैष दोषः । उभयमनेन क्रिय विधिर्नियमश्च । कथं पूर्ववदिति वर्तते । स द्वितीयो यत्नः

---

१. एध वृद्धौ dropped $D_2$. २. After it—'इजादेश्च गुरुमत-' इत्य $B_1$, $D_2$ ; एधेते । एधध्वे for ऐधिष्ट । एधिध्वम् $D_3$. ३. क्रियते C, $D_2$, drop कृतः; विहितः, P, $D_3$; dropped $D_4$. ४. तद्वृत्तस्तु° $B_1$; तद्वस् $D_3$, $D_4$. ५. अकर्तृगामिनि फलेपि च $B_1$; अकर्तृगामिनि फलेपि $D_1$; $D_4$, अकर्तृगामिनि क्रियाफलेपि $B_2$, $D_3$. ६. सेटः $Bc_2$, Dc ७. स्यादित्यर्थः $Bc_2$. ८. उम्भांचकारे° $Dc_3$.

एधांचक्रे । ऐधाचकृषे ।

**इणः षीध्वं लुङ्लिटां धोऽङ्गात् ॥८।३।७८॥**

इणन्तादङ्गात्[1] परेषां षीध्वंलुङ्लिटां धस्य मूर्धन्यः[2] स्यात् ॥ एधांचकृढ्वे । एधांचकृवहे ।[4] कृञः किम् ।

---

त्र पूर्वेण 'आम्प्रत्ययवत्—' इत्यादिना वचनेन विधिः क्रियते स मूल एव व्याख्यातः । द्वितीयेन नियमस्तस्यायमर्थः । यदि कृञ् आत्मनेपदं स्यात् तदा पूर्ववदेव स्यादिति । एधांचक्रे इति । लिटि 'इजादेः—' इत्याम् । 'आमः' इति लेर्लुक् । 'कृञ्चा—' इत्यादिना कृञो लेट्परस्यानुप्रयोगः । एधां कृत इति सति 'लिटस्तझयोरेशिरेच्—' इत्येश् । यणादेशः । 'द्विर्वचनेचि' इति स्थानिवत्त्वात् साच्कस्य द्वित्वम् । 'उरत्' । 'कुहोश्चुः' । एधांचक्राते । एधांचक्रिरे । एधांचकृषे इति । 'थासः से' । क्रादित्वादिडभावः ।

इणः । अत्र इणन्ताद्विहितानामित्यर्थो यदि स्यात् तदा चकृढ्वे इत्यादिष्वेव स्यात् अदिढ्वमित्यादौ दादीनां न स्यात् । नत्सीध्वमित्यादौ ग्रहादीनां प्राप्नुयाच्च । एतद्दोषपरिहाराय इणन्तादङ्गात् परेषामिति व्याकरोति । नन्वेवमप्युच्यमाने ऐधिध्वमित्यादौ प्राप्नुयात् । यद्यपीटः परभक्तत्वाच्छास्त्रकृतमानन्तर्यं नास्ति तथा श्रुतिकृतानन्तर्यस्य सत्त्वात् । उच्यते । 'विभाषेटः' इति इटो विभाषयोक्तत्वात् गोबलीवर्दन्यायेन इड्व्यतिरिक्ते णन्तमङ्गमिह गृह्यते । अथवा श्रुतिकृतमानन्तर्यं नाश्रीयते । ऐधिध्वमित्यादौ न अदिढ्वमित्यादौ स्यात् । पदमञ्जरीकारादिमते ऐधिध्वमित्यादौ[10] मूर्धन्यो भवत्येव । श्रुतिकृतस्यानन्तर्यस्य

---

१. C drops it. २. इणन्तात् परे B1. ३. मूर्धन्यादेशः P, B2, D1, D. ४. After it—एधांचकृमहे D2, N. ५. यत्नेन Dc3. ६. °परस्य कृञोनुप्रयोगः । Bc2. ७. स्थिते Bc2. ८. परत्वाच्छास्त्र° B32. ९. सत्त्वम् Dc3. १०. ऐधिढ्व° Bc2, Dc3.

ासे । एधांबभूव । एधिता । एधिषीष्ट । एधिष्यते । ऐधिष्यत ।

दद दाने ।[2] न शशददेत्युक्तेरेत्वं न । ददे ।[3]

ष्वष्क गतौ ।[4] ष्वष्कते । षष्वष्के ।

---

त् । तच्च पदमञ्जर्यां निपुणतरमुपपादितम् । 'विभाषेटः'
। नेह विस्तरभयाल्लिख्यते । इण्कोरिति वर्तमाने इण्ग्रहणं
निवृत्त्यर्थम् । वक्षीध्वमिति । लुङ्लिटां किम् । स्तुध्वे ।
् किम् । परिवेविषीध्वम् । अर्थवद्ग्रहणादपि सिद्धे विस्पष्टार्थम् ।
ासेति । अस्तेः प्रयोगविधानसामर्थ्यादस्तेर्भूभावो न । द्वित्वम् ।
ीर्घः । एधांबभूवेति । भुवोनुप्रयोगः । द्वित्वम् । ह्रस्वः ।
रः' । अभ्यासजश्च । बकारः । 'भुवो वुक्' इति वुक् ।
ति । लुट् । 'स्यतासी—' इति तासिः । इट् । 'लुटः
य—' इति डा । टिलोपः । एधितासे । एधिताहे । एधिषीष्टेति ।
लिङ् । लिङः सीयुट् । इट् । यलोपः । 'सुट्तिथोः' ।
भयत्र ष्टुत्वम् । एधिषीयास्ताम् । एधिषीय । एधिष्यत इति ।
त । एत्वम् । स्यः । इट् । षत्वम् । ऐधिष्यतेति । लङ् । स्यः ।
आट् । वृद्धिः । शेषं प्राग्यथभूवत् ।

दद । ददते । ददेत । ददताम् । अददत । अददिष्ट । ददे
एश् । द्वित्वम् । ददिता । ददितासे । ददिषीष्ट । ददिष्यते ।
ष्यत ।

ष्वष्क् । ष्वष्कत इति । सुब्धातुष्ठिवुष्वष्कतीनां सत्वनिषेधः ।
ष्किष्ट । षष्वष्के इति । 'हलादिः शेषः' । ष्वष्किता ।
षीष्ट । ष्वष्किष्यते । अष्वष्किष्यत ।

---

एधिषीध्वम् B1; एधिषीध्वम् after एधिषीष्ट D2. २. After it—ददते ३. After it—अददिष्ट । अददिषाताम् D4. ४. B1 drops ष्वष्कते. ropped D3; अष्वष्किष्ट । अष्वष्किषाताम् after it D4. ध्वमिति Bc2, Dc3. ७. Before it—चेष्टा Bc2, Dc3. ८. जश्त्वं Dc3.

ऋज गतौ स्थैर्ये च । अर्जते । आर्जिष्ट । अत अ
दीर्घः । ऋकारैकदेशो रेफोपि नुड्विधिं प्रति हल् । तेन त
द्विहल इति नुट् । आनृजे । अर्जिषीष्ट ।

तिज निशाने क्षमायां च । तितिक्षते ।[२]

---

ऋज । अर्जते इति । 'पुगन्त—' इति गुणः ।
टेरेत्वम् । आर्जिष्टेति । सिच् । इट् । गुणः । आट् ।
षत्वम् । ष्टुत्वम् । 'अत आदेः' इति दीर्घः इति । अ
इति स्थिते 'उरत्' इत्यत्वे च कृते अ ऋज् ए इत्यत्र ।
केत्यादि । ऋकारैकदेशो रेफोपि नुड्विधिं प्रति हल्ग्रहणे
इत्यर्थः । कथं वर्णात्मना हलां ग्रहणेनावर्णात्मको गृह
चेन्नैष दोषः । द्विहल्सामर्थ्यात् । न च 'तस्मान्नुड्' इ
अटित्यत्रापि प्रसङ्गः स्यादिति वाच्यम् । 'अश्नोतेश्च'
नियमार्थत्वात् । अद्विहलो यदि भवति अश्नोतेरेव नान्य
तस्मादन्तरेणापि द्विहल्ग्रहणं सिद्धे यद् द्विहल्ग्रहणं करोति
प्रयोजनं यस्याप्येको मुख्यो हलवयवो द्वितीयस्तु तच्छा
रित्वादुपचारेण हल्व्यपदेशार्हस्तस्यापि स्यादिति । अ
अर्जिष्यते । आर्जिष्यत ।

तिज । तितिक्षते इति । 'गुप्तिज्किद्भ्यः सन्' इ
'सन्यङोः' इति द्वित्वम् । धात्वधिकरणविहितत्वात् सनो
कत्वम् । तेनेड्गुणौ न । 'चोः कुः' । षत्वम् । कषसंयो
'सनाद्यन्ताः' इति धातुत्वात् शबादि । एत्वम् । अतित
तितिक्षांचक्रे । तितिक्षिता । तितिक्षिषीष्ट । तितिक्षिष्यते । अतिति

---

१. $N_1$ drops from आर्जिष्ट to दीर्घ. २. After it C has
चुरादित्वात् णिच् । तेजयति ।. ३. कत्वं षत्वम् । $Dc_3$. ४. क्षत्वम् I

ष्वञ्ज परिष्वङ्गे । निष्वजते ।

## सिवादीनां वाड्व्यवायेपि ॥८।३।७१॥

परिनिविभ्यः परेषां सिवसहसुट्स्तुस्वञ्जामड्व्यवायेपि वा[1] षं स्यात् ॥ झलो झलि । न्यस्वङ्क्त । न्यष्वङ्क्त ।[3]

स्वञ्जेः[4] संयोगादपिल्लिटो[5] वा कित्त्वम् ।[6] सस्वञ्जे । सस्वजे ।

---

ष्वञ्ज । निष्वजते इति । 'दंशसञ्जष्वञ्जाम्' इति न्लोपः[7] । रिनिविभ्यः सेव' इत्यादिना षत्वम् ।

सिवादीनाम् । प्रत्यासत्तेः 'परिनिविभ्यः—' इति सूत्रे संनिविष्टा सिवादयो गृह्यन्त इत्यभिप्रेत्याह । सिवसहेत्यादि । उभयत्र-ाषेयम् । स्तुस्वञ्जोः प्राक् सितादिति प्राप्ते इतरेषामप्राप्ते । स्वङ्क्तेति । षत्वाभावे रूपमेतत् । लुङ् । सिच्[8] । 'चोः कुः' । स्वप सवर्णौ । अडागमः[9] । षत्वपक्षे रूपं न्यस्वङ्क्तेति । अस्वङ्-म् । अस्वङ्क्षत । स्वञ्जेरित्यादि । वक्तव्यमिति शेषः ।

सस्वञ्जे इति । द्वित्वम् । 'हलादिः शेषः' । कित्त्वाभावे एतत् । ञ्जे इति । कित्त्वात् 'अनिदिताम्—' इति न्लोपः[10] ।

---

१. षत्वं वा B2. २. Dropped B2. ३. न्यष्वङ्क्त । न्यस्वङ्क्त D1, न्यष्वङ्क्त । व्यष्वङ्क्त । D4; व्यष्वङ्क्त and व्यस्वङ्क्त in place न्यष्वङ्क्त and न्यस्वङ्क्त D2, P, C, B1, B2. ४. ष्वञ्जेः N1. संयोगादेरपि° P; संयोगान्तादपि° C. ६. After it—कित्त्वान्नलोपः ७. नलोपः Dc3. ८. त । सिच् । Dc3. ९. अट् । Dc2. १०. न्लोपः ।

**सदिष्वञ्जोः परस्य लिटि ॥८।३।११८॥**

अनयोरभ्यासात् परस्य सस्य षत्वं न स्याल्लिटि ॥ सिष्वञ्जे । स्वङ्क्ता । स्वङ्क्षीष्ट ।

त्रपूष् लज्जायाम् । ऊदित्वाद्वेट् । अत्रपिष्ट । अत्रप्त । एत्वम् । त्रेपे । त्रपिता । त्रप्ता ।

जभ गात्रविनामे ।

**रधिजभोरचि ॥७।१।६१॥**

अनयोर्नुमागमः स्यादचि ॥ जम्भते । अजम्भिष्ट ।

---

सदि । परिषस्वजे इति । पूर्वस्य षत्वम् । स्वङ्क्तेति । लुट् । सिः । कुत्वम् । अनुस्वारपरसवर्णौ । स्वङ्क्षीष्टेति । 'लिङः सीयुट्' त्वानुस्वारपरसवर्णषत्वानि । लृट् । स्वङ्क्ष्यते । अस्वङ्क्ष्यत ।

त्रपूष् । त्रपते । ऊदित्वादिति । 'स्वरतिसूति—' इत्यादिना त्रपिष्टेति । सिच् । वेट् । अत्रप्तेति । इडभावे 'झलो झलि' इति लोपः । त्रपिता । त्रप्तेति । वेट् । त्रप्सीष्ट । त्रपिषीष्ट । त्रपिष्यते । त्रप्स्यते । अत्रपिष्यत । अत्रप्स्यत ।

जभ ।

रधिजभोः । रध हिंसासंराध्योः । जभ उक्तार्थः । वृद्धि प्राप्तापि सती नुमा नित्यत्वाद् बाध्यते । रन्धयति । जम्भयति । अचि किम् । रद्धा । जम्भत इति । नुम् । मित्त्वादन्त्यादचः परः । अजम्भिष्टेति । लुङ् । त । सिच् । इट् । नुम् । षत्वम् । ष्टुत्वम् । अट् । जजम्भे । जम्भिता । जम्भिषीष्ट । जम्भिष्यते

---

१. Dropped D₁. २. °षस्वजे N₁, D₂, D₃, D₄. ३. After it- जजम्भे D₄. ४. ।लिङ् । सीयुट् । Dc₃.

पण व्यवहारे स्तुतौ च। गुपूधूपेत्यायः। पेणे स्तुतावेवायं
यः। अनुबन्धस्य केवले चरितार्थत्वादायप्रत्ययान्तान्नात्मने-
[। पणायति। वेति केचित्। पणायते। गोपायति। गोपा-
। अपणायीत्। अपाणिष्ट। पणायांचकार। पणायांचक्रे। पेणे।

---

ष्टुभ। विष्टोभत इति। 'उपसर्गात् सुनोति—' इति षत्वम्।
म्। अष्टोभिष्टेति। अड्व्यवायेपि षः। तुष्टुभे इति। द्वित्वम्।
र्वाः खयः'। षत्वम्। स्तोभिता। स्तोभिष्यते।

पण। पणे स्तुतावेवेति। स्तुत्यर्थेन पनिना साहचर्यात्
: पणिः प्रत्ययमुत्पादयति न व्यवहारार्थ इत्यभिप्रायः।
पणायतीत्यत्रात्मनेपदं किं न स्यात् यतः पणिरयमनुदात्तेदित्या-
स्याह। अनुबन्धस्येति। अनुदात्तस्येत्यर्थः। पणायतीति।
द्यन्ताः—' इति धातुत्वात् तिप्। शप्। वेति केचिदिति।
क्तं मुग्धबोधे। 'सनः पमे धोर्वा त्वायात्' इति। अपणायी-
। लुङ्। च्लिः। सिच्। 'इट ईटि'। अपणिष्टेति।
गादय आर्धधातुके वा' इति यदाय् नास्ति तदेदम्। सिच्। इट्।
चिन्मते अपणायिष्ट। पणायांचकारेति। प्रत्ययान्तत्वादाम्। पेणे

---

After it—स्तोभिषीष्ट। स्तोभिता $B_2$. २. 'स्यायास्यः $B_1$. ३. पणे
४. °वेवायः $B_1$; °वेवायः प्रत्ययः $D_1$. ५. गोपायति। गोपायते
pped $D_1$, $D_3$. ६. P has-अगोपायीत्। अगोपिष्ट। पणायांचक्रे and
s—अपणायीत्। 'आयादय-' इति वायप्रत्ययः। अपणायिष्ट। अपाणिष्ट।
ांचकार। पेणे in place of अपणायीत्.. पणायांचकार; $B_2$, $D_3$ have
it—अपणायिष्ट; $D_2$ has अपणायिष्ट before it. ७. पणायांचक्रे।
pped $D_2$, $D_4$, $B_1$, $B_2$; पेणे dropped $D_3$. ८. After it $Bc_2$
—अवयवे चरितार्थं लिङ्गं समुदायस्य विशेषकं न भवतीति न्यायादिति।
दायो नास्ति तदा सिच् $Bc_2$.

पणेर्व्यवहारे तु शतस्य पणते । पन च । पनायतीत्यादि ॥

कमु कान्तौ ।

कमेर्णिङ् ॥३।१।३०॥

कमेर्धातोर्णिङ् प्रत्ययः स्यात् स्वार्थे ॥ उपधावृद्धिः

---

इति । आयाभावे 'अत एकहल्मध्ये—' इत्येत्वाभ्यासलोपौ पणायांचक्रे । पणायिता । पणिता । पणाय्यात् । पणिषीष्ट । पणायिषीष्ट पणायिष्यति । पणिष्यति । पणायिष्यते । अपणायिष्यत् । अपणिष्यत अपणायिष्यत । शतस्य पणत इति । व्यवहरतीत्यर्थः । 'व्यवहृपणोः— इति षष्ठी । पन च । चकारा स्तुतौ । पनायतीत्यादि । आयप्रत्यय आदिशब्दात् पनायेत् इत्यादिरूपाणि पणवत् ज्ञेयानि । क्षीरस्वामिप आयप्रत्ययान्तादपि पनेरात्मनेपदम् । यथाह क्षीरतरङ्गिण्याम् । पनाय हरिम् । अत्रावयवे हि कृतं लिङ्गं समुदायस्य विशेषकं भवतीत्यवय व्यवधानेऽप्यात्मनेपदमिति ।

कमु । कान्तिरभिलाषः ।

कमेः । णकारो वृद्ध्यर्थः । ननु च यदि वृद्ध्यर्थो णकारस्त 'न कम्यमिचमः' इति मित्संज्ञा प्रतिषेधो व्यर्थः । णित्करणसामर्थ्या हि ह्रस्वत्वं न स्यात् । अन्यथा णित्करणं व्यर्थं स्यादिति । नैवम् नानर्थकं णित्वम् । तस्य 'णेरनिटि' इति सामान्यग्रहणार्थत्वात् अन्यच्च 'आयादय आर्धधातुके वा' इति यदा णिङ् नास्ति हे मण्णिच्कृतस्तदा ह्रस्वो मा भूदित्येवमर्थो मित्संज्ञाप्रतिषेधः । ङका आत्मनेपदार्थः । उपधावृद्धिरिति । 'अत उपधायाः' इत्यनेन

---

१. पणेः dropped N. २. प्रत्ययः dropped C. ३. उपधाया वृद्धिः
४. पणिवत् $Bc_3$, $Dc_3$. ५. णकारो वृद्ध्यर्थ° $Bc_2$.

तेबादि । गुणायादेशौ । कामयते । ण्यन्तत्वात् चलेश्चङ् ॥

**णौ चङ्युपधाया ह्रस्वः ॥७।४।१॥**

चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यात् ॥

---

ादि । 'सनाद्यन्ताः—' इति धातुसंज्ञायां सत्यां तिबादयश्च शप्
इति भावः । गुणायादेशाविति । कामि अ ते स्थिते 'सार्व-
' इति गुणः । 'एचोऽयवायावः' इत्यायु । कामयेत । कामयताम् ।
त । ण्यन्तत्वात् 'च्लेश्चङ्' इति 'णिश्रि—' इत्यादिना
ा त इति स्थिते द्वित्वे प्राप्ते परत्वादादौ 'णेरनिटि' इति
। सौकर्यार्थमन्ते णिलोपसूत्रं पठितं ज्ञेयम् । णिलोपे द्वित्वे
त्वादादौ ह्रस्व इत्यभिप्रेत्यादौ पठति ।

ौ चङि । चङ्परो यस्मात् स तथोक्तः । चङ्युपधाया ह्रस्व
त्युच्यमाने असति णिग्रहणे चङि परतो यदङ्गं तस्योपधाया
यर्थः स्यात् । एवं च चङि णिसहितमङ्गं तथा चानवकाशो
लवदित्यादावन्तरङ्गामपि वृद्धिं बाधित्वा वचनसामर्थ्या-
रेव स्यात् । अथापि कथंचिद् वृद्धिर्न बाध्यते एवमपि तस्यां
अन्तरङ्गमप्यावादेशं बाधित्वा ओकारस्य स्यात् । अन्यथा
र्थं स्यात् । कृतेऽप्यावादेशे ह्रस्वाप्राप्तौ अदीदपत् इत्यत्र च
ा चङि च कृते दा इ अत् इति स्थिते वचनप्रामाण्यादनवकाशो
रङ्गमपि पुकं बाधित्वा प्रवर्तेत । तस्मिन् च सति पुक्[12]
ोमित्तत्वाभावान्न स्यात् । अपीपचदित्यत्र चङि परतो यदङ्गं
तस्योपधायाश्चकारस्य ह्रस्वासंभवात् ह्रस्वो न स्यादेव ।
ाविति वक्तव्यम् । तदेतत् सर्वं मनसि कृत्वा व्याकरोति ।
**णौ यदङ्गमिति ।**

---

ाबादिः P, D₁, D₄. २. च्लेः dropped C. ३. स्युरिति Bc₂.
ं Dc₃. ५. Before it—कामयते Dc₃. ६. णि लोपे सूत्रे वचनं
ाc₃. ७. णिलोपे कृते Dc₃. ८. णेः स Dc₃. ९. °त्युक्ते Bc₂.
Dc₃. ११. मप्यादेशं Dc₃. १२. पुग्विधिर्हि अनिमित्तत्वान्न स्यात् Bc₂.

सन्वल्लघुनि चङ्परेऽनग्लोपे ॥७।४।९३॥

लघुनि धात्वक्षरे परे अभ्यासस्य सन्वत् कार्यं स्यात् चङ्परे णौ न त्वग्लोपे ॥[1]

सन्यतः ॥७।४।७९॥

अभ्यासस्यात इकारः स्यात् सनि ॥

---

सन्व । 'सन्यतः' इत्यादिना सूत्रत्रयेण यदभ्यासस्य सनि कार्यं विहितं तल्लघुनि चङ्परेऽतिदिश्यते । लघुनि चङ्परे इति च व्यधिकरणे सप्तम्यौ । चङ्परे चङि परतो यत् पूर्वमङ्गं तस्य संबन्धि यल्लघु तस्मिन् परतो योऽभ्यासस्तस्य सन्वद् भवतीति । चङ्पर इति बहुव्रीहिः[2] । चङ् परो यस्मादिति चङ्परः । सामर्थ्यात्[3] । अगिति प्रत्याहारः । तस्य लोपोऽग्लोपः । एवं सूत्रार्थमभिप्रेत्याह । लघुनीत्यादि । लघुनि किम् । अततक्षत् । अजजागरदित्यत्र केचिद् गॄशब्दं[4] लघुमाश्रित्य सन्वद्भावमिच्छन्ति । कथमिच्छन्ति । यतो लघुनि पर इत्युच्यते व्यवहितं चात्र लघु । सत्यम् । तथापि अचीकर-दित्यादौ ककारादिव्यवधानेऽपि वचनप्रामाण्याद्यथा सन्वद्भावस्तथात्रापि व्यवधानेऽपि भविष्यतीति । तदसत् । एकेन हि वर्णेन सर्वत्र व्यवधानमस्ति वर्णसमूहेन तु[5] न कुत्रचित् तत्राशङ्क्य परिहारेणैकवर्णेन व्यवधानेऽपि वचनप्रामाण्याद् भवति न तु शक्यपरिहारेण वर्णसमूहेन । एवं चेदं[6] चिक्षणदित्यत्र[7] कथं सन्वद्भावः । उच्यते । यदयं 'अत्स्मृदृ—' इतीत्वबाधनार्थमत्वं विदधाति स ज्ञापयति भवत्येवंजातीयकानामि-त्वमिति । चङ्ग्रहणं किम् । अहं पपच । परग्रहणं किम् । चङ्येव केवले मा भूत् । अचकमत । अनग्लोपे किम् । अचकथत् । अमी-मवदित्यादौ अत्र ग्रहणात् सन्वद्भावेनाभ्यासलोपो न भवति । सन्यतः ।

---

१. णौ परे $D_2$, $N_1$. २. इत C. ३. सामर्थ्याण्णिः $Dc_3$. ४. °शब्दे $Dc_3$. ५. Dropped $Dc_3$. ६. Dropped $Dc_1$. ७. °चक्षण° $Dc_3$.

दीर्घो लघोः ॥७।४।९४॥

लघुनि धात्वक्षरे परे हलादेर्लघोरभ्यासस्य दीर्घः स्यात्
रे णौ ने त्वग्लोपे ॥

णेरनिटि ॥६।४।५१॥

अनिडादावार्धधातुके परे णेर्लोपः स्यात् । इयङ् ।
देरपवादः । अचीकमत । णिङभावपक्षे । कमेश्च्लेङ्
पः ॥ णेरभावान्न दीर्घसन्वद्भावौ । अचकमत ।

अयामन्ताल्वाय्येत्न्विष्णुषु ॥६।४।५५॥

आम् अन्त आलु आय्य इत्नु इष्णु एषु णेरयादेशः स्यात् ॥

---

ग्रहणं किम् । पापच्यते । सन् । पापचिषते । अत्र मा
र्घः । अत्र यद्यपि हलादेरिति नास्ति तथाप्यर्वाचीनमतेनोक्तम् ।
च प्रदीपे उक्तम् । हलादेः किम् । और्णुनवदिति ।

णे । णेरिति णिङ्णिचोः सामान्यग्रहणम् । इयङादिभिः सर्वस्य
यस्याविष्टब्धत्वादनवकाशः सन् णिलोपस्तान् बाधत इत्यभिप्रेत्याह ।
ङादेरिति । आदिना यण्वृद्धिदीर्घग्रहणम् । अचीकमतेति ।
ोपः । प्रत्ययलक्षणेनोपधाया ह्रस्वः । द्वित्वम् । चुत्वम् । अचीक-
म् । णिङभावपक्षे इति । 'आयादयः—' इत्यनेन ।

अयामन्त । 'णेरनिटि' इति प्राप्तस्य णिलोपस्यापवादोयमाय् ।
णिलोपोनुवर्तते तत्र नेत्येव वाच्यं लाघवार्थं न उत्तरार्थमायादेश-

---

१. णौ परे $D_2$, $N_1$. २. अनग्लोपे $D_1$, $D_4$, $N_1$. ३. Dropped $N_1$,
. ४. °श्च्लेश्चङ् $B_2$. ५. °वादोयम् । $Bc_2$, $Dc_3$. ६. णिलोपो न
र्तते $Dc_3$. ७. तत्र णेत्येवं $Dc_3$.

मयांचक्रे । चकमे ।[1] इडादित्वान्न णिलोपः । कामयिता
मिता ।[2]

अय गतौ । अयते ।

उपसर्गस्यायतौ ॥८।२।१९॥

अयतौ परे[4] उपसर्गरेफस्य लत्वं स्यात् ॥ प्लायते । पलायते
ल्ययते ।

---

नम् । कामयांचक्रे इति । प्रत्ययान्तत्वादाम् । कृञोनुप्रयोगः
आम्प्रत्ययवत्—' इत्यात्मनेपदम् । कामयिषीष्ट । कमिषीष्ट
ामयिष्यते । कमिष्यते । अकामयिष्यत । अकमिष्यत ।

अय ।

उपसर्गस्य । इह द्वौ पक्षौ । अयतिग्रहणं रेफविशेषण
त्येकः । उपसर्गविशेषणमिति द्वितीयः । अत्र[6] प्रथमे पक्षे
त्तिः सुयोज्या । द्वितीये त्वेवं नेया । अयतौ परतो य उपसर्गस्तस्य
रेफस्य लत्वं स्यादिति । प्लायते । पलायते इति । सवर्णदीर्घः[7]
नु चाद्यपक्षे लत्वं न स्यात् । यावता प्लायते पलायते इत्य
स्मिन् कर्तव्ये 'अचः परस्मिन्—' इत्येकादेशस्य स्थानिवद्भावा
ातूपसर्गविभागे सति अवर्णेन व्यवधानाद्रेफस्यायतिः परो
भवतीति पल्ययत इत्यत्र च यकारेण व्यवधानादिति चे
वम् । येन नाव्यवधानं तेन व्यवहितेपि वचनप्रामाण्यादित्येके
र्णेन व्यवधानेपि लत्वं भवति । प्लायते इत्यादिषु

---

१. After it—चकमाते P, C, B₁. २. After it—कामयिष्यते । कमिष्य
. ३. Dropped D₄. ४. उपसर्गस्य रेफस्य D₁, N₁. ५. उपसर्ग
ण° Dc₁. ६. तत्र Bc₂. ७. सवर्णदीर्घः Bc₂, Dc₃. ८. भवतीति Bc
पल्यत इत्यत्र Dc₃.

प्रत्यय इति ज्ञापकात् प्रतेर्न । प्रत्ययते । निस्दुस्
ो रेफस्यासिद्धत्वान्न लत्वम् । निरयते । दुरयते ।
ाष्ट । आयिढ्वम् । आयिध्वम् ।

**दयायासश्च ॥३।१।३७॥**

दय[२] अय आस्[३] एभ्य आम् स्याल्लिटि ॥ अयांचक्रे ।[४]
दय दानगतिहिंसादानेषु । अदयिढ्वम् । अदयिध्वम् ।
ञ्चक्रे ।

---

प्रत्ययते इत्यत्र तु न भवति । वर्णसमुदायेन व्यवधानात् ।
ये तु पक्षे सिद्धमेव सर्वत्र लत्वम् । तत्पक्षे प्रतेरपि
ते तन्निवारणायाह । प्रत्यये इति ज्ञापकादिति । एतच्च
ामतेनोक्तम् । प्रत्यय इति सूत्रे प्रत्ययते ज्ञायतेर्थोऽस्मादिति
ाः 'पुंसि संज्ञायां घः प्रायेण' इति घान्तस्य प्रत्ययशब्दस्या-
य निर्देशो ज्ञापक इति भावः । तथा च इन्दुमत्यां वृत्ता-
ा । 'प्रतेस्तु व्यञ्जनव्यवहितो य इति न निमित्तम्' इति ।
इति ज्ञापकमिति केषांचिन्मते प्रतेरपि भवति लत्वम् ।
ात् त्यक्तं प्रसङ्गाद्व्याख्यायते । 'परेश्च घाङ्कयोः' ॥८।२।२२॥
लो वा । परिघः । पलिघः । पर्यङ्कः । पल्यङ्कः । योगे
परियोगः । पलियोगः । आयिष्टेति । लुङ् । सिच् । इट् ।
ाजादीनाम्' । आयिढ्वम् । आयिध्वमिति । 'विभाषेटः' इति
ान्यः ।

दयाय । दय दानादिषु । अय गतौ । आस उपवेशने ।
ा । अयिषीष्ट । अयिषीढ्वम् । आयिषीध्वम् । आयिष्यते । आयिष्यत ।
दय । दयते । अदयिष्ट । अदयिढ्वम् । अदयिध्वमिति
ान्यः । दयांचक्रे इति । 'दयाय—' इत्याम् । दयिषीध्वम् ।
ढ्वम् । दयिष्यते । अदयिष्यत ।

---

Dropped D3, P, C, N. २. दय् अय् C. ३. आस P, D1.
er it—अयिता । अयिषीष्ट । अयिष्यते B2. ५. Before it—दयते P,
2. ६. प्रतेस्तु व्यवहितेयतिर्निमित्तमिति Bc2.

स्फायी वृद्धौ। स्फायते। चायस्फायप्यायामिड्वेति केचित्॥ अस्फायिष्ट। लोपो व्योर्वलि। अस्फास्त। पस्फाये।

आप्याया वृद्धौ।

**दीपजनबुधपूरितायिप्यायिभ्योन्यतरस्याम्**

॥३।१।६१॥

दीपादिभ्यश्च्लेश्चिणादेशः स्याद्वा एकवचने तशब्दे परे॥

---

**स्फायी**। स्फायते। **केचिदिति**। हेमसूर्यादयः। अस्फायिढ्वम्। अस्फायिध्वम्। **पस्फाये** इति। 'शर्पूर्वाः खयः'। पस्फायिढ्वे। पस्फायिध्वे। स्फाता। स्फायिता। स्फासीष्ट। स्फायिषीष्ट। स्फायिषीढ्वम्। स्फायिषीध्वम्। स्फास्यते। स्फायिष्यते।

**ओप्यायी**। प्यायते।

**दीपजन**। दीपी दीप्तौ। जनी प्रादुर्भावे। बुध अवगमने। दीप्यादिभिरात्मनेपदिभिः साहचर्यात् जनिबुध्योरात्मनेपदिनोरेव ग्रहणं न्याय्यम्। पूरी आप्यायने। तायृ संतानपालनयोः। ओप्यायी वृद्धौ। **एकवचने तशब्दे परे** इति। एतच्च सामर्थ्याल्लभ्यते। तथा हि 'चिण् ते पदः' इत्यतस्ते इत्यनुवर्तते। तत्र त इत्यनेन एकवचनमेवोच्यते न बहुवचनं मध्यमस्य पदःपरस्य तथासंभवात्तस्य परस्मैपदत्वात् पदश्चात्मनेपदित्वादिति।

---

१. Dropped D1, D3, D4. २. Before it–स्फायिषीष्ट। स्फायिता। स्फायिष्यते B2. ३. ओप्यायीङ् D4. ४. हेमाद्याः। Bc2. ५. एतत् dropped Bc2. ६. तस्यासंभवात् Dc3.

**च्चिणो लुक् ॥६।४।१०४॥**

चिणः परस्य तप्रत्ययस्य लुक् स्यात् ॥ अप्यायि ।
यायिष्ट । अप्यास्त ।

**लिड्यङोश्च ॥६।१।२९॥**

लिटि याङि च प्यायः पीभावः स्यात् ॥ पिप्ये ।
ायिता । प्याता ।

तायृ संतानपालनयोः । '[2]दीपजन—' इति वा चिण् ।
ायि । अतायिष्ट ॥[3]

---

**च्चिणः** । अकारितरामित्यत्र 'असिद्धवदत्राभात्' इति
ोपस्यासिद्धत्वात् तरपूतमयोर्लुक् न । ननु चान्यस्यान्यत्रासिद्धत्वं
ययभेदाद्भिद्यते । व्यक्तौ पदार्थे प्रतिव्यक्ति लक्षणम् । वचना-
स्यात्मन्यसिद्धत्वं न स्यात् । सत्यम् । अभेदेन श्रुतमपि लक्षणं
द्यते इति कृत्वा अतश्चिणः परस्यान्यस्य प्रत्ययस्यासंभवात्
त्ययस्यैव लोप इत्यभिप्रेत्याह । **तप्रत्ययस्येति** । **अप्यायीति** ।
ङ् । त । च्लिः । अट् । अप्यायिष्ट । **अप्यास्तेति** केषांचिन्मते ।
वेट् । इडाभावेति । 'लोपो व्योर्वलि' इति यलोपः ।
यायिढ्वम् । अप्यायिध्वम् ।

**लिड्यङोः** । पिप्ये इति परत्वात् कृते पीभावे पुनः
ाङ्गविज्ञानाद् द्वित्वम् । 'एरनेकाचः—' इति यण् । **प्यायिता** ।
तेति । वेट् । यलोपः । प्यायिषीढ्वम् । प्यायिषीध्वम् ।
स्यते । प्यायिष्यते ।

**तायृ** । तायते । **अतायीति** । 'चिणो लुक्' इति तलोपः ।
**तायिष्टेति** । चिणभावे सिच् । 'आर्धधातुकस्येड् वलादेः' इतीट् ।
ाये । तायिता । तायिषीष्ट । तायिष्यते ।

---

१. ताय $B_1$, $D_2$, $D_3$, $D_4$, P, C. २. Before it—तायते । तायेत ।
यताम् । अतायत । तताये । ततायाते । ततायिरे $B_2$. ३. After it—
यिषीष्ट । तायिता । तायिष्यते । अतायिष्यत $B_2$. ४. तरपो लुक् न $Bc_2$.

शल चलने संवरणे च । अशलिढ्वम् । अशलिध्वम् ।

षेवृ सेवने । 'परिनिविभ्यः—' इति षत्वम् । परिषेवते । न्यषेविष्ट । विषिषेवे । एभ्यः किम् । प्रतिसेवते ।

काशृ दीप्तौ । काश आम् वेति केचित् । काशामास । चकाशे

कासृ शब्दकुत्सायाम् ।[4] 'कास्प्रत्यय–' इत्याम् कासांचक्रे । वेति केचित् । चकासे ।

---

**शल** । शलते । अशलिष्ट । **अशलिढ्वम्** । **अशलिध्वमिति** इट् मूर्धन्यः । शेले । शेलिढ्वे । शेलिध्वे । शलिता । शलिषीष्ट शलिष्यते ।

**षेवृ** । **परिषेवत** इति । 'धात्वादेःषःसः' । **न्यषेवि** इति । अड्व्यवायेपि षत्वम् । **विषिषेवे** इति । 'एच इग्घ्रस्वा देशे' । 'अभ्यासव्यवायेपि' अभ्यासस्य च षः । सिषेविढ्वे सिषेविध्वे । सेविता ।

**काशृ** । काशते । अकाशिष्ट । काश इति । तथोच बोपदेवपण्डितैः । 'दरिद्राकासकाशृरुषूजागृवाम् ठ्याम्' इति **काशामासेति** । असोनुप्रयोगः । **चकाशे** इति । ह्रस्वः । चुत्वम् काशिता । काशिषीष्ट ।

**कासृ** । शब्दकुत्सा रोगजत्वात् । कासते । अकासिष्ट कासिता ।

---

१. Before it—शलते $B_2$. २. After it—न्यषेवत $B_1$. ३. एभ्य इ किम् $D_3$. ४. After it—गतौ $D_3$. ५. °प्रत्ययात्–' C; before it कासते $B_2$. ६. शब्दस्य $Bc_2$.

ईह चेष्टायाम् । ऐहिढ्वम् । ऐहिध्वम् । ईहांचक्रे । ईहिता ।
ङ् गतौ । गाते: शपि कृते प्रकृत्याश्रितत्वादादौ सवर्णदीर्घः ।
। 'आतो ङितः' इति इय् न । गाते । गाते । 'आत्मनेपदेष्व-
ः' । गाते । गासे । गाथे । गाध्वे ॥ गै । एति आलोप
येके । गे । गावहे । गामहे । गेत । गेयाताम् । गेरन् ।
ताम् । गै । गावहै । गामहै । अगात । अगाताम् । अगास्त ।
गे । गाता । गासीष्ट ॥

---

ईह । ईहते । ऐहिढ्वम् । ऐहिध्वमिति । सिच् । इट् । 'विभाषेटः'
त वा मूर्धन्यः । आट् । 'आटश्च' इति वृद्धिः । ईहांचक्रे इति ।
जादेः—' इत्याम् । ईहिता इति । इट् । अलघूपधत्वान्न गुणः ।
हेष्यत । गाङ् । अयमनिट् । गाते इति । शप् । सवर्णे दीर्घः ।
पि कृते इति । 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषयेति भावः ।
ईतीत्यादि । तथोक्तं मुग्धबोधे । 'उस्येचाम्यण्वराचि लोपः' ।
ते । गेतेत्यादि । लिङ् । गातामित्यादि । लोट् । त आतां झेषु
पि कृते सवर्णदीर्घः । गास्व । गाथाम् । गाध्वम् । अगातेति ।
ङ् । बहुवचनेपि 'आत्मनेपदेष्वनतः' इत्यदादेशे कृते । अगात ।
गास्तेति । लुङ् । जगे इति । लिट् । 'आतो लोप इटि च'
यालोपः । गातेति लुट् । गासीष्ट । गास्यते । अगास्यत ।

---

१. ऐहिध्वम् । ऐहिढ्वम् । $B_1$, $D_4$ ; before it—ईहते $B_2$. २. Dropped
. ३. गाते । शपि C. ४. प्रत्यया° C. ५. सवर्णे दीर्घः $B_1$, $B_2$, $D_2$.
गाते । गाते dropped $D_1$, $D_3$, $B_2$. ७. एति इत्यालोप इत्येके $D_1$ ;
तेः एति $B_2$. ८. From गामहे to गामहै dropped P, $B_1$, N; after
वहे N has–गेत । गेयाताम् । गेरन् । गाताम् । गै । गावहै । अगात &c.
After it—अगासाताम् । जगे । जगाते $B_2$, $D_3$. १०. एती° $Bc_3$.
. तथा चोक्तं $Dc_3$.

रुङ् गतौ भाषणे च ।[1] अरविष्ट ।[2] अरविढ्वम् । अरविध्वम् । मतान्तरे इड् वा ।[3] लिटि तु[4] नित्यम् । रुरुविषे ।[5]

देङ् पालने । दयते ।

**स्थाघ्वोरिच्च ॥१।२।१७॥**

अनयोरिदन्तादेशः स्यात्[6] सिच्च कित् स्यादात्मनेपदेषु ॥ कित्त्वान्न गुणः ॥

---

रुङ् । इट्[7]सहितः । रवते । रवेत । अरविष्टेति । लुङ् । सिच् । अट् । अरविषाताम् । अरविषत । अरविढ्वम् । अरविध्वमित्यादि । 'विभाषेटः' इति वा मूर्धन्यः । अरोष्ट । अरोषाताम् । अरोषत इत्यादि इडभावे । रुरुवे । रुरुवाते । रुरुविरे । रविता । रोता । रविषीष्ट । रोषीष्ट । रविष्यते । रोष्यते ।

देङ् । अयमनिट् । दयते इति । अयादेशः ।

**स्थाघ्वोः** । चकारेण कित्त्वं समुच्चीयत इत्यभिप्रेत्याह । **सिच्च किदिति** । प्रयोजनं गुणाभावः । इत्वं तु गुणार्थमेव स्यात् । इत्वेत्यत्र तकारो दीर्घनिवृत्त्यर्थः प्लुतप्रवृत्त्यर्थश्च । तथा वार्तिककृतोक्तम् ।

इच्च कस्य तकारेत्त्वं दीर्घो मा भूदृतेपि सः ।
अनन्तरे प्लुतो मा भूत् प्लुतश्च विषये स्मृतः ॥

इति । इच्चेत्यत्र तकारेत्त्वम् । कस्य कार्यस्य सिद्धये । इति प्रश्ने दीर्घो मा भूदित्युत्तरम् । ननु कित्त्वे 'घुमास्था—' इति ईत्वे विधिं विनापि स सिद्ध इतीत्वविधानसामर्थ्यादन्तरतमोपि

---

१. After it–रवते $B_2$. २. After it–अरोष्ट C, $D_1$. ३. After it—अरोष्ट $D_2$, P, $B_1$, $B_2$. ४. Dropped $D_1$. ५. After it—रविष्यते । रोष्यते । रोषीष्ट । रविषीष्ट । रोता । रविता $B_2$; रविता । रविषीष्ट $D_4$. ६. Dropped N, $D_4$. ७. सेट् । $Bc_2$. ८. वार्तिकम् । $Bc_2$. ९. ईत्वविधानादपि स सिद्धः $Bc_2$, $Dc_3$.

**ह्रस्वादङ्गात् ॥८।२।२७॥**

ह्रस्वादङ्गात् परस्य सिचो लोपः स्याज्झलि ॥ अदित । अदिषाताम् ।[1] अदिथाः ।[2] अदिढ्वम् ।

**दयतेर्दिगि लिटि ॥७।४।९॥**

देङो दिगिरादेशः स्याल्लिटि । दिग्यादेशेन द्वित्वबाध इष्यते ।[3] दिग्ये । दिग्याते ।[4] दाता । दासीष्ट ।[5]

---

ह्रस्वः स्यादित्याशङ्कते । ऋतेपि स इति । उत्तरम् । अनन्तरे प्लुतो मा भूदिति । असति तपरत्वे अनन्तरेपि विद्यमानेपि विशेषे घुमेति दीर्घः । अनेन वा दीर्घो नियमार्थः स्यात् दीर्घ एव स्यात् प्लुतो मा भूदिति । मा भूत् प्लुत इति चेत् तत्राह । प्लुतश्चेति । स चासति तपरत्वे न प्राप्नोति सति तु तस्मिन् दीर्घस्याप्रसङ्गात् विधिरेव संपद्यत इति स्वविषये प्लुतो न व्यावर्तत इति वार्तिकार्थः । अदितेति । 'आदेच उपदेशेऽशिति' इत्यात्वम् । अदिढ्वमिति । 'इणः षीध्वम्—' इति मूर्धन्यः ।

दयतेः । दयतेरिति देङो ग्रहणम् । न तु दय दाने इत्यस्य । तस्य हि लिट्याम् उक्त इत्यभिप्रेत्याह । देङ इति । दिग्यादेशेन द्वित्वबाध इति । ननु द्वित्वे प्राप्ते विधीयमानत्वाद्दिग्यादेशो देङो द्वित्वस्य बाधकः स्यात् । दिग्यादेशद्वित्वं तु केन बाध्यते । उच्यते । इह द्विधा बाधो लक्ष्यस्य लक्षणस्य च । अत्र दिग्यादेशशास्त्रेण द्वित्वशास्त्रं बाधितमिति न द्वित्वम् ।

---

१. After it—अदिषत D₂, P, C, B₁. २. After it—अदिषाथाम् D₂, B₁, B₂. ३. After it—सकृद्गतेविप्रतिषेधे यद्बाधितं तद्बाधितमेव D₂. ४. After it-दिग्यिरे । दिग्यिषे । 'आदेच–' इत्यात्वम् B₁ ; B₂ has 'आदेच–' इत्यात्वम्. ५. After it–दास्यते B₂. ६. अनन्तरे अविद्यमानेपि विशेषे Dc₂.

डिङ् विहायसा गतौ ।[1] अडयिष्ट । डिड्ये । डायिता ।[2]

गुप गोपनकुत्सनयोः ।[4] जुगुप्सते ।[6]

मान विचारणे ।

**मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ॥३।१।६॥**

एभ्यः सन् स्यादभ्यासस्य च दीर्घः ॥

---

**डीङ्** । इतः परं स्वरान्ता नव सेटः । डयते । डयेत । अडयिष्टेति । लुङ् । सिच् । इट् । गुणायादेशौ । अडयिढ्वम् । अडयिध्वम् । डिड्ये । डिड्याते । डयितेति । इट् । डयिषीष्ट । डयिष्यते ।

**गुप** । जुगुप्सते इति । ' गुप्तिज्किद्भ्यः सन् ' । ' सन्यङोः ' इति द्वित्वम् । ' कुहोश्चुः ' । ' सनाद्यन्ताः— ' इति धातुत्वम् । लट् । त । शप् । जुगुप्सेत । अजुगुप्सिष्ट । जुगुप्सांचक्रे । जुगुप्सिता । जुगुप्सिषीष्ट ।

**मान** ।

**मानबध** । मान पूजायाम् । बध बन्धने । दान अवखण्डने । शान अवतेजने[7] । एभ्यः सन् स्यात् । ननु चाभ्यासदीर्घो[8] विशेषत्वात् सामान्यविहितह्रस्वेत्त्वयोर्बाधकः स्यात् । ततश्चानिष्टरूपं[9] स्यादिति

---

१. After it—डयते $D_3$, $B_1$, $B_2$; $D_3$ has उत्पूर्वः । उड्डयते । उदडयिष्ट । डिड्ये । उड्डयिता. २. Dropped P, $D_1$; $D_4$ has—डयिता । डिड्ये । डयिषीष्ट । डयिष्यते. ३. After it—डयिषीष्ट $D_3$, $D_4$, $B_1$. ४. कुत्सनगोपनयोः $B_2$. ५. Before it—' गुप्तिज्-' इति सन् । द्वित्वादि $B_1$, $B_2$. ६. After it—अजुगुप्सिष्ट $D_3$, $B_1$, C, N. ७. तेजने $Dc_3$. ८. °दीर्घस्य $Bc_2$, $Dc_3$. ९. °चानिष्टं $Bc_2$, $Dc_3$.

सन्यत इतीत्वम् । ततो दीर्घः । मीमांसते ।

बध निन्दायाम् । भष्भावः । चर्त्वम् । बीभत्सते ।

द्युत दीप्तौ । द्योतते ।

**द्युद्भ्यो लुङि ॥१।३।९१॥**

द्युतादिभ्यः परस्मैपदं स्याद्वा लुङि ॥ 'पुषादिद्युता—'

---

यथोदयेत् तं प्रत्याह । **सन्यत इतीत्वम्** । ततो दीर्घ इति । कथमित्वम् । यावतेत्वं सामान्यविहितं दीर्घत्वं विशेषः एवं मन्यते 'दीर्घोकितः' इत्यत्र ज्ञापितमेतत् । अभ्यासविकारेष्वपवादा नोत्सर्गविधीन् बाधन्त इति । मानादेः क्रमाद्विचारनिन्दार्जवनिशानेषु सन्निष्यते । अत एव मान विचारणे बध निन्दायाम् दान आर्जवे शान निशाने इत्येतदर्थानेव धातून् पठति । **मीमांसत** इति । ह्रस्वः । इत्वम् । द्वित्वम् । दीर्घः । धातो-रित्त्वविधेः । सन आर्धधातुकत्वाभावादिट् न । अनुस्वारः । धातुत्वात्तिप् शबादि । अमीमांसिष्ट । मीमांसांचक्रे । मीमांसिता । मीमांसिषीष्ट ।

**बध** । **भष्भाव** इति । 'एकाचो बशः—' इति । **चर्त्वमिति** । 'खरि च' इति । **बीभत्सते** इति । 'मान्बध—' इति सन् । 'सन्यङोः' । दीर्घः । धातुत्वम् । त । शप् । अबीभत्सीष्ट । बीभत्सां-चक्रे । बीभत्सिता । बीभत्सिषीष्ट ।

**द्युत** । **द्योतत** इति । 'पुगन्त—' इति गुणः ।

**द्युद्भ्यः** । ननु च द्युतेरेकत्वाद् बहुवचननिर्देशो नोपपद्यते इत्यत आह । **द्युतादिभ्यः** इति । अयमभिसंधिः । यथैकेन छत्रिणा साह-चर्यादन्येपि तत्सहचारिणश्छत्रिण इत्युच्यन्ते छत्रिणो गच्छन्तीति तथ द्युतिना साहचर्यात् द्युतादयोपि कृपूपर्यन्ता द्युत इति व्यपदिश्यन्ते

---

१. बन्धने $B_2$. २. वा स्यात् $D_1$, $D_3$, $D_4$, N. ३. °ष्वपवादो Bc; ४. बाधते $Bc_2$. ५. धातोरित्त्वविधे $Dc_3$. ६. तिबादि $Bc_2$. ७. सन्यतः दीर्घः । $Dc_3$. ८. धातुत्वात्त । $Bc_2$. ९. बहुत्वं $Bc_2$. १०. तत्सहचः $Bc_2$. ११. द्युतिसाह° $Bc_2$. १२. द्युतय $Dc_1$. १३. वृत्याद्योपि Dc;

ङ् । अद्युतत् । अद्योतिष्ट ।

**द्युतिस्वाप्योः संप्रसारणम् ॥७।४।६७॥**

द्युतेः स्वापेश्चाभ्यासस्य संप्रसारणं स्यात् पूर्वरूपत्वम् ।
ते ।[1] वृतु वर्तने । द्युतादित्वात्[2] अवृतत् । अवर्तिष्ट ।[3]

**वृद्भ्यः स्यसनोः ॥१।३।९२॥**

वृतादिभ्यः पञ्चभ्यो वा[4] परस्मैपदं स्यात् स्ये सनि च[5] ।

**न वृद्भ्यश्चतुर्भ्यः ॥७।२।५९॥**

वृतु[6] वृधु शृधु स्यन्दूभ्यः सकारादेरार्धधातुकस्येण्न स्यात् ॥[7]

---

चननिर्देशसामर्थ्यादिति । अद्योतिष्टेति । लुङ् । च्लिः । सिच् ।
'पुगन्त—' इति गुणः । द्युतादयः कथिताः ।

द्युतिस्वाप्योः । ण्यन्तस्वपिः स्वापिरुच्यते । तस्याभ्यासनिमित्तेन
नेनानन्तर्ये सति संप्रसारणमिष्यते । सुष्वापयिषति । इह न
यतेर्ण्वुल् । स्वापकः । ततः । क्यच् । स्वापकीयते । सन् ।
ापकीयिषति । पूर्वरूपत्वमिति । 'संप्रसारणाच्च' इति । द्योतिता ।
षीष्ट । द्योतिष्यते । वृतु । वर्तते । द्युतादित्वादवृतादिति ।
भ्यो लुङि' इति परस्मैपदम् । 'पुषादिद्युत—' इत्यङित्यर्थः ।

वृद्भ्यः । वृतादिभ्यः पञ्चभ्य इति । वृतु वर्तने । वृधु वृद्धौ[8] ।
शब्दकुत्सायाम् । स्यन्दू स्रवणे[9] । कृपू सामर्थ्ये[10] । इत्येतेभ्यः ।

न वृद्भ्यः । बहुवचननिर्देशात् आद्यर्थो[11] लभ्यते । तत्राद्यानां
गां नित्यमिटि प्राप्ते स्यन्देस्तूदित्त्वात् पाक्षिकप्रतिषेधेऽयमुच्यते[12] ।

---

After it—विद्युतते $B_2$. २. $B_1$, $B_3$, $D_3$ have वर्तते before it
C has द्युतादित्वात् परस्मैपदम्; द्युतादित्वादङ् $D_1$, $D_3$, $D_4$,
३. C has वृते after it. ४. परस्मैपदं वा $D_3$. ५. After it—
$D_3$. ६. वृत्वृधशृधस्यन्दूभ्यः C; वृतवृधशृधुस्यन्दूभ्यः P; वृत्वृधशृ-
दूभ्यः $D_1$, $D_3$. ७. परस्य सादेरार्ध° $B_1$. ८. ण्यन्तः स्वापिः $Bc_2$.
Before it—वृतादिभ्यः $Dc_3$. १०. वर्धने $Bc_2$. ११. प्रस्रवणे $Bc_2$.
भयमर्थो $Bc_2$. १२. पाक्षिके $Bc_2$, $Dc_3$.

तङानयोरभावे पदद्वयादन्यत्र वेति केचित् । वर्त्स्यति । आत्मनेपदेषु[1] वर्तिष्यते ।

स्यन्दू प्रस्रवणे ।

**अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु ॥८।३।७२॥**

ऐभ्यः परस्याप्राणिकर्तृकस्य[3] स्यन्दतेर्वा[4] षत्वं स्यात् ॥ अनुष्यन्दते ।[7] अनुस्यन्दते । एवं विपर्यभिनिभ्यः । अप्राणिषु किम् । निस्यन्दते हस्ती ।[10] अस्यदत् । अस्यन्दिष्ट । अस्यन्त्त

---

अत्र तङा[12] समानपदस्थितेभ्यो[13] वृतादिभ्य इडिष्यते । अन्यत्र निषेधः कृत्यपि परस्मैपदलुकि च विवृत्सिता विवृत्सत्वमितीत्यभिप्रेत्याह तङानयोरभावे इति । पदद्वयादिति । तथोक्तं मुग्धबोधे । 'वृद्भ्यो नेर्मे पे स्यसनोर्वा स्वमे' इति । अवर्त्स्यत् । अवर्तिष्यत ।

स्यन्दू ।

अनु । अनुस्यन्दते । तैलमिति शेषः । अप्राणिष्विति प्रसज्य प्रतिषेधः । तेन प्राण्यप्राणिसमुदायेपि प्राण्यस्तीति अनुस्यन्दते मत्स्य उदके इत्यत्र षत्वं नेति काशिकाकाराभिप्रायः । अन्ये तु पर्युदास मन्यमाना भवितव्यमेवात्र षत्वेनेत्याहुः । द्युतादित्वादङ् परस्मैपदे अस्यदत् । अस्यन्दिष्टेति । ऊदित्वादिड् वा । अस्यन्त्तेति । इडभावे 'झलो झलि' इति सलोपः । 'झरो झरि सवर्णे' इति दलोपः

---

१. आत्मनेपदे P; आत्मनेपदे तु D₁. २. पदे तु D₂, D₃, N₁. ३. एभ्यः प्राणि° D₃. ४. स्यन्देर्वा C. ५. षत्वं वा D₃. ६. P drops it. ७. अनुस्यन्दते । अनुष्यन्दते C. ८. After it—उदकम् D₁, D₄. ९. Dropped D₂. १०. After it—लुङि द्युतादित्वात् परस्मैपदं वा । अङ् वा । D₃, P, B (D₃ and P have च for वा; पुषादित्वादङ् B₂). ११. After it—सस्यन्दे । स्यन्दिता । स्यन्दिषीष्ट । स्यन्त्सीष्ट । स्यन्ता । स्यन्त्स्यति स्यन्दिष्यते । अस्यन्त्स्यत् । अस्यन्दिष्यत B₂. १२. तङानसमानपदस्थेभ्यः Dc₃ १३. °पदस्थेभ्यो Bc₃. १४. न्येभ्यः Dc₃. १५. तिल° Bc १६. सिचो लोपः Dc₃.

न्दता। स्यन्ता। स्यन्स्याति। स्यन्दिष्यते। स्यन्स्यते।[१]

कृपू सामर्थ्ये।

**कृपे रो लः ॥८।२।१८॥**

कृपे रेफस्य लकारः स्यात्॥ रो ल इति सामान्योक्तेर्ऋका-
शस्य रेफस्य लकारैकदेशो लः। कृपादौ तु लत्वं नेष्टम्।
ते। अक्लृपत्। अकल्पिष्ट।

**लिङ्सिचावात्मनेपदेषु ॥१।२।११॥**

इक्समीपाद्धलः परौ झलादी लिङ्सिचौ कितौ स्तस्तङि परे॥

---

न्दे। स्यन्दिता। स्यन्तेति। इड्वा। स्यन्दिषीष्ट। स्यन्त्सीष्ट।
स्यतीति। 'वृद्भ्यः—' इति परस्मैपदम्। 'न वृद्भ्यः—'
इभावः। अस्यन्त्स्यत्। अस्यन्दिष्यत। अस्यन्त्स्यत।

कृपू।

कृपे। र इति सामान्यमुपादीयते तेन केवलो यो रेफः यश्च
ारस्थस्तयोर्द्वयोर्ग्रहणम्। ल इत्यपि सामान्यमेव तेन केवलस्य
लकारः ऋकारैकदेशस्य लकारैकदेशः। एतदेवाह। रो ल इति।
दाविति। आदिशब्दात् कृपण कृपीटकपूरादयः। कथमिच्छाभावः
ाति। 'उणादयो बहुलम्' इति बहुलग्रहणात्। अक्लृपदिति।
नेपदम्। अङ्। अकल्पिष्टेति। ऊदित्वादिड् वा।

लिङ्सिचौ। तङि परे इति। एतत् सिच एव विशेषणम्।
ेङः। लिङ्परस्मैपदग्रहणस्य झल्ग्रहणानुवृत्त्यैव व्यावर्तितत्वात्।

---

. After it—ऊदित्वादिट् C; $D_2$ has this before अस्यन्दिष्ट.
: P, $D_3$, $B_1$. ३. $B_1$ drops रेफस्य; रस्य N. ४. Before it—
। कृपणः। कृपाणः। $B_1$ P. ५. Before this—द्युताद्दित्वात् परस्मैपदमङ्
N. ६. रेफस्य $Dc_3$. ७. कृपाण° $Dc_3$. ८. लिङः परस्मैपदस्य $Bc_2$.
वृत्तत्वात् $Dc_3$.

अक्लृप्त । चक्लृपे ।

**लुटि च क्लृपः ॥१।३।९३॥**

लुटि स्यसनोश्च क्लृपो वा परस्मैपदं स्यात् ॥

**तासि च क्लृपः ॥७।२।६०॥**

क्लृपेः परस्य सादेरार्धधातुकस्य तासेश्चेण्न स्यात् तङानयोरभावे ॥ कल्प्ता । कल्प्तासि । तङि तु । कल्पिता । कल्पितासे । कल्प्तासे । कल्पिषीष्ट । क्लृप्सीष्ट । कल्प्स्यति । कल्पिष्यते । कल्प्स्यते ।

---

अक्लृप्तेति । इडभावे 'झलो झलि' इति सलोपः । 'क्ङिति च' इति गुणनिषेधः ।

लुटि च । वृतादित्वादेव स्यसनोः सिद्धो विकल्पो लुटि विधीयते । चस्तर्हि तदनुकर्षणार्थो न कार्यः । एवं तर्हि इयं प्राप्तिः क्लृपेः पूर्वां प्राप्तिं बाधेत । तस्मात् च कार्यः ।

**तासि च** । क्लृपेरात्मनेपदसमानपदस्थादिडागम इष्यते । अन्यत्र निषेधः । क्लृप्यपि परस्मैपदलुकि च निषेधः । **कल्प्ता । कल्प्तासीति** । लत्वम् । गुणः । **कल्पितासे । कल्प्तासे** इति । ऊदित्वाद्वेट् । कल्पिषीष्ट । क्लृप्सीष्ट । वेट् । इडभावे 'लिङ्सिचौ—' इति कित्त्वम् । **कल्प्स्यतीति** । 'लुटि च' इति परस्मैपदम् । 'तासि च' इडभावः । **कल्पिष्यते । कल्प्स्यते** इति । वेट् । अकल्प्स्यत् । अकल्पिष्यत । अकल्प्स्यत ।

---

१. $B_1$ has before it—झलादीति किम् । कल्पिषीष्ट । $B_2$ has it after चक्लृपे. २. Dropped $D_1$, $D_4$, $B_2$. ३. क्लृपः N, $D_3$. ४. After it—परतः $D_1$, $D_2$, P, C. ५. क्लृपेः परस्मैपदं वा स्यात् । C क्लृपेर्धातोर्वा परस्मैपदं स्यात् P, $B_1$, $B_2$. ६. क्लृपः N. ७. क्लृपेः $N_1$; क्लृपः $D_3$. ८. P has after it—अकल्प्स्यत । अकल्पिष्यत. ९. °सामान्य° $Dc_3$. १०. इतीड् न $Bc_2$

व्यथ दुःखसंचलनयोः ।

**व्यथो लिटि ॥७।४।६८॥**

व्यथोभ्यासस्य संप्रसारणं स्याल्लिटि ॥ विधिबलाद्धलादि-न । विव्यथे ।

ञित्वरा संभ्रमे । अत्वारिढ्वम् । अत्वारिध्वम् ।

इत्यात्मनेपदप्रक्रिया ।

---

व्यथ । व्यथते । अव्यथिष्ट ।

**व्यथः** । यकारस्य हलादिशेषेण निवृत्तौ प्राप्तायामिदं संप्रसारणं ग्रते इत्यभिप्रेत्याह । विधिबलादिति । वकारस्य तु 'न संप्रसारणे ारणम्' इति निषिध्यते इति । **विव्यथे** इति । 'संप्रसारणाच्च' । ता । व्यथिषीष्ट । व्यथिष्यते । अव्यथिष्यत ।

**ञित्वरा** । संभ्रमोत्राशुकारिता । 'आदिर्ञि—' इति इत् । । त्वरेत । त्वरताम् । अत्वरत । अत्वरिष्ट । **अत्वरिढ्वम्** । **रिध्वमिति** । 'विभाषेटः' इति वा मूर्धन्यः । तत्वरे । त्वरिता । षीष्ट । त्वरिष्यते । अत्वरिष्यत ।

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्योयं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय—
व्याख्यानेस्मिन् प्रसादे निरगुरथ तङन्ता अमी भ्वादिसंज्ञाः ॥

---

. दुःखभयसंचलनेषु $D_2$. २. $B_1$ has त्वरते before it; अत्वारिध्वम् । ारिढ्वम् $N_1$, $D_4$. ३. After it—संभ्रमे $Bc_2$.

पत्लृ गतौ । लृदित्वादङ् ।

पतः पुम् ॥७।४।१९॥

पतः पुमागमः स्यादङि ॥ अप्यपप्तत् ।[1] पेततुः । पेतिता ।

टुवमु उद्गिरणे । वेम एत्वाभ्यासलोपौ वेति केचित् ।
:। ववमतुः । वेमिथ[4] ।

भ्रमु चलने । वा भ्राशेति श्यन् वा । भ्रम्यति[5] । भ्रमति ।
मीत् ।[6]

---

पत्लृ । इतस्त्रयः परस्मैपदिनः सेट्[7]श्च । पतति । लृदित्वादिति ।
ादि—' इति ।

पतः । प्रण्यपप्तदिति । 'नेर्गद—' इति णत्वम् । पपात ।
ुरिति । 'अत एकहल्मध्ये—' इत्येत्वाभ्यासलोपौ । पेतिथ ।
ात् । पतिष्यति । अपतिष्यत् ।

टुवमु । उद्गिरणं भुक्तस्योर्ध्वगतिः । टु इत् । वमति । वमेत् ।
तु । अवमत् । अवमीत् । ववाम । ववमतुः इति । 'न शशदद—'
त्वनिषेधः स्वमते । अर्वाचीनमते त्वेवं वेति भावः । वमिता ।
मात् । वमिष्यति । अवमिष्यत् ।

भ्रमु । अभ्रमीदिति । 'ह्यन्तक्षण–' इति न वृद्धिः ।

---

,. $B_1$ has पपात before and पेतुः after it; $B_2$ has पेतुः after it ;
has अपप्तत् in its place. २. Dropped $D_2$. ३. Before it-वमति ।
मीत् । ववाम । $D_4$. ४. P, $N_1$, C, $B_2$, $D_1$, $D_4$ have ववमिथ after it.
भ्राम्यति $B_1$, $D_3$, P ; शमामिति दीर्घः । भ्राम्यति $B_2$, $D_2$. ६. After
s $B_1$ has—मान्तत्वान्न वृद्धिः $B_2$ has the same before it and बभ्राम
er it. ७. सेटः $Bc_2$.

वा जॄभ्रमुत्रसाम् ॥

एषां किति लिटि सेटि थलि चैत्वाभ्यासलोपौ वा। भ्रेमतुः। बभ्रमतुः। भ्रेमिथ। बभ्रमिथ।[2]

[4]षह मर्षणे।[5] परिनिवीति षत्वम्। विषहते। सिवादि-षो वा।[6]व्यषहत। व्यसहत।[7]असहिष्ट। सेहे। तीष-वेट्।[8] परिषहिता। हो ढः। झषस्तथोरिति धत्वम्। ढलोपः।

सहिवहोरोदवर्णस्य ॥६।३।११२॥

सहिवहोरवर्णस्य ओकारः स्यात् ढलोपे सति ॥

---

...ा जॄ। जॄष् वयोहानौ। भ्रमु चलने। त्रसी उद्वेगे। भ्रमिता। ...। भ्रमिष्यति।

...ह। मर्षणं क्षमा। सेट् आत्मनेपदी च। विषहते इति। ...ेः षः सः। सहेत। सहताम्। असहिष्ट। सेहे।

...सहिवहोः। अवर्णस्य किम्। ऊढः। ऊढवान्। वर्णग्रहणं कृतायामपि वृद्धौ यथा स्यात्। उदवोढाम्। तादपि परस्तपर...कारस्य तपरत्वात् अकारस्य ग्रहणं न स्यात्।

---

...1, $D_3$ have परे after it. २. After it—बभ्रमतुः। $D_4$. ३. $B_1$ ...or it—भ्रेमुः। बभ्रमुः।. ४. सह $N_1$. ५. After it—भ्रम्यात्। भ्रमिता। ...त। एते परस्मैपदिनः। $B_2$; परिनिविभ्य इति $D_3$. ६. व्यसहत। ...। $D_4$. ७. Dropped $N_1$, $D_2$, $D_3$, $D_4$. ८. ढो ढे लोपः $B_2$. ...pped $Bc_2$.

सोढः ॥८।३।११५॥

सोढरूपस्य सहेः षो न स्यात्[2] ॥ विसोढा ।

षद्लृ विशरणगत्यवसादनेषु[4] । निषीदति । न्यषदत्[5] । देस्वञ्ज्योरिति परस्य न षत्वम् । निषसाद[6] । निषत्ता[7] । तेरित्युक्तेः प्रतिसीदति ।

शद्लृ शातने । शीयादेशः ।

शदेः शितः ॥१।३।६०॥

शित्संबन्धिनः शदेरात्मनेपदं स्यात् ॥ शीयते ।

---

सोढः । सोढ्रूपस्येति । निष्ठान्तस्य प्रथमान्तनिर्देशः । शङ्काम-रोति । विसोढेति । लुट् । तासिः । डा । सहिषीष्ट । सहिष्यते । हिष्यत ।

षद्लृ । विशरणं शठनम् । अवसादोनुत्साहः । इतस्त्रयः परस्मै-नः । द्वावनिटौ । निषीदतीति । 'पाघ्राध्मा—' इति सीदादेशः । रप्रतेः' इति षत्वम् । न्यषददिति । लुङ् । च्लिः । लृदित्वादङ् । कुसित—' इति अड्व्यवायेपि षः । निषत्तेति । चर्त्वम् । सद्यात् । यति । असत्स्यत् ।

शद्लृ । शातनं तनूकरणम् । शीयादेश इति । 'पाघ्राध्मा—' इति ।

शदेः । शित्संबधिन इति । तेन शित इत्यस्य षष्ठ्यन्ततां प्रति । कश्च शदि शितः संबन्धीयस्तस्य प्रकृतिः । प्रागपि शितः तत्प्रकृतित्वमस्त्येवेति शित्प्रकृतेः शदेरात्मनेपदं भवति । शीयते ।

---

. सोढ्रूपस्य $N_1$, $D_4$, Com. २. षत्वं $D_1$, $D_4$ ; सस्य षो $D_2$. ३. Before सहिषीष्ट । सहिष्यते $B_2$. ४. विसरण° $D_1$, $D_4$, $B_1$, P. ५. न्यषदत् C, P, $B_1$, $B_2$, N. ६. C has after it—निषेदतुः । निषेदुः । षत्ता $D_4$. ८. प्रसहिषीष्ट $Dc_3$, ९. इत्येतस्य $Bc_2$.

अशदत् । शेदतुः । शत्ता ।

फण गतौ ।

**फणानां च सप्तानाम् ॥६।४।१२५॥**

फण राजृ भ्राजृ भ्रासृ भ्लासृ स्यमु स्वन एषां किति लिटि सेटि थलि च एत्वाभ्यासलोपौ वा स्तः ॥ फेणतुः । पफणतुः । फेणिथ । पफणिथ ।

राजृ दीप्तौ ।[4] विधिबलादातोप्येत्वम् । रेजतुः । रराजतुः । रेजे[5] । रराजे ।

---

अशददिति । लृदित्वादङ् । शशाद । शेदतुरिति । 'अत एक—' इति एत्वाभ्यासलोपौ । शत्तेति । लुट् । शद्यात् । शत्स्यति । अशत्स्यत् ।

फण । सेट् । फणति । अफणीत् । अफाणीत् । पफाण ।

फणानाम् । बहुवचननिर्देशादाद्यर्थो गम्यते । अत एव राजादीनां ग्रहणम् । फण गतौ । राज दीप्तौ । टुभ्राजृ टुभ्रासृ दीप्तौ । स्यमु स्वन शब्दे । फणिता । फण्यात् । फणिष्यति ।[7]

राज । सेट् । उभयपदी च[8] । राजति । राजते । अराजीत् अराजिष्ट । रराज । ननु च 'फणानाम्—' इत्यत्र सूत्रे नावर्णग्रहोस्ति योप्यत इति प्रकृतिः सोपि मात्राकालः । न च राजादीनां मात्राकालो वर्णोस्ति तत् कथमाकारस्य स्थाने एत्वं लभ्यत इति यश्चोदयेत् तं प्रत्याह । विधिबलादिति । अयं भावः । अत इत्येतदिहोपस्थितं तपरत्वकृतं कालविशेषमपास्यासंभवादवर्णमात्रं बोधयति । अथवा 'आभ्यस्तयोरातः' इत्यतः आत इत्यनुवर्तते इति । राज्यात् राजिषीष्ट । राजिष्यति । राजिष्यते ।

---

१. भ्राशृ भ्लाशृ $D_1$. २. क्तिति $N_1$, $D_4$. ३. पफाण । फेणतुः B. ४. After it—राजति । राजते $D_2$, $B_1$, P, C. ५. रेजे । रेजाते $B_2$, D. ६. After it—टुभ्लासृ $Bc_2$, $Dc_3$. ७. After it—अफणिष्यत् Dc. ८. Dropped $Bc_2$. ९. °विशेषणम° $Dc_3$.

भ्रासृ दीप्तौ[1] । 'वा भ्राश—' इति वा श्यन् । भ्रास्यते भ्रासते । भ्रेसे । बभ्रासे । एवं भ्लासृ दीप्तौ ॥

स्वन शब्दे[2] । विष्वणाति । अवष्वणाति मांसम् । व्यष्वणत् [3]विषष्वणतुः । विष्वेणतुः । भोजने किम् । विस्वनाति वीणा[4] व्यवाभ्यां किम् । निस्वनत्यन्नम्[5] ।

---

भ्रासृ भ्लासृ । सेटावात्मनेपदिनौ द्वौ । अभ्रासिष्ट । भ्रेसे इति । एत्वाभ्यासलोपौ वा । भ्रासिता । भ्रासिष्यते । एवं भ्लासृ अस्यापि भ्रासृवद्रूपाणि ज्ञेयानीत्यर्थः । भ्लास्यते । भ्लासते अभ्लासिष्ट । भ्लेसे । बभ्लासे । भ्लासिता । भ्लासिष्यते ।

स्वन । सेट् । परस्मैपदी च । विष्वणति । अवष्वणतीति 'वेश्च स्वनो भोजने' इति षत्वम् । 'अट्कुप्वाङ्—' इति णत्वम् सशब्दं मांसं भुङ्क्ते इत्यर्थः । व्यष्वणादिति । 'प्राक्सित—' इ अड्व्यवायेपि षत्वम् । अस्वनीत् । अस्वानीत् । सस्वान । विषष्वणतुः विष्वेणतुरिति । 'स्थादिषु—' इति अभ्यासव्यवायेऽप्यभ्यासस्य षत्वम् 'फणानां च—' इत्येत्वाभ्यासलोपौ वा । विस्वनति वीणेति नदतीत्यर्थः । व्यवाभ्यां किमिति । 'वेश्च स्वनो भोजने' इत्य 'अवाच्चालम्बनाविदूर्ययोः' इत्यवादिति वर्तते । कण्ठोक्तं च वेरिति इदं[6] व्यर्थम् । 'उपसर्गात्' इत्यस्यानुवृत्त्यैव सिद्धत्वादिति प्रश्ना भिप्रायः । उत्तरमाह । निस्वनत्यन्नमिति । स्वनिता । स्वन्यात् स्वनिष्यति । अस्वनिष्यत् ।

---

१. भ्रास N. २. शब्दे भोजने च ॥ 'वेश्च स्वनो भोजने ॥ ८।३।६९॥ वेरवा परस्य स्वनतेः सस्य षः स्याद्भोजने । विष्वणाति । मांसं व्यष्वाणीत् । 'अ हलादेः' इति वा वृद्धिः । व्यष्वणीत् । विषष्वणतुः । विष्वेणतुः । भोजने किम् & $B_1$ ; स्वनो शब्दे । व्यवाभ्यां स्वनो भोजने ॥८।३।६९॥ व्यवाभ्यां च परस्य स्व भोजने षत्वं स्यात् $B_2$ ; स्वन शब्दे । 'वेश्च स्वनो भोजने' । विष्वणाति अवष्वणाति मांसम् $D_2$ ; व्यष्वणत् to विष्वेणतुः dropped $D_4$. ३. Befo it—व्यष्वणीत् । व्यष्वाणीत् । विषष्वाण $B_2$. ४. वीणाम् $D_1$, $D_2$, P, C, B $B_2$, N. ५. अन्नम् dropped $D_3$. ६. तद्द्वयं किमर्थम् । $Bc_2$, $Dc_3$.

खनु अवदारणे।[२] 'गमहन—' इत्युपधालोपः। चख्नतुः। चख्नुः[४]। चखनिथ।

ये विभाषा ॥६।४।४३॥

जनसनखनामकारोन्तादेशः स्याद्वा यादौ क्ङिति। खायात्। खन्यात्।

चायृ पूजानिशामनयोः।[५] अचायीत्। इडभावे यलोपः अचासीत्।[६] अचास्ताम्।[७] अचायिष्ट।

लष[८] कान्तौ। श्यन् वा। लष्यति। लषति।[९]

गुहू संवरणे।

---

खनु। इत आरभ्य ह्वेञन्ता उभयपदिनोष्टादश गुहूपर्यन्त सेट्कः[१०]। खनति। खनते। अखानीत्। अखनीत्। अखनिष्ट। चखान चख्ने। खनितासि। खनितासे। खनिषीष्ट। खनिष्यति। खनिष्यते।

चायृ। चायति। चायते। इडभावे इति। चायस्फायप्यायामि[११] केचिदिति। यलोप इति। 'लोपो व्योर्वलि' इति। अचायिष्ट। अचा चचाय। चचाये। चायिता। चाता। चायितासे। चातासे। चाय्या चायिषीष्ट। चासीष्ट। चायिष्यति। चास्यति। चायिष्यते। चास्य

लष। कान्तिरिच्छा। श्यन्वेति। 'वा भ्राशभ्लाश—' इ लष्यते। लषते। अलाषीत्। अलषीत्। अलषिष्ट। ललाष। लेष लेषे। लष्यात्। लषिषीष्ट।

गुहू।

---

१. खन $D_1$, N. २. After it—खनाति। खनति C, $D_4$ (अखनीत् $D_4$). ३. Before it—चखान $B_2$. ४. Dropped ५. After it—चायति। चायते $D_2$, $B_1$, C, N. ६. अचास्त अचायिष्ट। अचास्त। अचास्ताम् for अचास्ताम्। अचायिष्ट N. ७. F C, $D_2$, $D_3$ drop it; $B_2$, $D_4$ have चचाये in place of it. ८. ल ९. After it—लषते C, $B_1$; लषते। अलषीत्। अलाषीत्। अल ललाष। लेषतुः $B_2$; लष्यते। लषते। अलाषीत्। अलषीत्। अलषि १०. सेट्कः $Bc_2$. ११. भ्रासभ्लासेति $Bc_2$.

**ऊदुपधाया गोहः ॥६।४।८९॥**

गुह[1] उपधाया ऊकारादेशः स्याद् गोह इति निर्देशाद् गुणहेतावचि परे ॥ गूहति । गूहते । इट्पक्षे[2] । अगूहीत् । अगूहिष्ट । अन्यत्र क्सः[3] । अघुक्षत्[4] ।

**लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ॥७।३।७३॥**

एषां क्सस्य सर्वस्य[5] लोपो वा स्याद् दन्त्ये तङि परे ॥

---

**ऊदुपधाया गोहः** इति विकृतग्रहणं विषयनियमार्थम् । यत्रास्यै-तद्रूपं तत्र यथा स्यादित्यभिप्रेत्याह । **गोह इति निर्देशादिति**[6] । इह न । निजुगूहतुः । निजुगूहुः । उपधायाः किम् । अन्त्यस्य मा भूत् । अचीत्यनुवर्तते । गोढा । गूहेत् । गूहेत । पक्षे इति[7] । 'स्वरतिसूति—' इत्यादिना यदेट्[8] तदेत्यर्थः । अगूहिष्टाम् । अगूहिषुः । अगूहिषाताम् । **अन्यत्र क्स इति** । इडभावे 'शलइगुपध—' इति क्स इत्यर्थः । **अघुक्षदिति** । 'हो ढः' इति ढत्वम् । 'एकाचो बश—' इति भष् । 'षढोः कः सि' इति कः[9] । 'आदेशप्रत्यययोः' इति षः[10] । इट्[11] । 'इतश्च' इतीकारलोपः । अघुक्षताम् ।

**लुग्वा** । दुह प्रपूरणे । दिह उपचये । लिह आस्वादने । गुहू संवरणे । 'घोर्लोपो लेटि वा' इत्यतो लोप इत्यनुवर्तमानेपि पुनर्लुग्-ग्रहणं सर्वलोपार्थं तच्चोत्तमपुरुषद्वि[illegible]नार्थमेव । अन्यत्र तस्यैव लोपे कृते 'झलो झलि' इति सलोपो न सिध्यति । स्थानिवद्भावोप्यल्लोपस्य नास्ति । पूर्वत्रासिद्धीये न स्थानिवदिति । दन्त्योष्ठ्यो हि वकारो दन्त्य एव गृह्यते इह । अन्यथा[12] तु न लुग्ग्रहणमेवाकरिष्यत् ।

---

१. गोह C. २. पक्षे इट् C. ३. $B_1$ drops it. ४. C has before it—एकाचो बशो भष् झषन्तस्य स्ध्वोः ।. ५. $B_1$ drops सर्वस्य. ६. °दित्यादि $Bc_2$. ७. इट्पक्षे इति $Dc_3$. ८. वेट् for यदेट् तदेत्यर्थः । $Bc_2$. ९. कत्वम् $Dc_3$. १०. षत्वम् $Dc_3$. ११. अट् $Bc_2$. १२. अन्यथा तु ग्रहणमेवा° $Dc_3$.

त्वम् । धत्वम् । ष्टुत्वम् । ढलोपः । दीर्घः । अगूढ । अघुक्षत ।

**क्सस्याचि ॥७।३।७२॥**

अजादौ तङि परे क्सस्यान्तस्य लोपः स्यात् ॥ अघु
ाताम् । अघुक्षत । बहुवचने क्सान्तलोपाभाव इति केचित् । अघु
न्त । अगूढाः । अघुक्षथाः । अघुक्षाथाम् । अघूढ्वम् । अघुक्
म् । अघुक्षि । अगुह्वहि । अघुक्षावहि । दन्त्ये किम् । अघुक्षामहि

---

त्वमिति । 'हो ढः' इत्यनेन । **धत्वमिति** । 'झषस्तथोः—' इत्यनेन
त्वमिति । 'ष्टुना ष्टुः' इत्यनेन । **ढलोप इति** । 'ढो
पः' इत्यनेन । **दीर्घ इति** । 'ढ्रलोपे—' इति । **अगूढेति**
ङ् । त । च्लिः । क्सः । अडागमः । **अघुक्षतेति** । लुगभावप
त्वं भष्भावः कत्वम् । षत्वम् ।

**क्सस्य** । ककारवतः क्सस्य ग्रहणादिह न । तृणादिभ्यः सः
गसौ । तृणसः । **अघुक्षातामिति** । असति क्सो लोपे 'आ
न्तः' इतीयादेशः स्यात् । **अघुक्षन्तेति** । 'झोन्तः' इति
गूढाः इति । क्सः । लोपः । ढत्वम् । धत्वम् । ष्टुत्वम्
लोपः । दीर्घः । **अघूढ्वमिति** । ढत्वम् । भष् । ष्टुत्वम् । ढलोपः । दीर्घ

---

१. झषस्तथोर्धोधः । D4. २. ढलोपे दीर्घः D1. ३. C has क्ङिति f
ङि परे and P drops ताङि परे ; ताङि D1, D3, D4, N1. ४. °न्तलो
1, D3, D4. ५. अघुक्षत after this D2; इत्येके । D3. ६. अघुक्षामहि
गुह्वहि । D3. ७. दन्त्ये किम् dropped D3. ८. After this B1,
ave—लिङ्सिचावात्मनेपदेषु इति किंत्त्वात् लिङि न गुणः । घुक्षीष्ट
ter this—जुगूह । जुगूहतुः । गूहिता । गोढा । गुह्यात् । घोक्ष्यति । गूहिष्य
1, D4 ; जुगूह । जुगूहे N. ९. अट् । Bc2. १०. क्सस्य कक
हितस्य ग्रहणादिह न । Dc3. ११. सस्य Bc2. १२. Dropped B
३. क्सान्तलोपे Bc2. १४. क्सलोपः Bc2, Dc3. १५. ढलोपः Bc2, D
६. भष्भावः Dc3.

हृञ् हरणे । अहार्षीत् ॥

उश्च ॥१।२।१२॥

ऋवर्णात् परौ झलादी लिङ्सिचौ कितौ स्तस्तङि ॥[2] कित्त्वान्न गुणः । सिचो[3] लोपः । अहृत । अहृषाताम् ।[4] ह्रियात् । हृषीष्ट ॥[5][6]

भृञ् भरणे । भरति ।[7] अभार्षीत् । अभृत । बभृव[8] । भर्ता । भरिष्यति ।

---

जुगूह । जुगूहे । गूहिता । गोढा । गुह्यात् । गूहिषीष्ट । 'लिङ्सिचौ—' इति कित्त्वम् । घुक्षीष्ट । गूहिष्यति । घोक्ष्यति गूहिष्यते । घोक्ष्यते । अगूहिष्यत् । अघोक्ष्यत् । अगूहिष्यत । अघोक्ष्यत

हृञ् । द्वावनिटावित आरभ्य । हरति । हरते ।

उश्च । व्याप्तेन्याय्यात् ऋवर्णग्रहणमित्याह । ऋवर्णादिति लिङ्सिज्भ्यामाक्षिप्तस्य धातोः ऋवर्णेन तदन्तविधिर्ज्ञेयः । सिज्लोप इति । 'ह्रस्वादङ्गात्' इत्यनेन । जहार । जहर्थ । जह्रे हर्ता । ह्रियादिति । 'रिङ्शयक्लिङ्क्षु' इति रिङ् । हृषीष्ट कित्त्वान्न गुणः । हरिष्यति । हरिष्यते । अहरिष्यत् । अहरिष्यत ।

भृञ् । भरते । अभार्षीदिति । 'सिचि वृद्धिः—' इति वृद्धिः 'अस्ति—' इतीट् । अभृतेति । 'उश्च' इति कित्त्वम् । 'ह्रस्वादङ्गात् इति सिचो लोपः । बभार । बभर्थ । बभृवेति । क्रादित्वान्नेट् । भ्रियात् भृषीष्ट । भरिष्यति । 'ऋद्धनोः स्ये' इतीट् ।

---

१. Before it—हरति । हरते । C, $B_1$, $B_2$, N. २. After it—परे B ३. सिच P, $B_1$. ४. After it—अहृषत । हर्ता C. ५. Before it—जह $B_2$; 'रिङ्शयग्लिक्षु ।' ह्रियात् । हृषीष्ट । 'ऋद्धनोः स्ये' इतीट् । हरिष्यति I ६. After it—हर्ता । हरिष्यति $B_2$ ; हरिष्यति । अहरिष्यत् C. ७. Aft it-भरते $D_2$, C, $B_1$, $B_2$. ८. Before it—क्रादित्वान्नेट् । बभर्थ । $B_1$, C, $D_2$ has बभार before it ; $D_4$ has क्रादित्वान्नेट् ।. ९. सेर्लोप इति Bo

दान आर्जवे । दीदांसते ।[2]

शान तेजने । शीशांसते ।[3]

भज सेवायाम् । भेजतुः[4] । भेजिथ । बभक्थ ।

श्रिञ् सेवायाम् । 'णिश्रि[6]—' इति चङ् । अशिश्रियत् ।
श्रयिता[7] ।

---

दान । द्वौ सेट्कौ[8] । दीदांसत इति । 'मानबन्ध—' इति सन्
द्वित्वम् । ह्रस्वः । इत्वम् । अभ्यासदीर्घः । दीदांसति । अदिदांसीत्
अदिदांसिष्ट । दीदांसांचकार । दीदांसांचक्रे । दीदांस्यात् । दीदांसिषीष्ट

शान । शीशांसत इति । 'मानबन्ध—' इति सन् । शीशांसां
शीशांसांचकार । शीशांसांचक्रे ।

भज । अनिट् । भजति । भजते । अभाक्षीत् । अभाक्ताम्
अभक्त । अभक्षाताम् । बभाज । भेजतुरिति । 'तॄफल—' इत्येत्
भ्यासलोपौ । भेजिथ । बभक्थेति । 'ऋतो भारद्वाज—' इति पक्षे इ
भक्ता । भज्यात् । भक्षीष्ट । भक्ष्यति । भक्ष्यते ।

श्रिञ् । सेट्[10]कः । श्रयति । श्रयते । अशिश्रियदिति । 'चङि'
द्वित्वम् । अ शिश्री अत् इति स्थिते तिबाश्रयो लघूपधगुणः प्राप्तः । इय
तत्रान्तरङ्गत्वात् 'अचि श्नुधातुभ्रुवाम्—' इतीयङेव । अशिश्रिय
शिश्राय । शिश्रिये । श्रयितेति । इड्गुणौ[11] । श्रीयात् । श्रयिषी

---

१. अवखण्डने C, $D_1$; अवखण्डने आर्जवे च $B_2$; आवर्जने N; ख
$D_3$. २. Before it—दीदांसति C, $B_1$, $B_2$, N; after it—अदीदां
दीदांसांचकार । दीदांसांचक्रे । दीदांस्यात् । दीदांसिषीष्ट । दीदांसिता
३. Before it C has—'मान् बाध—' इति दीर्घसनौ ; $D_1$, P, C have शीशां
before it. ४. Before it-भजति । भजते । अभाक्षीत् । अभक्त $D_2$, C,
$B_2$ (instead of अभक्त; $B_2$ has बभाज). ५. Before it—श्र
श्रयते C, $B_1$, $B_2$. ६. After it—अश्रयिष्ट $B_1$. ७. Before it—शिश्र
शिश्रिये । श्रीयात् । श्रयिषीष्ट । श्रयिष्यति । अश्रयिष्यत् $B_2$; शिश्राय । श्र
$D_2$. ८. सेटौ $Bc_2$. ९. वेट् $Bc_2$. १०. सेट् $Bc_2$. ११. गुणः $Bc_2$.

रञ्ज रागे ।

रञ्जेश्च ॥६।४।२६॥

रञ्जेरुपधाया [१]नेकारस्य लोपः स्यात् शपि परे॥ [२]रजति । रजते।
ङ्क्षीत् । [४]अरङ्क्त । [५]अरङ्क्षाताम्। [६]ररञ्जतुः । [७]ररजतुः । रङ्क्ता ।

त्विष दीप्तौ । [८]त्वेषति। त्वेषते । अत्विक्षत् । [९]अत्विक्षत ।
स्याचि' इति क्सान्तलोपः । अत्विक्षाताम् । 'लिङ्सिचौ—'
कित्त्वम् ॥ त्विक्षीष्ट ।

यज देवपूजासंगतिकरणदानेषु । '[१०]व्रश्च—' इति
र् । अयाक्षीत् । [११]ऐयष्ट । [१२]जश्त्वेन डः । ष्टुत्वम् । अयड्ढ्वम् ।

---

रञ्ज । इतो नव वसान्ता अनिटः । अराङ्क्षीत् । अरङ्क्त ।
त । ररञ्जतुः । [१३]ररञ्जुः इति । संयोगाल्लिटो वा कित्त्वमिति
त् । कित्त्वाच्च लोपः । ररञ्जे । रेजे । रङ्क्तेति । 'चोः कुः' ।
:वारपरसवर्णौ । रज्यात् । रङ्क्षीष्ट । रङ्क्ष्यति । रङ्क्ष्यते ।

त्विष । त्वेषति । त्वेषते । अत्विक्षत् । अत्विक्षत । 'शल इगुपध—'
क्सः । कत्वम् । 'षढोः—' इति षत्वम् । त्वेष्टा । [१४]तित्विषे ।
यात् । त्वेक्ष्यति । त्वेक्ष्यते ।

यज । यजति । यजते । अयाक्षीदिति । लुङ् । च्लिः । सिच् ।
व्रज—' इति वृद्धिः । कत्वम् । षत्वम् । 'अस्ति—' इतीट् ।
ष्टेति । 'झलो झलि' इति सलोपः । 'व्रश्च—' इति षः । ष्टुत्वम् ।
ड्ढ्वमिति । 'झलो झलि' इति सलोपः । 'व्रश्च—' इति षः ।

---

नस्य N. २. रजति । रजते । ररञ्ज । ररञ्जतुः । संयोगाल्लिटः किन्त्वं
ररजतुः । 'अनिदिताम्—' इति नलोपः । ररञ्जुः । रङ्क्ता । $B_2$.
This and the next two forms dropped $D_2$, $D_3$. ४. Dropped
; $D_1$ has ररञ्ज for this and the next form. ५. Dropped P,
$D_4$. ६. ररजतुः । ररञ्जतुः C. ७. Dropped $B_1$, $D_3$. ८. P drops
ते ; N, $D_3$, $D_4$ drop त्वेषति । त्वेषते. ९. Dropped $B_1$. १०. Before
यजति । यजते $D_2$, C, $B_1$, $B_2$. ११. After it—अयक्षाताम् $B_2$.
'झलां जश् झशि' इति जश्त्वेन $D_1$, $D_4$. १३. ररजुः $Bc_2$.
तित्वेष in its place $Bc_2$.

**लिट्यभ्यासस्योभयेषाम् ॥६।१।१७॥**

वेच्यादीनां ग्रहादीनां चाभ्यासस्य संप्रसारणं स्याल्लिटि ॥

।

**वचिस्वपियजादीनां किति ॥६।१।१८॥**

वचिस्वप्योर्यजादीनां च संप्रसारणं स्यात् किति ॥

---

लेट्यभ्यासस्य । अधिकारादेवोभयेषां ग्रहणे सिद्धे पुनरुभये-ग्रहणं संप्रसारणं हलादिशेषबाधकं यथा स्यात् वव्रश्चेति । : । 'अत उपधायाः' इति वृद्धिः । 'संप्रसारणाच्च' रूपम् ।

ाचिस्वपि । आदिशब्दो यजिनैव संबध्यते । न प्रत्येकं भिः । यदि प्रत्येकं संबन्धोभिमतः स्यात्तदा वच गे इत्यादीनधीत्य ञिष्वप् शये इत्यधीयीत । तत्र नामिति अनेनैव स्वपादेरपि स्यादिति पृथगुपादानं न ननु चैवं 'रुदश्च पञ्चभ्यः' इत्यत्र स्वपेर्ग्रहणं न स्यात् स्वपिमधीत्य 'स्वपश्च पञ्चभ्यः' इति सूत्रं कर्तव्यम् । तच्च न तस्मात् यजिनैव संबध्यते इत्यभिप्रेत्योक्तं 'वचिस्वप्योर्यजा-ाति' । वच परिभाषणे । ब्रुवो वचि । उभावपि । ञिष्वप यज देवपूजादिषु ।

यजिर्वपिर्वहिश्चैव वसि वेञ् व्येञ् इत्यपि ।
ह्वेञ्वेदीश्वयतिश्चैव यजाद्याः स्युरिमे नव ॥

---

जादीनां D4. २. ग्रह्यादीनां N, D3. ३. $B_1$ has किति before ाम्. ४. वच्यादिभिः प्रत्येकम् $Bc_2$. ५. स्वपेरपि $Bc_2$, $Dc_3$. ६. इति ७. ब्रूञो $Bc_2$. ८. पूजासु $Bc_2$. ९. वदि $Bc_2$.

।[1] ईजुः । इयजिथ । इयष्ठ । इज्यात् ।[2]

टुवप् बीजतन्तुसंताने[4] । प्रण्युवाप[5] । ऊपतुः । ऊप्यात् ।[6]

वह प्रापणे । प्रण्यवाक्षीत्[7] । 'अवर्णस्य' इत्युक्तेः

---

ति । सवर्णदीर्घः । इयजिथ । इति । 'ऋतो भारद्वाज—'
ने इट् । इयष्ठेति । इडभावे 'व्रश्च—' इति षः । ष्टुत्वम् ।
ष्टा । इज्यात् । 'किदाशिषि' इति कित्त्वम् । संप्रसारणम् ।
यक्ष्यति । यक्ष्यते ।

; वप । बीजादीनां संतानं क्षेत्रे विस्तारणम् । वपति । वपते ।
ेत् । अवप्त । प्रण्युवापेति । 'नेर्गद—' इति णत्वम् ।
स्य संप्रसारणम् । ऊपतुरिति । यजादित्वात् संप्रसारणम् ।
। उवप्थ । ऊपे । वप्ता । उप्यादिति । कित्त्वात् संप्रसारणम् ।
। वप्स्यति । वप्स्यते ।

वह । वहति । वहते । प्रण्यवाक्षीदिति । सिच् । वृद्धिः
क्षणा । 'हो ढः' 'षढोः कः सि' । षत्वम् । ईट् । 'नेर्गद—'[10]
त्वम् । अवर्णस्येति । 'सहिवहोरोदवर्णस्य' इत्यत्रैवोपपादितम् ।

---

B₁ drops ईजुः. २. After it—यक्षीष्ट । यष्टा । यक्ष्यति B₂. D₁, D₂, N. ४. तन्तु dropped C, B₂. ५. Before it—उभय-ाति । वपते B₁. ६. After it—वप्ता । वप्स्यति C, B₁, (C drops d B₁ वप्स्यति). The following Kârikâ is given after the of वप् by P यजो वपो वहश्चैव वेञ् व्येञो ह्वयतिस्तथा । वसिर्वदस्वपि-ाद्या नव धातवः ॥; N, D₃, D₄ give on the margin र्वहिश्चैव वजिर्वेञ् व्येञ् इत्यपि । ह्वेञ्वदी श्वयतिश्चैव यजाद्याः व ॥ (वासिश्च वेञ् इत्यपि...रमी नव D₃; व्येञ् वेञ्...रमी नव D₄; it also on the margin (यजिर्वपिर्वहिश्चापि). ७. Before त । वहते B₂. ८. वेट् Bc₂. ९. हलन्तलक्षणा वृद्धिः । Bc₂. fore it—अट् । Dc₃.

मपि वृद्धावोत्वम् । अवोढाम् । अवाक्षुः । अवोढ[1] । ऊहे । वोढा । उह्यात् । वक्षीष्ट ।

वेञ् तन्तुसन्ताने ।[3] अवासीत्[4] । अवास्त ।

**वेञः ॥६।१।४०॥**

वेञो न संप्रसारणं स्याल्लिटि ॥ ववौ । ववतुः[6] । वविथ । ।

---

मिति । वह तस् । तसस्ताम् । 'वदव्रज—' इति वृद्धिः । झलि' इति सलोपः । 'हो ढः' । 'झषस्तथोः' इति तस्य । ष्टुत्वम् । 'ढो ढे लोपः' । अवोढेति । आत्मनेपदे[7] त । पूर्ववत् । उवाहेति । 'लिट्यभ्यासस्य' इति संप्रसारणम् । ऊहे इति । त्वात् संप्रसारणम् । वोढेति । लुट् । तासिः । 'हो ढः' । । धत्वम् । ष्टुत्वम् । ढलोपः । उह्यादिति । संप्रसारणम् । ते । वक्ष्यते ।

वेञ् । वयति । वयते । अवासीदिति । 'आदेच उपदेशे—' वम् । 'यमरम—' इतीट्सकौ ।

वेञः । किति यजादित्वात् धातोः[8] संप्रसारणं प्राप्तम् । अकिति तु ट्यभ्यासस्य' इत्यभ्यासस्य । तदुभयं निषिध्यते । ववौ इति । त औ णलः' । वविथ । ववाथेति । भारद्वाजमते इट् ।

---

Before it—अवाक्षम् । अवाक्ष्व । अवाक्ष्म । C. २. Before it—ः । उवहिथ । उवोढ C. ३. After it—वयति $B_2$; वयाति । वयते ४. Before it—आत्वे इट्सकौ $B_1$. ५. After it—वतुः $D_1$, $D_2$. : । $Bc_2$. ७. आत्मनेपदम् । त । $Bc_2$; आत्मनेमदम् । $Dc_3$. ८. धातोः pped $Bc_2$.

**वेञो वयिः ॥२।४।४१॥**

वेञो वयिरादेशो वा स्याल्लिटि ॥ इकार इत् । उवाय ।

**ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छति-भृज्जतीनां ङिति च ॥६।१।१६॥**

एषां किति ङिति च संप्रसारणं स्यात् ॥ यस्य संप्रसारणे प्राप्ते ।

**लिटि वयो यः ॥६।१।३८॥**

वयो यकारस्य न संप्रसारणं स्यात् लिटि ॥ ऊयतुः । ऊयुः ।

**वश्चान्यतरस्यां किति ॥६।१।३९॥**

वयो यकारस्या वो वा स्यात् किति लिटि ॥ ऊवतुः । ऊवुः । उवयिथ । वाता । ऊयात् ।

---

वेञः । इकार इति । इदिव इत् यथा न श्रूयते तथा अयमप्युच्चारणार्थत्वादिति भावः । उवायेति । 'अत उपधायाः' इति वृद्धिः ।

ग्रहि । ग्रह उपदाने । ज्या वयोहानौ । वेञो वयिः । व्यध ताडने । वश कान्तौ । व्यच व्याजीकरणे । ओव्रश्चू छेदने । प्रछ ज्ञीप्सायाम् । भ्रस्जो पाके ।

लिटि वयः । वयेर्लिट्येव विधेर्लिड्ग्रहो व्यर्थः । न । उत्तरार्थः । वेञ इति । ऊये ।

उवयिथेति । नित्यमिट् । वाता इति । आत्वम् । ऊयादिति । संप्रसारणम् । पूर्वरूपम् । 'अकृत्सार्वधातुकयोर्दीर्घः' । वासीष्ट । वास्यति । वास्यते ।

---

१. लिटि वयिरादेशः स्याद्वा N. २. यकारस्य C. ३. संप्रसारणं न P. ... ४. यस्य $N_1$, $D_3$. ५. लिटि किति $D_1$, $D_3$. ६. उवयिथ । ऊवे । ऊये । वबे । वाता । वास्यति । ऊयात् । अवास्यत् $B_2$. ७. इकार इदिति । $Bc_2$, $Dc_3$. ८. यथा इत् $Bc_2$.

व्येञ् संवरणे ।[२]

**न व्यो लिटि ॥६।१।४६॥**

व्येञ आत्वं न स्याल्लिटि । वृद्धिः[३] । विव्याय[४] । व्येञोन्त्य-
य किति लिटि संप्रसारणं वेति केचित् । विव्यतुः[५] ।
यतुः ।[६] विव्ययिथ । 'इडत्त्यर्त्ति—' इति नित्यमिट् ।[७]
। वीयात् ।

ह्वेञ् स्पर्धायां शब्दे च[८] ।

**लिपिसिचिह्वश्च ॥३।१।५३॥**

एभ्यश्च्लेरङ् स्यात् ॥ आतो लोपः[९] अह्वत् ।[१०]

---

व्येञ् । संवरणमाच्छादनम् ।
व्ययति । व्ययते । अव्यासीत् । अव्यास्त । विव्यायेति ।
यस्य संप्रसारणम् । व्येञो वेति यजादित्वात् प्राप्तम् ।
देति । महाकवयो मुग्धबोधकारश्च । तथा हि वैक्रैः
यियुर्देहान् । संविव्ययुर्वसनचारुचमूसमुत्थम् इत्यादि । महा-
। 'जिं वान्त्यः किति' इति । वीयादिति । संप्रसारणे
र्घः । व्यासीष्ट । व्यास्यति । व्यास्यते ।

ह्वेञ् । ह्वयति । ह्वयते ।

लिपि । लिप उपदेहे । षिच क्षरणे । ह्वेञ् स्पर्धायाम् । अह्वदिति ।
म् । 'आतो लोप इटि च' ।

---

After it—व्ययति $B_2$. २. आत्वं व्येञो न स्यात् $D_1$. ३. वृद्धिः
ped C; वृद्धिः । व्यश्च व्येञो लिटि न संप्रसारणं स्यात् । विव्याय $B_2$.
ropped $D_1$, $D_2$, $D_4$, P, C, $B_1$, $B_2$. ५. विव्ययतुः । विव्यतुः C.
ter it–विव्ययुः P; विव्ययुः । विव्युः $B_2$. ७. Before it—विव्ये ।
ये । विव्यये । C, $B_1$, $B_2$. ८. After it—ह्वयति $B_2$. ९. आलोपः
$D_3$. १०. अङ् वेति केचित् । अह्वासीत् । $B_1$, $B_2$. ११. वक्रौ $Bc_2$.
महाकविप्रयोगः । $Bc_2$; महाकविप्रयोगः । मुग्धबोधे $Dc_3$.

**आत्मनेपदेष्वन्यतरस्याम् ॥३।१।५४॥**

लिपिसिचिह्वः परस्य च्लेरङ् वा स्यात् तङि ॥ अह्वत ।
अह्वेताम् । अह्वास्त । अह्वासाताम् ।

**अभ्यस्तस्य च ॥६।१।३३॥**

अभ्यस्तस्य ह्वयतेः संप्रसारणं स्यात् ॥ जुहाव । जुहुवतुः । जुहविथ । जुहोथ । ह्वाता ।[1]

वस निवासे ।[2]

**सः स्यार्धधातुके ॥७।४।४९॥**

सस्य तः स्यात् सादावार्धधातुके परे[3] । अवात्सीत् ।[4]
अवात्ताम् । अवात्सुः । उवास ।

---

**अभ्यस्त** । 'अभ्यस्तस्य' 'ह्वयतेः' इति व्यधिकरणे षष्ठ्यौ[5] । अभ्यस्तसंबन्धी यो ह्वयतिस्तस्येत्यर्थः । कश्चाभ्यस्तसंबन्धी ह्वयतिर्यस्तस्य कारणम्[6] । तेनाभ्यस्तकारणात् ह्वयतेर्द्विर्वचनात् प्रागेव संप्रसारणं स्यात् । अन्यथा हि कृते द्विर्वचनेऽभ्यस्तसंज्ञायां संप्रसारणं स्यात् । एवं च सति 'न संप्रसारणे संप्रसारणम्' इत्यभ्यस्तस्य संप्रसारणं न स्यात् । जुहावेति । संप्रसारणे कृते वृद्ध्यावादेशयोश्च स्थानिवद्भावेन ह्व एतद् द्विरुच्यते । ह्वासीष्ट । हूयात् । ह्वास्यति । ह्वास्यते ।

**वस** । इतस्त्रयः परस्मैपदिनः । वसति ।

**अवात्सीदिति** । 'वदव्रज–' इति वृद्धिः । ईट् । अवात्तामिति । 'झलो झलि' इति सलोपः । तस्यासिद्धत्वात् 'सस्यार्धधातुके' इति सकारस्य तकारः । उवासेति । 'लिट्यभ्यासस्य'[7] इति संप्रसारणम् ।

---

१. After this C has-हूयात् । ह्वासीष्ट । ह्वास्यति । अह्वास्यत्. २. $B_1$ has वसति after it. ३. C, $D_3$ drop परे. ४. C has after this—सिज्लोपस्यासिद्धत्वात् 'सः स्यार्धधातुके' इति सकारस्य तकारः । झलो झलि ।; $N_1$ has on the margin the same except झलो झलि ; before it—पूर्वत्रासिद्धमिति सिज्लोपस्यासिद्धत्वात् सस्य तः । $D_3$. ५. व्याधिकरणषष्ठ्यौ $Bc_2$. ६. कारणह्व° $Bc_2$. ७. इत्यभ्यासस्य $Dc_3$.

**शासिवसिघसीनां च ॥८।३।६०॥**

इणकोः परस्यैषां सस्य षः स्यात् ॥ ऊषतुः । ऊषुः । उवसिथ । उवस्थ । वस्ता । उष्यात् । वत्स्यति ।

वद व्यक्तायां वाचि । अच्छवदति । वदव्रजेति वृद्धिः । अवादीत् । उवाद । ऊदतुः । उवदिथ । वदिता । उद्यात् ।

टुओश्वि गतिवृद्ध्योः । श्वयति । 'जॄस्तम्भु–' वति अङ् वा ।

**श्वयतेरः ॥७।४।१८॥**

श्वयतेरिकारस्य अः स्यादङि । ततः पररूपम् । अश्वत् ।

---

**शासि** । शास अनुशिष्टौ । वस निवासे । घसादेशः । अनादेशार्थं वचनम् । घसिर्यद्यप्यादेशस्तथापि सकार आदेशो न । **उवसिथ** । **उवस्थेति** । 'उपदेशेऽत्वतः' इतीट्निषेधे प्राप्ते 'ऋतो भारद्वाज—' इति पक्षे इट् । **वस्तेति** । अनुदात्तत्वादिडभावः । **उष्यादिति** । संप्रसारणम् । षत्वम् । **वत्स्यतीति** । सस्य तः ।

**वद** । इतो द्वौ सेटकौ । **अच्छवदतीति** । 'अच्छ गत्यर्थवदेषु' इति गतिसंज्ञा । 'ते प्राग्धातोः' इति प्राक् प्रयोगः । **अवादीदिति** । इट् । सलोपः । **ऊदतुरिति** । यजादित्वात् संप्रसारणम् । **वदितेति** । इट् । वदिष्यति । अवदिष्यत् ।

**टुओश्वि** । 'आदिर्ञिटुडवः—' इतीत्संज्ञायां टुर्लुप्यते । ओः 'उपदेशेऽजनु—' इतीत्संज्ञायाम् । श्वयति ।

**श्वयते** । **पररूपमिति** । 'अतो गुणे' इति । अश्वयिष्टाम् ।

---

१. वस्ता । वत्स्यति $B_2$. २. वदति $B_1$, $D_3$. ३. After it—वदिष्यति $B_2$. ४. Dropped $D_4$. ५. अकारः $D_1$, $D_2$. ६. पररूपत्वम् $D_2$, $D_3$, $D_4$. ७. °शार्थं $Bc_2$, $Dc_3$. ८. वेट् $Bc_2$. ९. सेटौ $Bc_2$. १०. ओः is placed after संज्ञायाम् $Bc_2$.

पक्षे सिच् । तस्य इट । अश्वयीत् । 'विभाषा धेट्श्व्योः' इति चङ् वा । इयङादेशः । अशिश्वियत् ।

**विभाषा श्वेः ॥६।१।३०॥**

श्वयतेः संप्रसारणं वा स्याल्लिटि यङि च ॥ ततो द्वित्वम् । शुशाव । शुशुवतुः ।[४] शुशविथ । शिश्वाय । शिश्वियतुः ।[५] शिश्वयिथ । श्वयिता । यजादित्वात् शूयात् ॥

इति मिश्रप्रक्रिया ॥

इति भ्वादयः ॥

---

अश्वयिषुः । इयङादेश इति । 'अचि श्नुधातु—' इति ।

**विभाषा** । उभयत्रविभाषेयम् । तत्र यङि अप्राप्तं लिटि तु किति यजादित्वान्नित्यं प्राप्तमकित्यप्राप्तं संप्रसारणं सर्वत्र वा स्यात् । यदा धातोर्न तदा 'लिट्यभ्यासस्य' इत्यभ्यासस्यापि न । **शुशुवतुरिति** । संप्रसारणे उवङादेशे च कृते स्थानिवत्त्वात् शु अस्य द्वित्वम् । **शिश्वायेति** । वृद्धिः । हलादिशेषः । श्वयिष्यति । अश्वयिष्यत् ।

इति मिश्रप्रक्रिया ॥

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्योयं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन् प्रसादे निरगमदमलो भ्वादिसंज्ञो गणोयम् ॥

---

१. Before it—'ह्म्यन्तक्षण—' इति न वृद्धिः. २. Dropped $D_1$. ३. Before it—द्वित्वम् $B_2$. ४. After it—शुशुवुः $B_2$. ५. After it—शिश्वियुः $D_1$. ६. यजादित्वात् संप्रसारणम् $B_2$. ७. भुवादयः $B_1$; dropped $D_1$.

## अथादादयः।

अद् भक्षणे।

**अदिप्रभृतिभ्यः शपः ॥२।४।७२॥**

अदादेः परस्य शपो लुक् स्यात् ॥ चर्त्वम्। अत्ति। अत्तः। अदन्ति। अद्यात्। अत्तु। अत्तात् वा।

**हुझल्भ्यो हेर्धिः ॥६।४।१०१॥**

होर्झलन्ताच्च हेर्धिः स्यात् ॥ अद्धि।

---

अद। इत आरभ्य शासन्ताः सप्तविंशतिः परस्मैपदिनः। द्वावनिटौ। अत्तीति। लट्। तिप्। कर्तरि शप्। 'खरि च' इति चर्त्वम्। अत्तः। अदन्तीति। शपो लुक्। 'झोन्तः'। अत्सि। अत्थः। अत्थ। अद्मि। अद्वः। अद्मः। अद्यादिति। विधि लिङ्। यासुट्। शपो लुक्। अद्याताम्। अद्युः। अद्याः। अद्यातम्। अद्यात। अद्याम्। अद्याव। अद्याम। अत्तु इति। लोट्। 'एरुः'। अत्ताद्वेति। 'तुह्योः—' इति तातङ्। अत्ताम्। अदन्तु।

हुझल्भ्यः। अत्र च 'घसिभसोर्हलि च' इत्यतः 'हलि च' इत्यनुवर्तते। तेन रुदिहि इत्यादौ हलादित्वाभावात् धिभावो न। अत्तादित्यत्र परत्वात् तातङादेशः। तत्र कृते सकृद्गते विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति पुनर्धिभावो न भवति। अत्तम्। अत्त। अदानि। अदाव। अदाम।

---

१. °र्झलन्तेभ्यो C. २. Dropped $Bc_2$, $Dc_3$.

## अदः सर्वेषाम् ॥७।३।१००॥

अदः परस्यापृक्तसार्वधातुकस्य अडागमः स्यात् सर्वेषां मतेन ॥ आदत् । आत्ताम् । आदन् । आदः ।[4]

## लुङ्सनोर्घस्लृ ॥२।४।३७॥

अदेर्घस्लादेशः स्यात् लुङि सनि च ॥ लृदित्वादङ् । अघसत् ।

## लिट्यन्यतरस्याम् ॥२।४।४०॥

अदो घस्लृ वा स्याल्लिटि ॥ जघास । 'गमहन—' इत्युपधालोपः ।

---

**अदः** । **आददिति** । लङ् । 'आडजादीनाम्' इत्याट् । 'इतश्च' इतीकारलोपः । **आदन्निति** । झोन्ते इलोपे च कृते संयोगान्तलोपः । **आद इति** । सिप् । 'इतश्च' । 'अदः सर्वेषाम्' इति अट् । आत्तम् । आत्त । आदम् । आद्व । आद्म ।

लुङ् । **लृदित्वादङिति** । 'पुषादि—' इत्यनेन । अघसताम् । अघसन् ।

**लिट्यन्य** । ननु च घस्लृ अदने इत्यस्य जघासेति स्यात् अदेस्तु आदेति । अस्ति हि घासिः प्रकृत्यन्तरम् । 'सृघस्यदः क्मरच्' इति क्मरच्विधानात् । तस्माल्लिटि विकल्पो न कार्यः । क्रियते च घसेः । असर्वविषयत्वज्ञापनार्थम् । तेन तस्य सार्वधातुके आर्धधातुके च यत्र लिङ्गं न वचनं वा तत्र प्रयोगो न स्यात् । **जघासेति** । वृद्धिः । द्वित्वम् । श्चुत्वम् । ननु घस् अतुस् इत्यत्र उपधालोपे तस्य द्वित्वं

---

१. °स्यापृक्तस्य C, $D_3$, $D_4$. २. सर्वमतेन $D_1$, $D_4$, $B_1$. ३. Dropped $B_3$. ४. After it—आत्तम् $D_3$. ५. अदो घस्ला° $D_2$, $D_3$, $D_4$. ६. घस्लादेशः $D_4$. ७. असमा° $Bc_2$. ८. नास्ति $Bc_2$, $Dc_3$.

उपधालोपस्य चर्विधिं प्रति स्थानिवत्त्वाभावात् घस्य चर्त्वम् । 'शासिवासि-' इति षत्वम् । जक्षतुः । जक्षुः । घसस्तासावभावात् थलिनित्यामिट् । जघसिथ । पक्षे 'अत आदेः' । आद । आदतुः । आदुः । [1]आदिथ । अत्ता । अद्यात् । अद्यास्ताम् ।[2] अत्स्यति । प्सा भक्षणे । [3]प्रणिप्साति । प्सायात् ।[4] प्सायुः । प्सातु । प्साहि । अप्सात् ।

**लङः शाकटायनस्यैव ॥**

आतः परस्य लङो झेर्जुस् वा[5] स्यात् ॥ अप्सुः । अप्सान् । अप्सासीत् । पप्सौ । प्साता ।

वश[6] कान्तौ । वष्टि[7] । ग्रह्यादित्वात्[8] संप्रसारणम् । उष्टः ।

---

प्रति स्थानिवत्त्वात् द्वित्वे च कृते 'खरि च' इति घस्य चर्त्वे क्रियमाणे 'अचः परस्मिन्—' इति अकारस्य स्थानिवत्त्वाच्चर्त्वं न स्यात् । इत्यत आह । उपधेति । **स्थानिवत्त्वाभावादिति** । 'न पदान्त—' इत्यनेन स्थानिवत्त्वनिषेधादित्यर्थः । **पक्षे** इति । घस्लभावपक्षे । आद्थुः । आद । आदिव । आदिम । **अत्तेति** । लुट् । तासिः । चर्त्वम् । आत्स्यत् । **प्सा** । **प्रणिप्सातीति** । 'नेर्गद—' इति णत्वम् ।

लङः । **अप्सुरिति** । 'उस्यपदान्तात्' इति पररूपम् । **अप्सानिति** । झोन्तः इति कृते सवर्णदीर्घः । **अप्सासीदिति** । 'यमरम—' इतीट्सकौ । **पप्सौ** इति । 'आत औ णलः' । **प्सातेति** । इडभावः । **प्सायादिति** । प्सेयात् । प्सास्यति ।

**वश कान्तौ** । कान्तिरिच्छा । सेट्कः । **वष्टीति** । शपो लुक् । 'व्रश्च—' इति षः । ष्टुत्वम् । **उष्ट इति** । पूर्वरूपम् । षत्वष्टुत्वे ।

---

१. After it–आद्थुः । आद $D_1$; before it–'इडत्यर्त्ति'–इति नित्यमिट् $D_4$. २. After it—अद्यासुः $D_1$. ३. 'नेर्गद–' इति णत्वम् before प्राणिप्साति C;, प्रतिणिप्सति P. ४. प्सायाताम् after it $B_2$, $D_1$, $D_4$, C. ५. स्याद्वा $D_2$, $N_1$. ६. वशू $D_1$. ७. Before it–'व्रश्च–' इति शस्य षः $D_4$. ८. महिज्यादित्वात् $D_1$. महादित्वात् $D_4$. ९. षत्वं ष्टुत्वम् । $Dc_3$.

शन्ति । वक्षि । उष्ठः ।[१] उश्यात् । उश्याताम् । वष्टु । उष्टाद्धा ।
धैत्वम् । षत्वम् । जश्त्वम् । ष्टुत्वम् । उड्ढि । वशानि । वशाव ।
ाम । 'हल्ङ्याब्—'[२] इति तिलोपः[३] । जश्त्वचर्त्वे[४] । अवट् ।
वड् । औष्टाम् । औश्नन् । अवट् । अवड्[५] । अवशम् । औश्व ।

---

न्तीति । संप्रसारणपररूपे । वक्षीति । षत्वकत्वे । उष्ठः । उष्ठ ।
श्म । उश्वः । उश्मः । उश्यादिति । संप्रसारणम् । हेर्धित्वमिति ।
झल्भ्यो हेर्धिः' इति । षत्वमिति । 'व्रश्च—' इति । जश्त्वमिति ।
लां जश् झशि' इति । ष्टुत्वम् । 'ष्टुना ष्टुः' इति । उड्ढीति ।
सारणम् । औष्टामिति । लङि कृते लावस्थायामेवाडागमात्
मन्तरङ्गत्वात् लादेशः तस् क्रियते । लादेशो हि धातोर्विहितं
ारमात्रमपेक्षते इत्यन्तरङ्गः । अडागमस्तु लविशेषमङ्गं चापरमिति
रङ्गः । तत्र कृते विकरणः कृताकृतप्रसङ्गेन नित्यत्वादडागमं
ते । अडागमस्त्वनित्यः । शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो
तीति परिभाषया । तथा हि कृते विकरणे तदन्तस्याङ्गस्य अकृते तु
मात्रस्याट् स्यात् । विकरणे कृते संप्रसारणमडागमात् प्राक्
त्वादेव भवति । संप्रसारणे चँ[६] कृते अजाद्यङ्गं भवति ।
ाडजादीनाम्' इत्याट् । 'आटश्च' इति वृद्धिः । अनेन न्यायेन
ल औष्यत इत्येवमादि सिद्धं स्यात् । अवट् । अवडिति । सिप् ।
पः । 'हल्ङ्याब्—' इति सुलोपः । षत्वजश्त्वचर्त्वा[७]नि ।

---

After it—उष्ठ $D_3$. २. हलङ्यादिलोपः $N_1$. ३. लोपः for तिलोपः
; तेर्लोपः $D_3$; तलोपः $D_4$. ४. जश्त्वम् । चर्त्वम् $N_1$. ५. After it—
म् । औष्ट $D_1$, $D_3$. ६. Dropped $Dc_3$. ७. Dropped $Dc_3$.

औश्म । अवाशीत् । अवशीत् । उवाश । ऊशतुः । उवशिथ
वशिता । उश्यात् । उश्यास्ताम् ।[2]

हन हिंसागत्योः । प्रणिहन्ति ।

**अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिक लोपो झलि क्ङिति ॥६।४।३७॥**

अनिटां वनतेस्तनोत्यादेश्चानुनासिकस्य[4] लोपः स्याज्झलादौ क्ङिति ॥[5]

यमिरमिनमिगमिहनिमन्यतयोनुदात्तोपदेशाः । तनुक्षिणुक्षणुऋणुतृणुघृणुवनुमनुतनोत्यादयः ॥ हतः । 'गमहन—' इत्युपधालोपः । 'हो हन्तेः—' इति कुत्वम् । घ्नन्ति । हन्मि

---

अवाशीत् । अवशीदिति । सिच् । 'इट ईटि' इति सलोपः । 'अ हलादेः—' इति वा वृद्धिः । उवाशेति । 'लिट्यभ्यासस्य' इ संप्रसारणम् । ऊशतुरिति । 'ग्रहिज्या—' इति संप्रसारणम् वशितेति । इट् । उश्यात् । उश्यासुः । वशिष्यति । अवशिष्यत् ।

हन इति । द्वावनिटौ । प्रणिहन्ति । 'नेर्गद—' इति णत्वम् ।

अनुदात्त । वनतेरिति । वन संभक्तौ ।

यमिरमि इत्यादि । यम उपरमे । रमु क्रीडायाम् । प्रह्वत्वे[11] । गम्लृ गतौ । हन हिंसागत्योः । मन ज्ञाने । तनु विस्ता क्षणु क्षिणु हिंसायाम् । ऋण गतौ । तृणु अदने । घृणु दीप्तौ । याचने । मनु बोधने[12] । अनुदात्तोपदेशवनतितनोत्यादीनां किम् । शान्त

---

१. After it—ऊशुः $D_3$. २. After it—वशिता । वशिष्यति ३. °स्तनोत्यादीनां च $D_1$. ४. °कलोपः $D_4$. ५. क्ङिति परे $D_1$. ६. dropped $D_3$. ७. अनिमन्यतयो $B_2$. ८. षणु क्षिणु dropped क्षणुक्षिणु $D_4$; षणु dropped $D_3$, $D_4$. ९. Dropped $N_1$. १०. $Dc_3$. ११. After it—शब्दे च $Dc_3$. १२. अवबोधने $Dc_3$.

**वमोर्वा[1] ॥८।४।२३॥**

उपसर्गस्थान्निमित्तात् परस्य हन्तेर्नस्य णो वा स्यात् वमोः परयोः ॥ प्रहण्मि । प्रहन्मि[2] । प्रहण्वः । प्रहन्वः[2] । प्रहण्मः । प्रहन्मः । 'हन्तेरत्पूर्व–'[3] इति णत्वम्[4] । प्रहण्यात्[5] । हन्तु । हतात् वा । हताम् । घ्नन्तु ।

**हन्तेर्जः ॥६।४।३६॥**

हन्तेजादेशः स्यात् हौ परे ।

**असिद्धवदत्राभात् ॥६।४।२२॥**

अत[6] ऊर्ध्वमापादसमाप्तेः[7] कार्यमाभाच्छास्त्रीयं तस्मिन् कर्तव्ये तत्रत्यं कार्यमसिद्धवत् स्यात् । इति जस्यासिद्धत्वान्न

---

उपदेशग्रहणं किम् । इह यथा स्यात् । गतिः । गमेः क्तिनि नित्स्वरेणाद्युदात्तत्वेपि भवति । इह न । शान्तः । सनि शिष्टे प्रत्ययस्वरे शेषनिघातेनानुदात्त इति स्यात् । झलीति किम् । घ्नन्ति । क्ङिति किम् । हंसि । हथः । हथ ।

**वमो** । 'हन्तेरत्पूर्व—' इति नित्यं णत्वे प्राप्ते विकल्पः । हन्यात् । हन्याताम् । हन्युः ।

**हन्तेः** । हन्तेरिति श्तिपा निर्देशो यङ्लुगन्तस्य मा भूदित्येवमर्थः ।

**असिद्धवत्** । सिद्धं परिनिष्पन्नम् । न सिद्धमसिद्धम् तेन तुल्यं वर्तते असिद्धवत् । भसंशब्दनमभिव्याप्य आभात् यच्छास्त्रं तदाभाच्छास्त्रम् । तत्र भवमाभाच्छास्त्रीयम् । तस्मिन् कर्तव्ये तत्रत्यमाभाच्छास्त्रीयं कार्यमसिद्धवत् स्यादित्यर्थः

---

१. ण्वोर्वा $B_1$, $D_2$. २. Dropped $N_1$. ३. °पूर्वस्येति $D_1$, $D_3$. ४. न णत्वम् P. ५. P has प्रहण्याताम् after it. ६. इत P, $D_3$, $D_4$. ७. °पाद परिसमाप्तेः C, $D_3$.

जहि । हनानि । हनाव ।[2] अहन् । अहताम् । [4]अहन्व ।

लुङि च ॥२।४।४३॥

नो वध इत्यादेशः स्याल्लुङि ॥ अतो लोपः । अल्लोपस्य वान्न वृद्धिः । अवधीत् । 'हो हन्तेः–' इति कुत्वम् । जघ्नतुः । जघ्नुः ।

---

मानाश्रयप्रतिपत्त्यर्थः । यत्र तदाभाच्छास्त्रीयं तदाश्रयमे- व्याश्रयम् । तेन पपुषः चिच्युषः लुलुवुषः इत्यत्र वसौ अल्लोपे यणि उवङि कार्ये नासिद्धं स्यात् । अल्लोपादीनि न्तस्य विभक्तौ संप्रसारणमिति व्याश्रयत्वात् । असिद्धं इत्येतदन्यत्र न प्रवर्तते । कुतः । एषा हि परिभाषा स्त्रीया तस्या प्रवर्तमानायां संप्रसारणादीनामाभाच्छास्त्री- सिद्धत्वादन्तरङ्गबहिरङ्गयोर्युगपदुपस्थानं नास्तीति परिभाषा ।

ङि । वधेति । अयमकारान्त आदेशः । अत एतत् चार्यस्येह धात्वादेशप्रकरणे । व्यञ्जनान्त आदेशो यत्रेष्टः ार्थमिकारं करोति । यथा जग्धिरित्यादौ । तस्मादिकारान्ता ारान्तः । स्थानिवत्त्वादिति । 'अचः परस्मिन्—' र्न वृद्धिरिति । 'अतो हलादेः' इति हलन्तलक्षणा र्ः । अवधीदिति । 'इट ईटि' सलोपः । अवधिष्टाम् । । णल् । 'अत उपधायाः' इति वृद्धिः ।

---

ore it—हतम् । हत । $B_2$. २. C, $N_1$, $D_3$, $D_4$ have हनाम ३. C drops अहताम् । अघ्नन् and has अहनम् in place of nd अहन्म after अहन्व. ४. Before it—अहन् । अहतम् $D_1$ —अहनम् । अहनम् $N_1$. before it अहन् । अहतम् । अहत । अहनम् er it अहन्म । $D_3$, $D_4$ (drops अहन्म $D_4$.). ५. अतो लोपः $N_1$. ६. आलोपा° $Dc_3$. ७. द्व्याश्रयत्वात् $Bc_2$. ८. अवृद्धि° $Bc_2$.

अभ्यासाच्च ॥७।३।५५॥

अभ्यासात् परस्य हन्तेर्हस्य कुत्वं स्यात् ॥ जघनिथ । न्थ । जघ्निव ।[1] हन्ता ।

हनो वध लिङि ॥२।४।४२॥

हनो वधः स्यादार्धधातुके लिङि ॥ अतो लोपः । वध्यात् । द्धनोः—' इतीट् । हनिष्यति ।[4]

हु अभिगमने ।

उतो वृद्धिर्लुकि हलि ॥७।३।८९॥

लुग्विषये उकारस्य वृद्धिः स्यात् पिति हलि न त्वभ्यस्तस्य ॥

---

अभ्यासाच्च । ननु हन्शब्दात् क्यचि कृते तदन्ताच्च सनि ननीयिषतीत्यत्र कस्मान्न स्यात् । उच्यते । अभ्यासस्य निमित्तभूते ये परतो हन्तेरङ्गस्य योऽभ्यासस्तस्मादेतत् कुत्वम् । अत इह न । त्राभ्यासनिमित्ते प्रत्यये सति हन्तिरङ्गम् । किं तर्हि । हननीय- : । जघनिथ । जघन्थेति । 'ऋतो भारद्वाज—' इति पक्षे इट् । वेति । क्रादिनियमादिट् ।

हन्तेति । 'नश्चापदान्त—' इत्यनुस्वारः । 'अनुस्वारस्य परसवर्णः' । अहनिष्यत् ।

हु ।

उतः । 'नाभ्यस्तस्य' इत्यनुवर्तते इत्यभिप्रेत्याह । न त्वभ्यस्त- । ततश्च योयोतीत्यादौ न । उतः किम् । एति । लुकि किम् । । हलि किम् । द्यवानि । द्यवाव । पित्येव । द्युतः । देत्यत्र ङित्वात् ङिच्च पिन्न भवतीति । पित्त्वनिषेधाद् वृद्धिर्न ।

---

P, C and $D_3$ have जघ्निम after it. २. वधादेशः $D_3$. ३. अल्लोपः $D_3$, $D_4$. ४. After it—अहनिष्यत् $D_3$. ५. उकारवृद्धिः C. कारो वृद्धिः $B_1$. ७. $B_1$ has सार्वधातुके before it.

स्पृश संस्पर्शने[1] । अस्प्राक्षीत् । अस्पार्क्षीत् ।[2] अस्पृक्षत् ।[3]

चृती ग्रन्थे हिंसायां च । 'सेसिचि—' इति वेट् । चर्तिष्यति । चर्त्स्यति ।[4]

प्रछ ज्ञीप्सायाम् । 'ग्रहिज्या—'[5] इति संप्रसारणम् । पृच्छति । अप्राक्षीत् ।[6] पप्रच्छ[7] । पप्रच्छतुः ।[8]

---

**स्पृश** । अनिट् । स्पृशति । **अस्प्राक्षीदिति** । कृषमृशस्पृशतृपदृपच्लेः सिज्वा । 'अनुदात्तस्य—' इत्यम् वा । हलन्तलक्षणा वृद्धिः 'व्रश्च—' इति षः । कत्वम् । षत्वम् । **अस्पार्क्षीदिति** । अमभावे **अस्पृक्षदिति** । सिजभावे रूपम् । 'शल इगुपध—' इति क्सः षत्वकत्वक्षत्वानि । पस्पर्श । स्पर्ष्टा । स्प्रष्टा । स्पृश्यात् स्प्रक्ष्यति । स्पर्क्ष्यति ।

**चृती** । सेट्कः । चृतति । चृतेत् । अचर्तीत् । चचर्त । चर्तिता चृत्यात् । अचर्तिष्यत् । अचर्त्स्यत् ।

**प्रच्छ** । ज्ञीप्सा जिज्ञासा । इतस्त्रयोनिटः । **पृच्छतीति** पूर्वरूपत्वम् । **अप्राक्षीदिति** । 'व्रश्च—' इति षः । 'वदव्रज—' इति वृद्धिः । पप्रच्छ । **पप्रच्छतुरिति** । अभ्यासस्य संप्रसारणम् तुक् । संयोगाल्लिटोकित्त्वाद् 'ग्रहिज्या—' इति संप्रसारणं न । प्रष्टा पृच्छ्यात् । प्रक्ष्यति ।

---

१. स्पर्शने $D_4$. २. अस्पार्क्षीत् । अस्प्राक्षीत् $D_4$. ३. Before it—'श इगुपधात्—' इति च्लेः क्सः C; after it—पस्पर्श । पस्पृशतुः । स्पृश्यात स्प्रष्टा $B_2$. ४. After it—अचर्तिष्यत् । अचर्त्स्यत् । चचर्त । चर्चिता । चर्त्स्यति $B_2$. ५. 'ग्रहिज्यावयि—' $D_1$, $D_4$; ग्रह्यादि संप्र° $D_3$. ६. After it पृच्छयात् । प्रष्टा $B_2$. ७. Dropped $D_3$, $D_4$. ८. After it—$B_2$ पप्राच्छिथ । पप्रष्ठ । प्रष्टा । पृच्छयात् ।; पप्राच्छिथ । पप्रष्ठ for पप्रच्छतुः ।

ज विसर्गे। 'सृजिदृशोर्झलि—' इत्यम्।[1] अस्राक्षीत्।
। 'विभाषा सृजिदृशोः'। ससर्जिथ। सस्रष्ठ।
मस्जो शुद्धौ। मज्जति। 'मस्जिनशोः—' इति नुम्।
गात् पूर्वं नुममिच्छन्ति।[2] संयोगादिलोपः। 'चोः कुः'।
त्। ममज्जिथ। ममङ्क्थ।[4]
छ गतौ। 'गुपूधूप—' इत्यायः। तुग्योगान्न गुणः।[5]
ते। विच्छेरायो वेति केचित्। विच्छति। अविच्छायीत्।
त्।[6]

---

। सृजति। अस्राक्षीदिति। वृद्धिः। 'व्रश्च—' इति षः।
। अस्राष्टामिति। 'झलो झलि' इति सिचो लोपः।
ष्टा। सृज्यात्। स्रक्ष्यति।
स्जो। शुद्धिः स्नानम्। ब्रुडनं च लक्ष्यते। मज्जतीति।
वेन दः। चुत्वम्। मस्जेरिति। नुमोन्त्यात् पूर्वत्वे
स्कोः—' इति संयोगादेः सस्य लोप इत्यभिप्रेत्याह।
लोप इति। तथा मग्न इत्यादावुपधानलोपोपि प्रयोजनम्।
दिति। लुङ्। सिच्। हलन्तलक्षणा वृद्धिः। ममज्ज।
। ममङ्क्थेति। 'उपदेशेत्वतः' इति इडभावः। 'ऋतो
—' इति वेट्। इडभावे नुम्। मङ्क्ता। मज्ज्यात्। मङ्क्ष्यति।
छ। सेट्कः। विच्छेरिति। यथाह क्षीरस्वामी
ण्यां विच्छेस्तुदादिपाठः सार्वधातुकेप्यायानित्यत्वार्थः।
शापि नित्यमिति भाष्यम्। अथ विच्छेर्विकल्प इति।
कार विविच्छ। विच्छायिता। विच्छिता।

---

म् after °त्यम् in $B_1$. २. After it—एक $B_2$. ३. C has
ore it. ४. C, N have ममज्जथुः after it; after it—मङ्क्ता
अमङ्क्षयत् $B_2$. ५. तुक्संयोगोपधात्त्र $D_3$. ६. After it—
कार। विविच्छ। विच्छायिता। विच्छिता। विच्छाय्यात्।
। विच्छायिष्यति। विच्छिष्यति $B_2$.

मृश आमर्शने । अम्राक्षीत् । अमार्क्षीत् । अ

इषु इच्छायाम् । 'इषुगमियमां छः' । इच्छति । 'तीषसह—' इति वेट् । एषिता । एष्टा ।

कुट कौटिल्ये ।[४] 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' । गुणः । अकुटीत् । अञ्णिति किम् । चुकोट । चुकुटिथ ।

व्यच व्याजीकरणे । ग्रहिज्या । विचति । व्यचेः त्वमनसि वक्तव्यम् । अविचीत् । विव्याच । वि

---

मृश । आमर्शनं स्पर्शः । मृशति । अम्राक्षीत् । अमा 'कृषमृश—' इति वा सिच् । 'अनुदात्तस्य—' इत्य 'वदव्रज—' इति वृद्धिः । 'व्रश्च—' इति षः । कत्वम् अमृक्षदिति । सिजभावे 'शल इगुपधात्—' इति क्सः मर्ष्टा । मृश्यात् । मर्क्ष्यति । म्रक्ष्यति ।

इषु । इतः सप्त सेट्काः णूपर्यन्ताः । ऐच्छत् । ऐषीत् । लिट् । णल् । गुणः । द्वित्वम् । 'अभ्यासस्यासवर्णे' इष्यात् । एषिता । एषिष्यति । ऐषिष्यत् ।

कुट । कुटति । अकुटीदिति । सिच् । इट् । ईट् । चुकोटेति । द्वित्वम् । चुत्वम् । चुकुटिथेति । 'गाङ्कु ङित्त्वान्न गुणः । कुटिता । कुट्यात् । कुटिष्यति ।

व्यच । व्यचेरिति । पदमञ्जरीकारमते अनसीति प असुसदृशे कृत्येव कुटादित्वम् । तेन अव्यचीत् । विव्यचि रूपाणि । कुटादित्वाभावात् । अनसीति प्रसज्यप्रतिषेध इ ग्रन्थकारः । अविचीदिति । ङित्त्वात् संप्रसारणम् । वि

---

१. Dropped $N_1$. २. After it—मृश्यात् । म्रष्टा । मर्ष्टा मर्क्ष्यति $B_2$. ३. After it—ऐषीत् । अभ्यासस्यासवर्णे P, C ४. After it—कुटति P, C, $B_1$, $B_2$. ५. °ज्येति संप्रसारणम् dropped $N_1$. ६. कुटादित्वादित्व° $B_2$. ७. Dropped $D_2$.

ा ।[१] असुप्रत्यये तु [४]उरुव्यचाः ।

[६]त्रुट छेदने । 'वा भ्राश–' इति श्यन्वा । त्रुट्यति । त्रुटति ।
त् ।[७]

स्फुर स्फुरणे ।

**स्फुरतिस्फुलत्योर्निर्निविभ्यः ॥८।३।७६॥**

निर् नि विभ्यः परयोरनयोः सस्य षो वा स्यात् ॥
रति । निष्फुरति । अस्फुरीत् । पुस्फोर । एवं स्फुल
च ।

णू स्तवने । नुवति । अनुवीत् । नुनाव ॥

---

सस्य संप्रसारणम् । विचितेति । ङित्वेत्वे । विच्यात् ।
यति । उरुव्यचा इति । असुन् ।

त्रुट । अत्रुटीदिति । ङित्त्वाद्गुणाभावः । तुत्रोट । त्रुटिता ।
त् । त्रुटिष्यति ।

स्फुट । अस्फुटीदिति । ङित्त्वाद्गुणाभावः । स्फुटिता ।
ात् । स्फुटिष्यति । एवं स्फुल । स्फुलति । निस्फुलति ।
लीत् । पुस्फोल । स्फुलिता ।

णू । नुवतीति । 'अचि श्नु—' इत्युवङ् । अनुवीदिति ।
ङित्वात् ङित्वम् । उवङ् । नुविता । नूयात् । नुविष्यति ।

---

B₁, D₂ have after it—विच्यात्; $B_2$—विच्यात् । विचिष्यति।
स्य् $B_2$. ३. $B_1$ drops तु. ४. उरयचाः $D_4$. ६. त्रुटी $D_3$, $D_4$.
शेति $D_1$, $D_2$. ७. After it $B_1$ has—त्रुटिता । त्रुटयात् । त्रुटिष्यति ।
। त्रुटिता । त्रुटिष्यति $B_2$. ८. पुलने संचये च $B_1$; च dropped $D_1$,
९. After it—नुविता । नूयात् । नुविष्यति $B_1$; परस्मैभाषा $D_2$;
ा । नुविष्याति $B_2$. १०. स्फुर । अस्फुरीदिति । स्फुरिता &c. $Bc_2$.

मृङ् प्राणत्यागे ।[1]

[2]म्रियतेर्लुङ्लिङोश्च ॥१।३।६१॥

म्रियतेः शिदन्ताच्च लुङ्लिङोश्चात्मनेपदं स्यान्नान्य[3]

रिङियङादेशौ । म्रियते ।[4]

अमृत ।[5] मृषीष्ट । एषु किम् । मरिष्यति ।

---

मृङ् । द्वावात्मनेपादिनौ । एकोनिट् ।

म्रियतेः । शिद्भावी शिदन्तः । नियमार्थवचनं म्रियतेर्लुङ्

शिदन्तस्यैवेति । एतदाह । नान्यत्रेति । यद्येवं ङित्करणं

यावतान्यत्रात्मनेपदेन भवितव्यमेव । उच्यते । स्वरार्थम् ।

मृतेत्यत्र 'तास्यनुदात्त—' इत्यादिना लसार्वधातुकस्यानु

ङिल्लक्षणेन भाव्यम् । तत्र तु कृते धातोरन्तोदात्तत्वं स्यात् । 'तिङ्

इति निघातो 'हि च' इति प्रतिषिध्यते । अडागमोपि 'न मा

इति । रिङियङादेशाविति । 'रिङ्शयग्लिङ्क्षु' इति

'अचि श्नुधातु—' इतीयङ् । म्रियते ।

अमृतेति । 'उश्च' इति कित्त्वान्न गुणः । 'ह्रस्वादङ्गात्

सिचो लुक् । ममार । मर्तासि । मृषीष्टेति । तङ् । कित्त्वान्न

मरिष्यतीति । 'ऋद्धनोः स्ये' इतीट् ।

---

१. After it—अत्र ङित्करणं स्वरार्थम् $B_1$. २. च dropped
३. रिङ् शयङिति रिङ् । इयङादेशः P, C ($D_2$, $B_2$, and
रिङियङादेशौ for इयङादेशः). ४. After it—'ह्रस्वादङ्गात्' इ
लुक् P, C. ५. After it—अम्रियत $D_2$. ६. ङिल्लक्षणं $Bc_2$;
वाच्यम् । $Dc_3$.

ओविजी भयचलनयोः । विजते ।

**विज इट् ॥१।२।२॥**

[1]विजेः परो ङिणद्वर्जं इडादिप्रत्ययो ङिद्वत् स्यात् ॥
ष्ट । विजिता ।[4]

इति तुदादिप्रक्रिया ।

---

ओविजी । विजते ।

विजः । 'वृद्धिर्यस्याचाम्—' इत्यतः 'यस्यादिः' इत्यनुवर्तते ।
विशेष्यते । यस्यादिरिति । तेनोत्तमैकवचनमिड् न गृह्यते ।
मात्रं वा न गृह्यते । किं त्विडादिप्रत्यय इत्यभिप्रेत्याह । इडादिः
इति । अविजिष्टेति । इट् । षत्वम् । ष्टुत्वम् । विविजे ।
ति । ङित्त्वान्न गुणः । विजिषीष्ट । विजिष्यते ॥

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्योयं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय—
व्याख्यानेस्मिन् प्रसादे निरगमदमला प्रक्रियेयं तुदादेः ॥

---

विजेरपि परो $D_1$. २. ङित् $D_3$, $D_4$. ३. Before it—विविजे $B_2$.
, $B_2$ have after it—विजिष्यते; after it—आत्मनेभाषा ॥ $D_2$.

रुधिर् आवरणे ।

**रुधादिभ्यः श्नम् ॥३।१।७८॥**

रुधादिभ्यः श्नम् प्रत्ययः स्यात् कर्तरि सार्वधातुके
शप् । मित्त्वादन्त्यादचः परः ।[2] रुणद्धि ।[4] 'श्नसोरल्लोप
धत्वम् । 'झरो झरि सवर्णे' । परत्वात् कृतस
णत्वस्यासिद्धत्वादनुस्वारः । तदादेशस्य परसवर्णस्यासिद्ध
णत्वम् । अनुस्वारपरसवर्णौ प्रति श्नस्याल्लोपो न स्थानि
रुन्द्धः । रुन्धन्ति । रुन्ध्यात् । अरुणत् । 'दश्च' इ

---

**रुधिर्** । आवरणं व्याप्तिः । इतश्चय उभयपदिनः । एको
**न शबिति** । श्नमा बाधितत्वात् । कथं पुनर्भिन्नदेशेन श्नमा बा
न ह्यभिन्नदेशमेव बाधकारणमपि त्वेकप्रयोजनमपि । विकरण
सार्वधातुकस्य धातोश्चार्थाभिधाने सहायास्तत्साहाय्यं श्नमैव कृत
शपा न भाव्यम् । **रुणद्धीति** । रुनध् ति इति स्थिते **धत्वा**
'झषस्तथोः---' इति धत्वम् । 'झलां जश् झशि' इति दत्वम् ।
तस् इति स्थिते **धत्वमिति** । 'झषस्तथोः—' इति । 'झरो झरि स
इति पूर्वधकारस्य लोपः । 'नश्चापदान्त---' इत्यनुस्वार
'अनुस्वारस्य ययि परसवर्णः' । 'अट्कुप्वाङ्---' इति नस्य णत्वे
आह । **परसवर्णस्येति** । 'पूर्वत्रासिद्धम्' इत्यासिद्धत्वादिति भ
ननु चात्रानुस्वारपरसवर्णावेव न स्याताम् । यतः 'अचः परस्मि
इत्यल्लोपस्य स्थानिवत्त्वमित्याशङ्क्याह । **अनुस्वारपरसवर्णावि**
'न पदान्त---' इत्यनेनेति ज्ञेयम् । **रुन्धन्तीति** । श्नम् । अः
अनुस्वारपरसवर्णौ । रुणत्सि । रुणद्धि । रुन्द्धि । अरुणादिति ।
श्नम् । 'हल्ङ्याब्---' इति लोपः । 'वावसाने' । 'दश्च' इ

---

१. After it—परे D₃. २. शपापवादः D₁. ३. After it—'झष
धोः' । C. ४. After it—रुन्द्धे C; N has रुन्द्धः । रुन्द्धे. ५.
परत्वात् to तदादेशस्य dropped D₃. ६. तदादेशस्य dropped
७. From अनुस्वार...to रुत्वम् dropped B₁.

. । अरुणद् । अरुणः । अरुधत् । अरौत्सीत् । एवं
ृ छिदिर् रिचिर् विचिर् क्षुधिर् युजिर् ।

उछृदिर् दीप्तिदेवनयोः । छृणत्ति । छृन्ते । अच्छृदत् ।
र्दीत् । अच्छर्दिष्ट । 'सेसिचि—' इति वेट् । छर्दिष्यति ।
ति । एवं उतृदिर् हिंसानादरयोः । शिष्लृ विशेषणे ।
नष्टि । हेर्धिः । षस्य जश्त्वेन डः । ष्टुत्वम् । 'झरो झरि—'

---

ति । 'सिपि' इति ज्ञेयम् । अरुधदिति । 'इरितो वा' इति
रङ् । अरौत्सीदिति । अङभावे सिच् । 'वदव्रज—' इति वृद्धिः ।
। रुरोध । रोद्धा । रुध्यात् । रोत्स्यति । अरोत्स्यत् । रुन्द्धे ।
। रुन्द्धाम् । अरुन्द्ध । अरुद्ध । रुरुधे । रोद्धा । रुत्सीष्ट ।
। अनुरुध कामे । अनुपूर्वो रुधिरिच्छार्थो दिवादिः । अनुरुध्यते ।

उछृदिर् । द्वौ सेट्कौ । छृणत्ति । छृन्ते । इरित्वादङ् वा ।
त् । अच्छर्दीत् । अच्छर्दिष्ट । चच्छर्द । चच्छृदे । छर्दिता । छृद्यात् ।
। छृत्सीष्ट । एवमुतृदिर् । तृणत्ति । तृन्ते । अतृदत् । अतर्दीत् ।
। ततर्द । ततृदे । तर्दिता । तृद्यात् । तर्दिषीष्ट । तृत्सीष्ट ।
ते । तर्दिष्यते । तर्त्स्यति । शिष्लृ । इतश्चत्वारः परस्मैपदिनः ।
। शिनष्टि । शिंष्टः । शिंषन्ति । शिनक्षि । शिंष्यात् । शिनष्टु ।
हि इति स्थिते 'श्नसोरल्लोपः । हेर्धिः इति । 'हुझल्भ्यः—'
षस्येति । 'झलां जश् झशि' इति । आन्तरतम्यादित्यर्थः ।
ति । 'ष्टुना ष्टुः' इति । 'नश्चापदान्तस्य' इत्यनुस्वारः ।

---

rom एवं to युजिर् dropped $D_1$, $D_3$, $D_4$. २. भिदिर् विदारणे ।
धीकरणे । रिचिर् पृथग्भावे । क्षुदिर् संचूर्णे । युजिर् संयोगे । $D_2$.
m छृणत्ति to अच्छर्दिष्ट dropped $D_1$, $D_3$. ४. उछृदिर् N.
r it—तृणत्ति । तृन्ते $B_1$, $B_2$; after it—उभयतो भाषा $D_2$.
pped $D_1$, $D_3$ ; शिनष्टि $D_4$. ७. 'हुझल्भ्यः—' इति हेर्धिः $B_1$, $B_2$
८. षस्य चर्त्वं जश्त्वं डः $D_2$. ९. जश्त्वम् $B_1$, $D_3$, $D_4$.

इति ढलोपः । अनुस्वारपरसवर्णौ । शिण्ढि । अशिं
औशिषत् । शेष्टा । एवं पिष्लृ संचूर्णने । तृह हिंसायाम् ।

तृणह इम् ॥७।३।९२॥

तृहः श्नमि कृते इमागमः स्यात् पिति हलि सार्वधा
तृणेढि । तृण्ढः । तृहन्ति । तृणेक्षि । तृणेह्मि । तृंह्वः । तृं
तृणेढु । अतृणेट् । अतर्हीत् ॥

---

'अनुस्वारस्य ययि परसवर्णः' । अशिनट् इति । ल
'हल्ङ्याब्---' इति लोपः । जश्त्वचर्त्वे । लृदित्वादङ् । अशि
शिशेष । शेष्टा । शेक्ष्यति । तृह । इतश्चत्वारः सेट्काः ।

तृणहः । तृणह इत्यागतश्नम्कस्य ग्रहणम् । श्नमि कृते इ
यथा स्यात् । ततश्च तौदादिकस्य तृहेर्ग्रहणं न । अस्यापि यङ्
स्यापि ग्रहणं न भवति । तृणेढीति । श्नम् तृणह इति स्थिते इ
मित्त्वादन्त्यादचः परः । 'हो ढः' । 'झषस्तथोः—' इति त
धकारः । ष्टुत्वम् । 'ढो ढे लोपः' । तृण्ढ इति । 'श्नसोरल्लो
ढत्वम् । ष्टुत्वम् । ढलोपः । अनुस्वारपरसवर्णौ । तृणेक्षीति ।
ढत्वम् । 'षढोः—' इति कत्वम् । तृण्ढः । तृणेह्मि । तृंह्वः ।
तृंह्यात् । तृणेढु । तृण्ढि । तिपि लोपे कृते हलादाविति सवर्णा
प्रत्ययलक्षणा परिभाषेष्यत इतीम् । अतृणेट् । अतर्हीदिति ।
सिच् । इट् । गुणः । ततर्ह । तर्हिता । तृह्यात् । तर्हिष्यति ।

---

१. After it—अशिष्टाम् C. २. From अशिषत् to संचूर्णने d
$D_1$, $D_4$. ३. In place of it C has शिशेष । शिशिषतुः । f
dropped $D_3$. ४. Before it—भञ्जो आमर्दने । श्नान्नलोपः ।
श्नमयमुच्छिष्टानुबन्धो गृह्यते । तत उत्तरस्य नकारस्य लोपः स्यात् ।
अभाङ्क्षीत् । बभञ्ज । भङ्क्ता । भुज पालनाभ्यवहारयोः । भुनक्ति । अ
भोक्ता । उन्दी क्लेदने । उनत्ति । उन्दांचकार । तञ्चु संकोचने । तनक्ति
वर्जने । वृणक्ति । अवर्जीत् । ववर्ज । एवं वृचीपृची संपर्के । पृणक्ति
चेष्टिते । कृणत्ति $B_2$, $D_2$ ($D_2$ has भनक्ति । भङ्क्ता and पृची for वृ
५. From तृणेह्मि to अतृणेट् dropped $D_1$, $D_2$, $D_3$, $D_4$ ($D_2$ has
तृणेह्मि । तृंह्व । तृंह्मः dropped N.

[1]हिसि हिंसायाम् । इदित्त्वान्नुम् ।

श्नान्नलोपः ॥६।४।२३॥

श्नमः परस्य नस्य लोपः स्यात् । हिनस्ति ।[3] अहिंसीत् ।

अञ्जू व्यक्ति[4]म्रक्षणकान्तिगतिषु । अनक्ति । अङ्क्तः ।

ग्धि ।

---

हिसि । इदित्त्वान्नुमिति । 'इदितो नुम् धातोः' इति ।
: । श्नमयमुत्सृष्टमकारानुबन्धो गृह्यते इत्यभिप्रेत्याह ।

श्नमः परस्येति । शकारवतो ग्रहणं किम् । यज्ञानाम् ।
। च' इति दीर्घे कृतेपि स्थानिवत्त्वान्नलोपः स्यादेव । विश्नानां
नामित्यत्र लक्षणप्रतिपदोक्तपरिभाषया न भवति । लाक्षणि-
दस्य । हिंस्तः । हिंसन्ति । हिंस्यात् । हिनस्तु । 'धि च' इति
पः । हिन्धि । 'तिप्यनस्तेः' इति दः । अहिनत् । अहिनद् ।
पे धातोः' इति वा रुः । अहिनत् । अहिनः । अहिनद् ।
स । हिंसिता । हिंस्यात् । हिंसिष्यति ।

अञ्जू । व्यक्तिः प्रकटना । म्रक्षणं घृतादिसेकः । कान्तिर्दीप्तिः ।
हीति । श्नम् । श्नान्नलोपः । अञ्जन्ति । अनक्षि । अञ्ज्यात् ।
ग् । अङ्ग्धीति । 'हुझल्भ्यो हेर्धिः' । 'चोः कुः' । जश्त्वम् ।
ग् । आनग् ।

---

Before it—वृह वृद्धौ । वृण्ढि । अवर्हीत् $B_1$, P, C, N (N drops
. २. 'इदितो नुम् धातोः' $D_1$. ३. After it—अहिनत् । 'तिप्यनस्तेः' ।
: । अहिनत् । 'सिपि धातोरुर्वा' । अहिंसीत् । $B_2$, $D_2$. ४. व्यक्तिम्रक्षण°
$B_2$.

अञ्जेः सिचि ॥७।२।७१॥

अञ्जेः सिचो नित्यमिट् स्यात् ॥ आञ्जीत् । आनञ्ज आनञ्जतुः । अङ्क्ता । अञ्जिता ।[2]

ञिइन्धी दीप्तौ । इन्द्धे । इन्धाते । इन्धांचक्रे ।

विद विचारे । विन्ते । एवं खिद दैन्ये ।[7]

इति रुधादिप्रक्रिया ॥

---

आनञ्जेति । 'अत आदेः' । 'तस्मान्नुड् द्विहलः' इति नु

अङ्क्ता अञ्जितेति । ऊदित्वादिड्वा । अज्यात् । अञ्जिष्या अङ्क्ष्यति ।

ञीन्धी । आत्मनेपदी । इन्धे इति । त । टेरेत्वम् । श्न आन्नलोपः । 'झषस्तथोः—' इति धः । 'झरो झरि सवर्णे' पूर्वधलोपः । इन्धते । इन्धीत । इन्धाम् । इन्त्स्व । इन्ध्वम् । ऐन् ऐन्धिष्ट । इन्धांचक्रे इति । 'इजादेः—' इत्याम् । 'आम्प्रत्ययवत् इत्यात्मनेपदं कृञः । इन्धिता । इन्धिषीष्ट । इन्धिष्यते । ऐन्धिष्यत

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्योयं माणिकाम्बाप्यजनयदतुलं विट्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन् प्रसादे निरगमदमला प्रक्रियेयं रुधादेः ॥

---

१. Dropped $D_1$, $D_2$, $D_3$, $D_4$; after it आनञ्जुः N. २. After i अज्यात् । अञ्जिष्यति $B_2$; परस्मैभाषा $D_2$. ३. इन्धी P, C, $B_1$, ४. Dropped $D_4$. ५. From विद to दैन्ये dropped P, $D_1$, $D_3$, ६. विचारणे $D_2$, N. ७. After it—खिन्ते । चिखेद $B_2$; आत्मनेभा $D_2$; after it-खिन्ते N.

तनु विस्तारे ।

**तनादिकृञ्भ्य उः ॥३।१।७९॥**

तनादिभ्य उः स्यात् ॥ तनोति । तनुतः । तन्वन्ति । तनुवः । अतानीत् ।[४] अतनीत् ।

**तनादिभ्यस्तथासोः ॥२।४।७९॥**

तनादेः सिचो वा लुक् स्यात् तथासोः परयोः ॥ ...तोपदेश—' इति अनुनासिकलोपः । अतत । अतनिष्ट । अतनिष्ठाः ।

षणु दाने । सनोति । 'जनसनखनां सञ्झलोः' । असात ।

---

...। इत आरभ्य आगणान्ताः षडुभयपदिनः । पञ्च सेट्काः । ...। गुणः । तनुते इति । सार्वधातुकमपिदिति ङित्त्वाद्गुणाभावः ...। तनोषि । तन्वः । तनुव इति । 'लोपश्चास्यान्यतरस्यां म्वोः ।' ...लोपः । तन्मः । तनुमः । तनुयात् । तनोतु । 'उतश्च' इति ...नु । अतनोत् । तनुते । तन्वीत । तनुताम् । अतनुत । ...। अतनीदिति । 'अतो हलादेः' इति वा वृद्धिः ।

...दिभ्यः । तथासोः साहचर्यादात्मनेपदस्य तशब्दस्य ग्रहणम् । ...न भवति । अतनिष्ट यूयमिति । ततान । तेने । तनिता । तनिषीष्ट । तनिष्यति । तनिष्यते । अतनिष्यत् । अतनिष्यत ।

...। सनोतीति । 'धात्वादेः षः सः' । उः । गुणः । सनुते । ...। असनीत् । असातेति । 'तनादिभ्यः' इति सिचो वा लुक् ।

---

...dropped $D_1$, $D_2$, $D_4$, $N_1$. २. Dropped $D_1$, $D_3$. ...ed $D_2$, $D_4$ तनुवः dropped $N_1$. ४. After it–'अतो हलादेर्लघोः' . ५. अतनीत् dropped $D_2$. ६. परतः $B_1$, $D_1$, $D_4$, $N_1$. ...t—ततान । तन्यात् । तनिता $B_2$. ८. Dropped $D_1$, $D_4$. before it—असनीत् । असानीत्.

असनिष्ट । असाथाः । असनिष्ठाः । 'ये विभाषा' । साय
सन्यात् ।[२]

क्षणु हिंसायाम् । क्षणोति । 'ह्म्यन्तक्षण—' इति न वृ
अक्षणीत् । अक्षत । अक्षणिष्ट ।[४]

क्षिणु हिंसायाम् । उप्रत्यये तनादेर्नोपधा गुणः ।[५] उ
ऋकारस्य तु वा । क्षिणोति । अक्षेणीत् ।[६] अक्षित । अक्षेणि

---

असनिष्ट । सिचो लुगभावे इट् । असाथाः । असनिष्ठाः ।
पूर्ववत् । ससान । सेने । सनिता । सनिषीष्ट । सनिष्यति । सनि

क्षणु । क्षणोति । क्षणुते । अक्षणीदिति । 'ह्म्यन्तक्ष
इति न वृद्धिः । अक्षत । अक्षणिष्टेति । वा सिचो लुक् । पक्षे '
हात्तोपदेश—' इति अनुनासिकलोपः । चक्षाण । चक्षणे । क्षा
क्षण्यात् । क्षणिषीष्ट ।

क्षिणु । इमं धातुं दुर्गः पठति पूर्वस्य स्थाने । तन्मतोपसं
पाठोऽत्रास्य । उप्रत्यये तनादेरिति । एतदपि दुर्गमतम् । त
विकरण इति शप्येव गुणं विदधाति । उपधा ऋकारस्य तु
तथोक्तं क्षीरतरङ्गिण्याम् । एते सार्वधातुके संदिग्धगुणाः । ऋ
अर्णोति । इत्यादि । क्षिणुते । अक्षेणीत् । अक्षेणिष्ट । अक्षितेति
सिचो लुक् । अनुनासिकलोपः । ङित्त्वान्न गुणः । चिक्षेण । चि
क्षेणिता । क्षिण्यात् । क्षेणिषीष्ट ।

---

१. Dropped $D_3$. २. After it–सनिष्यति $B_2$; सन्यात् bef
विभाषा $D_4$. ३. Dropped $N_1$. ४. Dropped $D_3$. ५. नोपधाय
P. ६. Dropped $D_1$, $D_3$, $D_4$; अक्षिणोत् $D_2$

ऋण गतौ । ऋणोति । अर्णोति । ऋणुयात् । अर्णुयात् ।
ऋणोतु । अर्णोतु । आर्णोत् । आर्णोत् । आर्णिष्टाम् । आर्त ।
आर्णिष्ट । आनर्ण । आनृणतुः ।

डुकृञ् करणे । करोति । 'अत उत्सार्वधातुके' । कुरुतः ।
यणादेशः । 'न भकुर्छुराम्' इति न दीर्घः । कुर्वन्ति ।

---

ऋणु । ऋणोति । अर्णोतीति । 'उपधा ऋकारस्य तु वा' इति
उपधागुणः । ऋणुते । आर्णोत् । आर्त । आर्णिष्टेति । वा सिचो लुक् ।
लुक्पक्षे अनुनासिकलोपः । 'आडजादीनाम्' इत्याट् । 'आटश्च'
इति वृद्धिः । आनर्णेति । 'अत आदेः' इत्यभ्यासदीर्घः । ऋकारैकदेशो
रेफोपि नुड्विधिं प्रति हल् । तेन 'तस्मान्नुड् द्विहलः' इति नुट् ।
आनृणे । अर्णिता । ऋण्यात् । अर्णिषीष्ट । आर्णिष्यत् । आर्णिष्यत ।

डुकृञ् । अनिट् । करोतीति । 'तनादिकृञ्भ्य उः' । तनादित्वा-
सिद्धे कृञो ग्रहणमन्यत् तनादिकार्यं नास्येति ज्ञापयतीति तनादे-
रुपधागुण इति गुणनिषेधो नेति गुणो रपरः । उकारस्य गुणः । कुरुत
इति । उत्वम् । यणादेश इति । कुरु अन्ति इति स्थिते 'इको यणचि'
इति यणादेशः । 'न भ र्छुराम्' इति न दीर्घः । 'हलि च' इति
दीर्घः । एतच्च कुर्व इत्येतस्मात् प्राक् स्थितं लेखकदोषादत्र पठितं
स्यात् । यतः कुर्वन्तीत्यत्र 'अचः परस्मिन्—' इति यणः स्थानिवत्त्वा-
द्दीर्घाप्राप्तेः । 'न पदान्त—' इत्यत्र दीर्घयलोपयोर्लोपाजादेशस्यैव
स्थानिवत्त्वनिषेधात् ।

---

१. ऋणु D3, D4. २. Dropped C. ३. From ऋणोतु to आर्णिष्टाम् dropped D1; From ऋणुयात् to आर्णिष्टाम् dropped D2, D3, D4. ४. Dropped N. ५. Dropped C; after it—आर्णिषु; N. ६. Dropped D3, D4; after it—तृणु अदने । तृणोति । तर्णोति । तृणुते एवं घृणु । वनु याचने । वनुते । मनु अवबोधने । मनुते B2, D2.

**नित्यं करोतेः ॥७।४।१०८॥**

करोतेः प्रत्ययोकारस्य नित्यं लोपः स्यान्म्वोः परयोः[1] । कुर्वः । कुर्मः ।

**ये च ॥६।४।१०९॥**

कृञः उल्लोपः स्याद्यादौ प्रत्यये[2] ॥ कुर्यात् ।[3] कृञ स्तनादित्वेपि सिचो वा[4] लुग् न । अकृत ।

**संपर्युपेभ्यः करोतेर्भूषणे ॥६।१।१३७॥**

एभ्यः करोतेः[5] सुडागमः स्याद् भूषणेर्थे ॥ संस्करोति

---

नित्यम् । नित्यग्रहणं स्पष्टार्थम् । कुर्व इति वसि उकारलोपस्य दीर्घविधौ स्थानिवत्त्वाभावात् 'हलि च' इति [6]दीर्घे प्राप्ते भवति निषेधः

ये च । चकारो लोपानुकर्षणार्थः । कुर्यात् । करोतु । अकरोत् कुरुते । कुर्वीत । कुरुताम् । अकुरुत । अकार्षीत् । कृञस्तनादि व्याख्यातप्रायम् । अकृतेति । 'ह्रस्वादङ्गात्' इति सिचो लुक् चकार । चक्रे । कर्ता । क्रियात् । कृषीष्ट । करिष्यति । करिष्यते

संपरि । संस्करोतीति । 'समः सुटि' इति रुः । 'अत्रानु नासिक—' इति पूर्वाकारः सानुनासिकः । संपुंकानां सो वक्तव्यः संपूर्वस्य क्वचिदभूषणेपीष्यते संस्कृतमन्नमित्यत्र तच्च 'संस्कृतं भक्षाः[7] इति निर्देशात् । ननु च समस्कृषातामित्यादिषु 'ऋतश्च संयोगादे इतीट् कस्मान्न भवति । यतोत्र सुटि कृते करोतिः संयोगादिर्भवतीत्य शङ्कानिराकरणायाह । सुट उपदेशेत्यादि । अयमभिप्रायः

---

१. उप्रत्ययस्य लोपः $D_3$; उलोपः $D_4$. २. प्रत्यये परे $N_1$, $D_3$. ३ After this—अकार्षीत् $B_2$. ४. वा सिचो $N_1$. ५. करोतौ भूषणे सुडागमः स्यात् I ६. दीर्घप्राप्तेर्न इति निषेधः $Bo_2$. ७. भक्ष्याः $Bo_2$.

अडभ्यासव्यवायेपि सुट्। उपदेशाधिकारत्वात् 'ऋतश्च
गादेः—' इति लिङ्सिचोर्नेट्। समस्कृषाताम्। सेंचस्कार। '
संयोगादेर्गुणः' इत्यत्र संयोगोपधग्रहणं कर्तव्यम्। कृञश्
गुणः। संचस्करतुः। कृसृभृवृ इति सूत्रे ऋतो भारद्वाजेति
कृञोसुट इति वक्तव्यमिति नियमात् ससुट्कस्येट्। संचस्क
संचस्करिव। सुटो बाहिरङ्गत्वात् 'गुणोर्तिसंयोगाद्योः' इति
न। सँस्क्रियात्। संस्कृषीष्ट। 'परिनिविभ्यः—' इति

---

'ऋतश्च संयोगादेः' इत्यत्र 'एकाच उपदेशेनुदात्तात्' इत्यत उ
ग्रहणमनुवर्तते। तेनोपदेशावस्थायां यः संयोगादिस्तत एव स्या
न च करोतिरुपदेशावस्थायां संयोगादिः। किं तर्हि। उपदेश
कालम्। अतोत्र न भवतीति। संचस्कारेति। अडभ्यासव्य
सुट्। 'ऋतश्च संयोगादेर्गुणः' इत्यत्र संयोगोपधग्रहणं कर्त
कृञर्थमिति गुण इति। ननु अनेकाल्त्वात् संयोगस्योपधा
संभवत्येवेति कथं संयोगोपधग्रहणं कर्तव्यमित्युक्तम्। उ
अवयवस्योपधात्वमवयविनि संयोगे उपचर्यते। यथाढ्यमिदं नगरं
अथवा संयोगोपधग्रहणेनान्त्यात् पूर्वत्वमुपलक्ष्यते। सुटो बहिरङ्ग
त्यादि। अत्र धातूपसर्गयोर्योगे द्वे दर्शने। एकं तावत्। पूर्व
साधनेन युज्येत पश्चात् सिद्धरूपं उपसर्गेणेति। द्वितीयं तु
धातुरुपसर्गेण युज्यते पश्चात् साधनेनेति। तत्र पूर्वस्मिन् पक्षे संस्
संस्कृषीष्टेत्यत्र 'गुणोर्ति—' इत्यन्तरङ्गे गुणे क्रियमाणे उपस
भाविनः सुटो बहिरङ्गत्वादसिद्धत्वात् संयोगादित्वाभावात्
नेत्यभिप्रायः। द्वितीये तु दर्शने सुटो नैं भक्तत्वात् संयोगादित्वं न

---

१. उपदेशाधिकारत्वात् in Mss. other than $D_4$. २. P dr
३. Dropped $D_4$, $N_1$; कृसृभृसूत्रे $D_3$. ४. °द्वाजस्येति $D_1$. ५. नि
$D_3$. ६. न गुणः $B_1$, P, C, N. ७. संस्कृयात् P. ८.
कार्यमित्युक्तम्। $Bc_2$. ९. संयोग $Bc_2$. १०. अभक्तत्वात् $Bc_2$.

परिष्करोति । 'सिवादीनाम्—' इति षत्वं वा । पर्यष्कार्षीत् । पर्यस्कार्षीत्[1] । उपस्करोति ।[2]

**उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु ॥ ६।१।१३९॥**

उपात् कृञः सुट् स्यात् पुनर्गुणाधाने विकारेऽध्याहारेऽर्थे ।[3] उपस्कुरुते ॥

इति तनादिप्रक्रिया ।

---

गुणो न । सुटोभक्तत्वं च कॄ विक्षेपे इत्यत्र धातौ निपुणतरं प्रत्यपादि **समवाये** । समवयनं समवायः । 'एरच्' इतीणोच् । समुदाय इत्यर्थः अत एवाह । **सङ्घेऽर्थे** इति ।

उपात् । प्रतियत्नस्य व्याख्यानं गुणाधानमिति । सतोऽर्थस पूर्वगुणेभ्यो योन्यो गुणस्तस्याधानं गुणाधानं तस्मिन्नर्थे । विकृ इत्यस्य व्याख्या विकार इति । विकृतमेव वैकृतम् । प्रज्ञादित्वाद इत्यभिप्रायः । वाक्याध्याहारे इत्येकदेशेनानूदितमध्याहारे इति गम्यमानार्थस्य वाक्यस्य स्वरूपेणोपादानं वाक्याध्याहारः । भूषणार्थे क्रमेणोदाहरणानि । उपस्कृता कन्या । अलंकृतेत्यर्थः । उपस्कृ ब्राह्मणाः । समुदिता इत्यर्थः । एधोदकस्योपस्कुरुते । गुणाध करोतीत्यर्थः । उपस्कृतं भुङ्क्ते । विकृतमित्यर्थः । उपस्कृ जल्पति । वाक्याध्याहारेण जल्पतीत्यर्थः ॥

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा—
चार्यो यं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेऽस्मिन् प्रसादे निरगमदमला प्रक्रियेयं तनादेः ॥

---

१. पर्यस्कार्षीत् । पर्यष्कार्षीत । N: पर्यष्कार्षीत् dropped $D_4$. २. Af it—समवाये च ॥६।१।१३८॥ संपर्युपेभ्यः कृञः सुट् स्यात् सङ्घेऽर्थे । उपस्कारं $B_2$, $D_1$, $D_2$ (उपस्कृता ब्राह्मणा समुदिता इत्यर्थः $D_1$); $D_3$, $D_4$, $N_1$ g the Sûtra and the Vritti up to सङ्घेऽर्थे. ४. After it—उपस्करोति

डुक्रीञ् द्रव्यविनिमये

**क्र्यादिभ्यः श्ना ॥३।१।८१॥**

क्र्यादिभ्यः श्नाप्रत्ययः स्यात् कर्तरि सार्वधातुके । पवादः । क्रीणाति । 'ई हल्यघोः' । क्रीणीतः । भ्यस्तयोरातः' । क्रीणन्ति । क्रीणीते ।[2]

स्कुञ् आप्रवणे ।[3]

**स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः[4] श्नुश्च ॥ ।८२॥**

एभ्यः श्नुः स्यात् श्ना च कर्तरि सार्वधातुके ।[5] स्कुनोति । नाति ॥[6]

स्तम्भुस्तुम्भुस्कम्भुस्कुम्भु रोधने। एते सौत्राः। 'अनिदिताम्–'[6]

---

डुक्रीञ् । द्रव्यविनिमयः परिवर्तः । द्वावुभयपदिनावनिटौ च । न्तीति । 'झोन्तः' । आलोपः । क्रीणीते इति । टेरेत्वम् । 'ई घोः' । क्रीणाते । क्रीणते । क्रीणीयात् । क्रीणातु । अक्रीणात् । षीत् । चिक्राय । क्रेता । क्रीयात् । क्रेष्यति । अक्रेष्यत् । ीते । क्रीणीताम् । अक्रीणीत । अक्रेष्ट । चिक्रिये । क्रेषीष्ट ।

स्कुञ् । आप्रवणमुद्धरणम् ।

सौत्रोयमिति केचिदाचार्याः । स्तम्भुस्तुम्भुस्कम्भुस्कुम्भु ने । एते चत्वारः सौत्राः । उदित्त्वप्रतिज्ञानात् श्नुश्नाव्यतिरिक्त- येपि सर्वस्मिन् एतेषां धातुत्वमिति ज्ञायते । स्कुनाति । ीते । स्कुनोति । स्कुनुते । अस्कौषीत् । अस्कोष्ट ।

---

°रातो लोपः $B_2$. २. After it—अक्रैषीत् । चिक्राय । क्रीयात् । क्रेषीष्ट । । क्रेष्यति । क्रेष्यते $B_2$; अक्रैषीत् for क्रीणीते $D_2$. ३. आप्रवणमागम- द्धरणं ता $B_2$; आवरणे $D_2$, $D_3$, $B_1$, N, P, C. ४. °स्कुभ्यः N, $D_4$. After it—अस्कौषीत् $D_2$. ६. अनिदितां लोपः C.

इति नेर्लोपः । विष्टभ्नोति । अवष्टभ्नोति । 'जृस्त
वा । व्यष्टभत् । व्यष्टम्भीत् । अवतष्टम्भ । स्तुभ्नोति

वेः स्कभ्नातेर्नित्यम् ॥८।३।७७॥

'वेः परस्य स्कभ्नातेः सस्य षः
विष्कभ्नाति । स्कभ्नातेरित्युक्तेः स्कभ्नोतेर्न[6] ।
स्कुभ्नोति ।

मीञ् हिंसायाम् । 'हिनुमीना' ।

---

चुस्काव । चुस्कुवे । स्कोता । स्कूयात्
स्तम्भित्यादि । सर्वे परस्मैपदिनः सेट्काश्च ।
'स्तम्भुस्तुम्भु' इत्यादिना श्नुः । 'स्तन्भेः' इति षः
श्ना । 'अवाच्च—' इति षः । व्यष्टभत् । व्यष्ट
सितादड्व्यवायेपि' इति षः । अङ्पक्षे न्लोपः ।
इट् । ईट् । अवतष्टम्भेति । 'अड्भ्यासव्यवा
स्तम्भिता । स्तुभ्नोति स्तुभ्नातीति । श्नुः श्ना च
इति न्लोपः । अस्तुम्भीत् । तुस्तुम्भ । स्तुम्भि
स्तुम्भिष्यति ।

मीञ् । उभयपदी अनिट् च । 'हिनुमीना' ।

---

१. नर्लोपः D2, C, B1, B2. २. After it—वि
it—अवष्टभ्नोति N. ३. C, D2 drop it; स्तुभ्नाति
४. नित्यं वेः परस्य B2. ५. Dropped B2. ६. नें
भ्नाति । स्कभ्नाति B2. ८. स्कुभ्नाति । अस्कुंभीत् D2
D3; after it—स्कुभ्नाति D4. ९. After it—मीनी

'मीनातिमिनोति—' इत्यात्वम् । अमासीत् । अमास्त ।
मिम्यतुः ।

पूञ् पवने ।

**प्वादीनां ह्रस्वः ॥७।३।८०॥**

प्वादीनां द्वाविंशतेर्ह्रस्वः स्यात् शिति परे ॥
ह्रस्वो वेति केचित् । पुनाति । पुनीते । अपावीत् । उ

---

मीनीते । **अमासीदिति** । 'यमरम—' इतीट्सकौ । **अ**
आत्वम् । **ममाविति** । 'आत औ णलः' । **मिम्य**
एज्निमित्ताभावादात्वं न । यणादेशः । मिम्ये । माता ।
मासीष्ट । मास्यति । मास्यते ।

**पूञ्** । पवनं शुद्धिः ।

इत आरभ्य सप्त सेट्काः । चत्वार उभय
**प्वादीनाम्** । अत्र च मतद्वयमस्ति । केषांचिन्मते ल
वृत् इति प्वादयः । केषांचिन्मते आगणान्ताः । तत्र
आगणान्तास्तेषां वृत्करणं ल्वादिसमाप्त्यर्थम् । तन्मते ज्ञाना
ह्रस्वो न ज्ञा इति दीर्घोच्चारणसामर्थ्यात् । तत्र पूर्वमतमा
**प्वादीनां द्वाविंशतेरिति** । पूञ् पवने । लूञ् छेदने
कम्पने । स्तॄञ् आच्छादने । कॄञ् हिंसायाम् । वॄञ्
शॄ कॄ मॄ हिंसायाम् । वॄ वरणे । भॄ भर्त्सने । पॄ पालनपूरण
विदारणे । जॄ वयोहानौ । नॄ तपे । ॠ गतौ । गॄ शब्दे
वयोहानौ । प्ली वरणे । री गतिरेषयोः । क्ली गतौ । ली
एते प्वादयः । **प्वादीनामिति** । अयं भावः । यन्मतेना
प्वादयस्तन्मतेन ह्रस्वः । अन्येषां तु नेति । **पुनाति** ।
इति । ह्रस्वः । 'ई हल्यघोः' । **अपावीदिति** । लुङ् । सि
ईट् । अपविष्ट । पुपाव । पुपुवे । पविता । पूयात् । पवि

---

१. After it– मिम्ये । मीयात् $B_2$. २. Dropped $D_1$,
३. सेटः । $Bc_2$. ४. वृत् यावत् प्वादयः । केषांचिन्मते आगणान्त
मते वृत्करणं $Dc_3$. ५. न is after °सामर्थ्यात् $Dc_3$. ६. ज्या $D$
नये । स्तॄ गतौ । $Dc_3$. ८. जॄ $Dc_3$. ९. री गतिरेषणयोः । $Dc_3$. १०
ल्वी $Dc_3$. ११. °गणान्ताः $Dc_3$.

कॄञ् हिंसायाम् । अकारीत् । अकरीष्ट । अकरिष्ट
'लिङ्सिचोः—' इति वेट् । अकीर्ष्ट । करिषीष्ट । कीर्षीष्ट ।

धञ कम्पने । अधावीत् । अधौषीत् इत्यपि केचित्
तासौ नित्यानित्वाभावात् थलि नित्यमिट् ।[४] दुधविथ ।

ग्रह उपादाने । 'ग्रहिज्या—' इति संप्रसारणम् । गृह्णा

---

कॄञ् । कृणाति । कृणीते । अकारीत् । अकरिष्ट । अकरीष्टे
'लिङ्सिचोरात्मनेपदेषु' इति वेट् । 'वॄतो वा' इति वा
दीर्घः । इडभावे इति । 'लिङ्सिचोः—' इतीडभावपक्षे इत्यर्थ
अकीर्ष्टेति । 'उश्च' इति कित्त्वम् । 'ॠत इद्धातोः' । रप
दीर्घः । चकार । 'ऋच्छत्यॄताम्' इति गुणः । चकरतुः । चक
करिता । करीता । करिषीष्ट । कीर्षीष्टेति । 'लिङ्सिचोः—'
वेट् । इट्पक्षे 'न लिङि' इति न दीर्घः । अन्यदित्व
करिष्यति । करीष्यति ।

धूञ् । 'प्वादीनां ह्रस्वः' । धुनाति । धुनीते । अधावीत्
'स्तुसुधूञ्भ्यः' इतीट् । अधौषीदित्यपीति । तथोदाहृतं मुग्धब
धूञ् । अधावीत् । अधविष्ट । अधोष्ट । दुधाव । दुधविथेति । गु
द्वित्वम् । ह्रस्वः । 'अभ्यासे चर्च' । दुधुवे । धविता । धूय
धविषीष्ट । धोषीष्ट ।

ग्रह । 'ग्रहिज्या—' इति संप्रसारणमिति विशेषः । गृह्ण
गृह्णीते ।

---

१ Dropped $D_1, D_3, D_4$. २. अकरिष्ट । अकरीष्ट N, $D_4$. ३.
अकीर्ष्ट P, N, इडभावे 'उश्च' इति लिङ् सिचोः कित्त्वाद्गुणाप्राप्तौ 'ॠतइद्
अकीर्ष्ट $B_2$; $D_2$ ('हलिच' इतिदीर्घः । अकीर्ष्ट $D_2$); इडभावे $D_1$, D
४. After it—ये तु पाक्षिकानिटस्तेषां थलिकस्यापि मते नास्त्येवेट्प्रा
दुधविथ । $B_1$, P, C, N. ५. C, $B_2$, $D_1$, $D_4$ have ग्रहिज्या for ग
संप्रसारणम् ; ग्रहज्यादित्वात् $D_3$. ६. अस्वे दीर्घत्वम् । $Dc_3$.

## हलः श्नः शानज्झौ ॥३।१।८३॥

हलः परस्य श्नः शानजादेशः स्यात् हौ परे ॥ गृहा[1] अगृह्णात् । अग्रहीत् । हान्तत्वान्न वृद्धिः । जग्राह । [2] जगृह जग्रहिथ ।

## ग्रहोलिटि दीर्घः ॥७।२।३७॥

ग्रहेरिटो दीर्घः स्यान्न तु लिटि ॥ ग्रहीता ।[4]

---

हलः श्नः । 'क्र्यादिभ्यः श्ना' इति श्ने प्रकृतेपि श्न ग्रहणमादेशसंप्रत्ययार्थम् । अन्यथा प्रत्ययान्तरं स्यादिति कृत्वाह । शानजादेश इति । चकारोन्तोदात्तार्थः । स्थानिव शित्त्वे सिद्धेपि पुनः शित्करणं ञिमिदो 'व्यत्ययो बहुलम्' श्नाप्रत्ययो यदा भवति तदा तस्य शानजादेशो 'मिदेर्गुणः' इति गु भूत । इतरथा ह्ययं गुणः प्रतिषेधविषये आरभ्यमाणो यथा मेद्य भवति तथेहापि स्यात् । मिदानेति पुनः शित्त्वेपि ङि पुनर्भवति । तेन गुणो न । गृहाणेति । 'अतो हेः' इति है संप्रसारणम् । हान्तत्वान्न वृद्धिरिति । 'ह्यन्तक्षण---' इति अग्रहीष्ट । जग्राहेति । संप्रसारणम् । जगृहे ।

ग्रहः । प्रकृतस्येटो दीर्घत्वमिदं चिण्वदिटो न । ग्राहिष्यते । गृह्यात् । ग्रहीषीष्ट । ग्रहीष्यति । ग्रहीष्यते ।

---

१. Dropped N, $D_1$, $D_3$, $D_4$. २. दीर्घः for वृद्धिः $B_1$, $D_1$ ३. C $B_2$ drop it. ४. After it—उभयतोभाषा । $D_2$.

शॄ हिंसायाम् । शृणाति ।[1]

**शॄदॄप्रां ह्रस्वो वा ॥७।४।१२॥**

एषां ह्रस्वो वा स्यात् क्ङिति लिटि ॥[2] शशार । ह्रस्व[3]
'ऋच्छत्यॄताम्' इति गुणः । शशरतुः । शश्रतुः ।[5] शशारि[6]
शरिता । शरीता । शीर्यात् । शारिष्यति । शारिष्यति ॥

एवं दॄ विदारणे पॄ पालने ।

ज्या वयोहानौ । 'ग्रहिज्या—'[7] ।

**हलः ॥६।४।२॥**

अङ्गावयवाद्धलः परं यत् संप्रसारणं तदन्तस्याङ्गस्य द
स्यात् ॥ इति दीर्घत्वे कृते[8] प्वादीनां ह्रस्वः । जिनाति

---

शॄ । इत आरभ्य दश परस्मैपदिनः । शृणोति । क्षीरस्व
पक्षेयमुभयपदी । अशारीत् ।

शॄ । शॄ हिंसायाम् । दॄ विदारणे । पॄ पालने । शश
शशरतुः । शश्रतुरिति । ह्रस्वाभावे 'ऋच्छत्यॄताम्' इति गु
ह्रस्वत्वे यणादेशः । शरिता । शरीता । शीर्यात् ।

एवं दॄ । दृणाति । अदारीत् । ददार । ददरतुः । दद्र
दरिता । दरीता । पॄ । पृणाति । अपारीत् । पपार । पपरतुः । पप्र

ज्या । ह्रावनिटौ ।

हलः । हल इति किम् । उतः । अङ्गावयवादिति वि
निरुतम् । दुरुतम् । तदन्तस्येति किम् । विद्धः । विचितः ।
तृतीयमित्यत्र कथं दीर्घो न । तृतीयेति निपातनात् । अज्यास

---

१. After it—अशारीत् P, C, $B_1$, $B_2$. २. क्किति $D_3$. $D_4$. ३. A
it—शशरतुः । शश्रतुः for शशार to शरीष्यति $D_1$, $D_3$, $D_4$ ; शशरतुः । श
शशरिथ । शशरिव । शश्रिव । शश्रिम । शीर्यात् $D_2$. ४. From ह्रस्वाभा
गुणः dropped N, $D_4$. ५. After it—शशरुः । शश्रुः P, N,
६. Dropped N. ७. 'ग्रहिज्या—' इति संप्रसारणम् $D_3$, $B_1$, C, N. ८.
or प्राप्ते $D_2$, N, $B_2$ प्राप्ते dropped $D_4$.

ज्यौ। जिज्यतुः। [2]जीयात्।

व्री वरणे। व्रीणाति।[3] ज्ञा अवबोधने। ज्ञाजनोर्जा।
नाति।[4] श्रन्थग्रन्थसंदर्भे। श्रथ्नाति। श्रन्थिग्रन्थ्योः किति
टि सेटि थलि च एत्वं वक्तव्यम्॥* वेति केचित्। श्रेथतुः।
न्थतुः। श्रेथिथ [6]। शश्रन्थिथ। एवं ग्रन्थ। कुष निष्कर्षे।
णाति। कुषाण।

---

ज्याविति। 'आत औ णलः'। 'लिट्यभ्यासस्य' इति
यासंप्रसारणम्। जिज्यतुरिति। संप्रसारणं 'ग्रहिज्या---' इति।
लः' इति दीर्घः। ननु च संप्रसारणे कृते 'सनुलिटोर्जेः' इति
ं कस्मान्नेति चेत्। मैवम्। लाक्षणिकत्वान्नेति पूर्वमेव प्रत्यपादि।
ता। जीयात्। ज्यास्यते।

व्री। व्रीणाति। व्रिणाति। ज्यादीना ह्रस्वो वेति केचित्।
षीत्। विव्राय। व्रेता। व्रीयात्। व्रेष्यति। ज्ञा। जानाति।
ासीत्। जज्ञौ। ज्ञाता। ज्ञायात्। ज्ञेयात्। ज्ञास्यति। श्रन्थ।
गणान्ताः सेट्काः। श्रथ्नातीति। 'अनिदिताम्---' इति न्लोपः।
न्थीत्। शश्रन्थ। वेति केचिदिति। तथा च पदमञ्जर्यामुक्तम्।
केचिद्वेति पठन्ति। शश्रन्थतुरित्याद्यपि यथा स्यादिति। श्रन्थिता।
थ्यात्। श्रन्थिष्यति। एवं ग्रन्थ। ग्रथ्नाति। अग्रन्थीत्। जग्रन्थ।
न्थतुः। ग्रेथतुः। ग्रन्थिता। ग्रथ्यात्। कुष। कुष्णातीति।
ाभ्यां नो णः समानपदे'। कुषाणेति। 'हलः श्नः शानज्झौ'।

---

Before it—अज्यासीत् $B_2$. २. $D_1, D_3, D_4$ drop it; $D_2$ has
ुः for it. ३. $D_1, D_2, D_3, N_1$ have व्रिणाति after it; after it—
ीत्। विव्राय। व्रीयात्। व्रेता। व्रेष्यति $B_2$. ४. After it—जानीते।
सीत्। जज्ञौ। जज्ञे। ज्ञेयात्। ज्ञायात्। ज्ञासीष्ट। ज्ञाता। ज्ञास्यति।
ाते $B_2$. ५. Dropped $N_1$. ६. Dropped $N_1$. ७. ग्रन्थे $D_2$.

निरः कुषः ॥७।२।४६॥

निरः परात् कुषो वलादेरार्धधातुकस्येड्वा स्यात् । कोषीत् । निरकुक्षत् । निरः किम् । कोषिता ।

अश भोजने । अश्नाति । अशान । आशिता । अशिष्य

वृङ् संभक्तौ । अवरिष्ट । अवरीष्ट ।[3] अवृत ।[4] ववृषे । वरि वृषीष्ट ।[5]

इति क्र्यादिप्रक्रिया ॥ इति नवगणाः ।

---

निरः । निस इति वाच्ये निर इति निर्देशेन रेफान्तमु न्तरमस्तीति ज्ञाप्यते । तस्य निलयनमिति 'उपसर्गस्यायतौ लत्वं स्यात् । निसो रुत्वस्यासिद्धत्वान्न स्यात् । निरकुक्ष 'शल इगुपध—' इति क्सः । कत्वषत्वे । चुकोष । को कुष्यात् । कोषिष्यति ।

अश । अशानेति । शानच् । आशीत् । आश । अशि इट् । अश्यात् । वृङ् । आत्मनेपदी । वृणीते । अवरिष्ट । अव 'लिङ्सिचोः—' इति वेट् । 'वॄतो वा' इति वेटो दीर्घः । अ इडभावे 'उश्च' इति कित्त्वान्न गुणः । 'ह्रस्वादङ्गात्' इति लोपः । वव्रे । ववृषे इति । क्रादित्वान्नेट् । वरिता । वरीता । वा वृषीष्टेति । 'लिङ्सिचोः—' इति वेट् । 'न लिङि' इति नेटं इडभावे कित्त्वम् । वरिष्यते । वरीष्यते । अवरिष्यत । अव

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्योयं माणिकाम्बाप्यजनयदतुलं विट्ठलाचार्यमार्यम्
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन् प्रसादे निरगमदमलः क्र्यादिसंज्ञो ग

---

१. After it—'शल इगुपधात्' इति क्सः $B_1$, P, C. २. $D_2$ h भाषा after it. ३. After it—'ह्रस्वादङ्गात्—' $B_1$, P, C. ४ अवृषि after it; N, $D_3$, Com. have ववृषे after it. ५. आत्मने भाषा after it.

चुर स्तेये ।

**सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् ॥३।१।२५॥**

एभ्यश्चुरादिभ्यः[1] स्वार्थे णिच्प्रत्ययः स्यात् । णकारो[2] वृद्ध्यर्थः । चकारः 'चितः' इत्यन्तोदात्तार्थः । उपधागुणः[3] धातुसंज्ञायां शप्तिबादि[4] । गुणायादेशौ । चोरयति ।

---

एवं नव गणा यथाकथंचिद् व्याख्याताः । अधुना चुरादिरारभ्यते । धातुप्रक्रियाकथने धाष्ट्र्यमेव कारणं सम्यग्ज्ञानाभावात् अत एवाह **क्षीरस्वामी** ।

'व्याख्यातेयं नवगणी कुशकाशावलम्बनात् ।
चुरादिरधुनारब्धो यत्र भग्ना महारथाः ॥
पाठेर्थे चागमभ्रंशान्महतामपि मोहतः ।
न विद्मः किं वा जहिमः किं वात्रादध्महे वयम् ॥' इति

**चुर** । चुरादयः सर्वे सेट्काः एव । इतः पञ्चोभयपदिनः ।

**सत्याप** । चुरादिभ्योन्येषामिह ग्रहणं प्रपञ्चार्थम् 'प्रातिपदिकाद्धात्वर्थे' इत्यनेनैव धातुसूत्रेण सिद्धत्वात् **उपधागुण** इति । 'पुगन्त--' इति । **धातुसंज्ञायामित्यादि** । 'सनाद्यन्ता धातवः' इति धातुसंज्ञायां चोरि इत्यस्मात् 'लः कर्मणि च' इति कर्तरि लकारः । वर्तमाने लट् । लस्य तिबादयः । 'शेषात् कर्तरि परस्मैपदम्' । 'शेषे प्रथमः' इति प्रथमः । तत्राप्येकत्वविवक्षायामेकवचनम् । तिप् । कर्तरि शप् । **गुणायादेशाविति** । 'सार्वधातुक—

---

१. °श्चुरादिभ्यश्च $D_1$, $D_2$, $D_3$. २. $D_1$, $D_3$, $D_4$ drop from णकारो to °न्तोदात्तार्थः. ३. उपधाया गुणः $D_2$. ४. °तिबादिः $D_1$. ५. वागम° $Bc_2$, $Dc_3$. ६. मत्र $Bc_2$. ७. 'कर्तरि' इति परस्मैपदम् $Bc_2$. ८. After it—इति भावः $Bc_2$, $Dc_3$.

-

णिचश्च ॥१।३।७४॥

णिजन्तादात्मनेपदं स्यात् कर्तृगामिनि क्रि
फले ॥ चोरयते । णिश्रीति चङ् । द्वित्वम्
उपाधाह्रस्वः । अभ्यासदीर्घः । णिलोपः । अचूचुरत्

---

इति गुणः । 'एचोयवायावः' इति अय् । चोरयति । चोरये
चोरयतु । अचोरयत् ।

णिचः । चोरयते इति । ननु च

'स्वरितेत् स्याद्ग्रहिः क्रयादौ लक्षिश्चैक[1]श्चुरादिषु' इति त
स्वरितेत्त्वस्मरणात्[3] कर्त्रभिप्राये क्रियाफले चुरादेः तङ् नास्ति
नैतत्[4] । भाष्यकारादिभिरनुक्तत्वात् । हेतुमण्णिच एव 'णिच'
इत्यत्र ग्रहणमिति चेत् नैवं वाच्यम् । यत एतदाशङ्
परिहृतं पदमञ्जर्याम् ।

एष विधिर्न चुरादिणिजन्तात् स्यादिति कश्चन निश्चिनुते
आप्तवचोत्र न किंचन दृष्टं लक्षयतेः स्वरितेत्त्वमनार्षम् ॥ इ
चोरयते । चोरयेत । चोरयताम् । अचोरयत । 'णिश्रि
इति चङिति । चोरि लुङ् । तस्य तिप् । 'च्लि लु
इति च्लिः । तस्य चङित्यर्थः[5] । द्वित्वमिति । 'चङि' इ
उपधाह्रस्व इति । 'णौ चङ्युपधायाः[6]—' इति । 'एच इग्घ्रस्वा
इति ओकारस्योकारः । अभ्यासस्य ह्रस्वः । अभ्यासदीर्घ इ
'दीर्घो लघोः' इति । णिलोप इति । 'णेरनिटि' इति । अडाग
प्रक्रियास्मरणार्थमेवानेन क्रमेण प्रक्रिया लिखिता । क्रमस्त्वेवं ज्ञे
परत्वात् द्वित्वात् पूर्वं णिलोपः । ततः परत्वाद् द्वित्वात् पूर्वमुपधाह्र
ततो द्वित्वम् । ततः सन्वद्भावादभ्यासदीर्घ इति । अचूचु
अचूचुरताम् । अचूचुरन् । अचूचुरत । अचूचुरेताम् । अचूचुर

---

१. अभ्यासस्य D3. २. °श्चैष्टः Bc2. ३. स्वरितेत्करणम् । क°
४. अत for नैतत् Dc3. ५. तस्य चङ् इत्यस्य त्वर्थः । द्वित्वमिति ।
६. उपधाया Bc2.

चोरयामास । चोरयिता । चोर्यात्[1] । [2]चुरादे[3]र्णिज्वेति केचित् । पक्षे चो[4]रतीत्यादि ।

कृत सं[5]शब्दने ।

---

**चोरयामासेति** । 'कास्प्रत्यय—' इत्याम् । 'अयामन्त—' इत्ययादेशः । 'कृञ्चा—' इति लिट्परस्य कृञोऽनुप्रयोगः । चोरयांचक्रे । **चोरयितेति** । लुट् । तासिः । इट् । **चोर्यादिति** । णिलोपः । चोरयिषीष्ट । चोरयिष्यति । चोरयिष्यते । अचोरयिष्यत् । अचोरयिष्यत । **चुरादेरिति** । तथा चिति स्मृ[6]त्यामित्यादीनामिदित्पाठादनित्यण्यन्ताश्चुरादय इति **भीमसेनो**[7]**पि** ज्ञापयति । अन्यथा णिलोपस्य स्थानिवत्त्वात् 'अनिदिताम्—' इति [8]न्लोपस्याप्रसङ्गाच्चित्यादयो नुमनुषक्ता एव पठ्येरन् । तथा **क्षीरस्वामिना** 'बहुलमेतन्निदर्शनम्' इति सू[9]त्रे उक्तम् चुरादेर्णिचो बहुलं निदर्शनं वा इत्यपरे । तेन पक्षे चोरति चिन्ततीत्यादि सिद्धमिति । तथा महीपतिवचः श्रुत्वा जुघुषुः पुष्पमाणवा इत्यादि ल[10]क्ष्यम् । 'अत एकहल्मध्ये—' इत्यत्र **वृत्तिकृ**दपि जगणतुरित्या[11]द्युदाहरन् ज्ञापयति । तत्र **न्यासकृतोक्तम्** । अनित्यण्यन्ताश्चुरादय इत्यदोषः । अनित्यण्यन्तत्वं स[12]प्तमे ज्ञापयिष्यत इति । **पक्षे चोरतीत्यादि** । शप् । उपधागुणः । आदिशब्दात् । चोरेत् । चोरतु अचोरत् । अचोरीत् । चुचोर । चोरिता । चूर्यात् । चोरिष्यति अचोरिष्यत् ।

**कृत** । संशब्दनमुद्घोषः ।

---

१. After it—चोरयिष्यति । चोरयिष्यते $B_2$ २. चौरादे° I
३. °णिंचेति P, C, $B_1$. ४. चोरीत् इत्यादि $D_1$. ५. संशब्दे D
६. स्मृत्यादीनामिदित्पाठा° $Bc_2$; स्मृत्यामित्यादीनामिद्पाठाद° $Dc_3$
७. अपि dropped $Dc_3$. ८. नलोप° $Dc_3$. ९. व्याख्याने $Bc_2$; सूत्रव्याख्याने $Dc_3$. १०. So $Bc_2$; others लक्षणम् । ११. °दाहरन् ज्ञाप° $Dc_3$
१२. समाप्तौ $Bc_2$.

उपधायाश्च ॥७।१।१०१॥

धातोरुपधाया ऋकारस्य ईदादेशः प्रत्यये परे ॥ कीर्तयति । अचिकीर्तत् ।[२]

अथ अदन्ताः । गण संख्याने ॥ अतो लोपः । तस्य स्थानिवत्त्वान्नोपधावृद्धिः । गणयति ।[३]

ई च गणः ॥७।४।९७॥

गणयतेरभ्यासाकारस्य वा[५] ई[६] स्यात् चङ्परे णौ[७] ॥

---

उपधायाः । कीर्तयतीति । उपधाऋकारस्य इत् । रपरः । 'र्हलि च'[८] इति दीर्घः । धातुसंज्ञायां शप्तिबादि । गुणायादेशौ । कीर्तयेत् । अचिकीर्तदिति । कीर्ति तिप् । च्लिः । 'णिश्रि—' इति चङ् । णिलोपः । द्वित्वम् । 'कुहोश्चुः' । अट् । कीर्तयामास । कीर्तयिता । कीर्त्यात् । कीर्तयिष्यति । कर्तृगामिनि क्रियाफले कीर्तयते । णिज्विकल्पात् णिजभावे कीर्ततीत्यादि ।

अथ अदन्ता इति । इत[९] आरभ्यागणान्तादित्संज्ञानिषेधार्थमदन्तत्वं विधीयते अनेन धातुसूत्रेण । ततश्च अतो लोपस्य स्थानिवत्त्वात् वृद्ध्याद्यभावः[१०] । स्थानिवत्त्वादिति । 'अचः परस्मिन्—' इति । गणयेदित्यादि ।

ई च । अस्याग्लोपित्वादप्राप्तयोः सन्वद्भावदीर्घत्वयोरिदमीत्व-

---

१. इत्स्यात् $B_1$, P, C ; ईदादेशः $D_3$. २. After it—पक्षे कीर्तति $B_2$. ३. गणयते after it $B_2$. ४. °रभ्यासस्या° $D_4$. ५. ई वा $D_1$. ६. इत् $D_2$ $N_1$, ईकारः $D_3$. ७. णौ परे $D_2$. ८. 'उपधायां च' इति दीर्घः । $Bc_2$ ९. इतः प्रभृति $Dc_3$. १०. After it—गणतः । $Bc_2$. ११. सन्वद्भावाद्° $Dc_3$

मजीगणत् । अग्लोपित्वान्न[1] सन्वद्भावः । अजगणत् ।[2] कथ वाक्यप्रबन्धे[3] । कथयति । कथोऽभ्यासस्य ईत्वं वेति केचित् । अचीकथत् । अचकथत् ।

अङ्क पदे लक्षे[4] च । अङ्कयति ।[5] चङि तु ओः पुयण्ज्यपरे इति ज्ञापकात् अद्वित्वनिमित्तेऽपि[6] णौ[7] कृतमभ्यासस्य स्थानिवद्[8]

---

मारभ्यते । अजीगणदिति । चङ् । द्वित्वम् । चुत्वम् । अजगणदिति । इत्वाभावे । गणयामास । गणयिता । गण्यात् । गणयते । गणयेत । गणतीत्यादि । कथ । कथयतीति । अतो लोपः । कथ इति । केचिदिति अर्वाचीनाः । अत एवाह क्षीरस्वामी क्षीरतरङ्गिण्याम् । कथमचीकथत् । प्रकृत्यन्तरमन्वेष्यमिति । मुग्धबोधे तूक्तम् । 'वेङ्गणकथः खेर्ङ्यङि ।' इति । अचकथदिति । अग्लोपित्वान्न सन्वद्भावः । कथयामासेत्यादि ।

अङ्क । अङ्कापयति । चङि त्विति । अङ्कि अस्मात् परस्य च्लेः 'णिश्रि—' इति चङि सति 'चङि' इति द्वित्वे प्राप्ते 'अजादेर्द्वितीयस्य' इति 'नन्द्राः संयोगादयः' इति च ककारस्य साच्कस्य द्वित्वे प्राप्ते किं सणिच्कस्य द्वित्वमुताकारसहितस्येति[10] संशये आह— ओः पुयण्ज्यपरे इत्यादि । अस्यार्थः । यतः कारणादेवं

---

१. °न्नास्य D1. २. After this D1 has—गणयामास । गणयिता । गण्यात् । णेरनिटीति णिलोपो न । गणयिष्यति । अगणयिष्यत् ।. ३. बन्धे N1. ४. लक्ष्माणि D1 ; लक्षणे D2 ; B2, D3, D4. ५. After it—अङ्कयते B2. ६. D1 drops अपि. ७. अचि णौ B2. ८. स्थानवत् D2. ९. °व्युत्क्रम Dc3. १०. °स्येत्याशङ्क्याह । Dc3.

भवतीति ज्ञायते । तेनाल्लोपस्यस्थानिवत्त्वात् अका
ककारस्य द्वित्वम् । अग्लोपित्वान्न सन्वद्भावः । आञ्च
केचिदेवमाहुः । ओः पुयण् इत्युवर्णनिर्देशाण्णौ कृत उवण

---

ज्ञायते तेन कारणेनाकारवतः अकारसहितस्य ककारस्य द्वित्वमित्य
ननु अल्लोपस्य जातत्वात् कथमकारसहितस्येत्याशङ्
अल्लोपस्य स्थानिवत्त्वादिति । 'द्विर्वचनेचि' इति द्वित्वे
स्थानिवत्त्वात् । ननु च द्वित्वनिमित्तेचि योजादेशः स स्थानि
न च णिर्द्वित्वनिमित्तं किं तु चङ् । अतो णौ परतो योल्लो
कथं स्थानिवत्त्वमित्यत आह—ओः पुयण्ज्यपरे इत्य
ओः पुयण्ज्यपरे इति ज्ञापकादद्वित्वनिमित्ते णौ परे य
तदभ्यासस्याभ्याससंबन्धि सत् स्थानिवद् भवतीति ज्ञायते
कारणात् । तथा हि ओः पुयण् इति अभ्यासोवर्णस्य सनि परे प
जकारेष्ववर्णपरेषु परत इत्वं विधीयते । तच्च पकारयकाराभ्या
सर्वेषामेव णिचमन्तरेणावर्णपरता न संभवतीति णिच्येवेत्त्वम् ।
सति जिजावयिषतीत्यादौ वृद्ध्यावादेशयोः कृतयोरभ्यासोवर्ण एव
अत एतत् सूत्रं न प्रवर्तते । सर्वरूपसिद्धिश्च । सन्यत इतीत्त्वे सि
एतत् सूत्रं विनापि । अत इदमेव ओः पुयणिति वचनं
ज्ञापयति णौ कृतं स्थानिवद्भवतीति । तेनाकारवतः क
द्वित्वमित्यर्थः । ज्ञापकाच्च नुनावयिषति इत्यादि सिद्धं स्यात्
मतं काशिकाकारादेः । अग्लोपित्वान्न सन्वद्भाव इति । 'सन्व
इत्यनेन । आञ्चकादिति । णिलोपः । केचिदेवमाहुरि
अन्येषां त्वयं पक्षः । 'ओः पुयण्ज्यपरे' इत्येतस्मि
ओरित्युवर्णनिर्देशाण्णौ परतः कृतो य उवर्ण

---

१. विज्ञायते D3. २. परतः कृत° B2. ३. °देशः D2. ४. °मित्य
५. After it—स्यात् Dc3. ६. परतो Bc2.

आकार आवादेशश्चाभ्यासस्य स्थानिवत् स्यान्नान्य इति नियमाद-
जादित्वेन सणिचकस्यैव ककारस्य द्वित्वम् । आञ्चिकत् । न
चास्मिन्मते दन्तत्वं व्यर्थम् । यतोग्लोपित्वं स्थानिवत्त्वं
चादन्तत्वप्रयोजनम् । यत्र त्वेते न विद्येते तत्राल्लोपविकल्पनम् ।
अदन्तत्वसार्थकत्वाय वा[2] अल्लोप इत्यर्थः । अङ्कयति । अल्लोपा-
भावे । अचो ञ्णितीति वृद्धिः[4] ।

---

आकार आवादेश एवाभ्यासस्येति अभ्याससंबन्धी सन् स्थानिवद्
स्यान्नान्य इति नियमात् अजादित्वेनाङ्केः कस्याजादेर्द्वितीयस्य
नन्द्राः संयोगादयः' इति णिच्सहितस्य ककारस्यैव
द्वित्वमित्यर्थः । अस्मिंश्च पक्षे पुस्फोरयिषति चुक्षावयिषति
इत्याद्येव सिध्यति । नौजढदित्यादि । अयं च पक्षो बोपदेव-
पण्डितैः काव्यकामधेनौ महता प्रबन्धेन प्रमाणपदवीमारोहितः
अतः सम्यगवगन्तव्यः । ननु चास्मिन् पक्षे अल्लोपस्य नित्यत्वाददन्तत्वं
व्यर्थम् । पूर्वस्मिंस्तु पक्षेग्लोपित्वमदन्तत्वप्रयोजनमित्याशङ्कां
निराकरोति—न चास्मिन्नित्यादि । कुत इत्यत आह—यत इत्यादि ।
अल्लोपित्वमदन्तत्वप्रयोजनम् । अचकथदित्यादौ । अत्र हि अतो
लोपे कृते अग्लोपित्वान्न सन्वद्भावदीर्घौ । स्थानिवत्त्वं चादन्तत्व-
प्रयोजनं कथयति गणयतीत्यादौ । अत्रापि अतो लोपे कृते 'अत
उपधायाः' इति वृद्धौ प्राप्तायाम् 'अचः परस्मिन्—' इत्यल्लोपस्य
स्थानिवत्त्वान्नोपधावृद्धिः । यत्र तु अङ्कयति आञ्चिकादित्यादौ
एते अग्लोपित्वस्थानिवत्त्वे न स्तः अङ्कयतीत्यत्र हि स्थानिवद्भावम-
न्तरेणापि उपधावृद्धिर्न प्राप्नोति उपधायामकाराभावात् ।
आञ्चिकदित्यत्रापि हि नाग्लोपित्वस्य प्रयोजनम् । एवंविधे स्थले
अल्लोपविकल्पनम् । अदन्तत्वसामर्थ्यात् तत्राल्लोपविकल्पनम् । अस्य
तात्पर्यार्थमाह—अदन्तत्वेत्यादि ।

---

१. °न्नान्यत्र $D_1$, $B_1$, P, C. २. च $D_4$, $B_1$, P, C. ३. °भावपक्षे P, $D_3$, $D_4$. ४. °वृद्धिराकारः P. ५. °मिति । $Bc_2$. ६. पुस्फारयिषति $Bc_2$, $Dc_3$.

**अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ॥७।३।३६।**

अर्त्यादेरादन्तानां च पुगागमः स्यात् णौ परे। अर्पयति।[४]

अर्थ उपयाच्ञायाम्। अर्थयते। अर्थापयते। आर्तथत आर्तिथत। इत्यादि।

इति चुरादिप्रक्रिया।

---

**अर्तिह्री।** अर्तीति श्तिपा निर्देशः 'ऋदृशोऽङि गुणः' इतिवदृकारान्तग्रहणं मा विज्ञायीति। अर्तीति ऋ गतिप्रापणयोः ऋ गताविति द्वयोरपि ग्रहणम्। ह्री लज्जायाम्। व्ली गत्याम्। री गतिशोषणयोः। रीङ् श्रवणे। उभयोरपि ग्रहणम्। क्नूय शब्दे। क्ष्मायी विधूनने। पुकः पूर्वान्तकरणमदीदपदित्युपधाया ह्रस्वो यथा स्यादिति सिद्धमाञ्चिकपदित्यादि ज्ञेयम्।

**अर्थ।** अयमात्मनेपद्येव। अर्थयते इति। अल्लोपः अर्थापयते। अल्लोपाभावे 'अचो ञ्णिति' इति वृद्धिः। 'अर्तिह्री—' इति पुक्। आर्तथतेति। अर्थि अस्माल्लुङ्। त। च्लिः 'णिश्रि—' इति चङ्। अल्लोपस्य स्थानिवत्त्वादकारवतस्थकारस्य द्वित्वम्। 'अभ्यासे चर्च' इति थकारस्य तकारः। णिलोपः आडागमः। आर्तिथतेति। णौ कृताल्लोपस्य स्थानिवत्त्व

---

१. पुग्णौ $D_1$, $D_4$, $N_1$. २. Dropped $N_1$. ३. Dropped I
४. $D_1$, $D_2$, $B_2$ have after it—आञ्चिकपत्. ५. अर्थयति $D_1$. ६. has in place of आर्तथत...इत्यादि—आर्थापयत। आर्थपत। अर्थापयामा अर्थयामास। इत्यादि; आर्तथत dropped $D_4$. ७. आर्तिथपत्। इत्यादि I आर्तिथपत $B_2$; आर्तिथपत। इत्यादि $N_1$. ८. सिद्धम् dropped $Dc_3$.

दिनां मते सणिच्कस्य थिशब्दस्य द्वित्वम् । पूर्ववच्छेषः । ञ्के । इत्यादिशब्दादेव शिष्टानां सर्वेषां पाठस्थितानां धातूनां ज्ञेयानि । तथा च सूत्रलोकागमस्थितानामपि । तथा च ां 'बहुलमेतन्निदर्शनम्' इति । यदेतद्भ्वत्यादि- ःगणनं तद् बाहुलकेन निदर्शनत्वेन ज्ञेयम् । तेनापठिता अपि किकवैदिकाः ज्ञेयाः । वर्धते हि धातुगणः । एतदेव पे एवं व्याचक्षते । भ्वादिनवगणोक्ता अपि स्वार्थणिजन्ताः चुरादिपाठस्तु निदर्शनार्थं रामो राज्यमकारयत् । तथोक्तम् ।

'निवृत्तप्रेषणाद्धातोः प्राकृतेर्थे णिजिष्यते' ।

तथा ।

'धात्वर्थानुप्रवेशोपि बुद्ध्यारोपाण्णिचं विना' ॥ इति । तु धातूनामर्थनिर्देशोयं निदर्शनार्थ इति व्याचक्षते । यदाहुः ।

'क्रियावाचित्वमाख्यातुमेकैकोर्थो निदर्शितः ।
प्रयोगतोनुगन्तव्या अनेकार्था हि धातवः' ॥ इति ।

सूत्रव्याख्यानपक्षाः प्रामाणिकत्वादिष्टाः ॥[2]

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विट्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन् प्रसादे निरगमदमला प्रक्रियेयं चुरादेः ॥

दशापि गणाः समाप्ताः ॥

---

ऩर्शितः Dc[3]. २. After it—अशिष्टा न ज्ञेयाः । Bc[2].

# अथ ण्यन्तप्रक्रिया ।

हेतुमति च ॥३।१।२६॥

हेतुः प्रयोजकः तद्व्यापारः प्रेषणा
तस्मिन् वाच्ये धातोर्णिच् स्यात् ॥ कुर्वन्तं

---

स्याच्छुद्धा प्रकृतिर्ण्यन्ता सनन्ता णिचि सन्परा ।
यङन्ता यङ्लुगन्ता च नातोऽन्या निःप्रयोजना ॥ इति
क्रममभिप्रेत्य शुद्धप्रकृतिरूपाण्यभिधाय ण्यन्ताया रूपाण्याख्य[1]

हेतुमति । 'फलयोग्योपि[2] पदार्थो हेतुरुच्यते' ।
ग्रहणं स्यादिहापि प्रसज्येत । अध्ययनेन वसतीति
तत्प्रयोजको हेतुश्चेति पारिभाषिकस्य हेतोरिदं ग्रहणमिति द
हेतुः प्रयोजक इति । स्वतन्त्रस्य कर्तुः प्रयोजकः । तद्व
प्रयोजकस्य यो व्यापारः क्रिया । कः पुनरसावित्याह
रिति । भृत्यादेर्निकृष्टस्य क्वचिदर्थे नियोजनं प्रेषणम् ।
अध्येषणतत्समर्थाचरणग्रहणम् । तत्र हीनेनोत्तमप्रेरणा
प्रयोज्यस्य यो विषयस्तत्र ये समर्था योग्या
तत्समर्थाचरणम् । अत्र[4] येन प्रकारेण पारिभाषिक ए
प्रयोज्यादिषु हेतुमत्सु सत्सु च प्रयोजकव्यापार एव हे
भाष्यं[5] न्यासादावाक्षिप्य समर्थितम् । नेह विस्तरभयाल्लि
प्रेरयतीति[7] । इदं कुरु ईदृशं कुर्विति[8] स्वाभिप्रायेवस्थ

---

१. °ख्यातुं प्रारभते । Dc₃. २. फलसाधनयोग्योपि Bc₁.
Bc₂. ४. अत्र च Bc₂, Dc₃. ५. भाष्य Dc₃. ६. °
७. कारयती° Bc₁. ८. कुर्विति स्वाभिप्राये Dc₁.

रयति ।[१] अचीकरत् । णिजन्ताण्णिच् । चोरयन्तं प्रेरयति
रयति ।

**नाग्लोपिशास्वृदिताम् ॥७।४।२॥**

अग्लोपिनः शास ऋदितश्चोपधाह्रस्वो न स्याच्चङ्परे णौ ॥
ते ह्रस्वाप्राप्तौ णेर्णिचि[४] लोपे नाग्लोपित्वमिति[६] ह्रस्वादि ।

---

त् प्रेषणाध्येषणयोर्द्वयोरप्युदाहणं संभवति । तत्समर्थाचरणस्य तु
क्षा वासयतीति । भिक्षा[७] हि[८] लभ्यमाना वासानुकूलं तृप्तिविशेषं
यति । कारयतीति । डुकृञ् करणे । 'अचो ञ्णिति' इति वृद्धिः ।
नाद्यन्ता धातवः' इति धातुसंज्ञायां शप् तिबादि । गुणायादेशौ ।
रयेत् । कारयतु । अकारयत् । अचीकरादिति । लुङ् । च्लिः ।
णेश्रि—' इति चङ् । 'णेरनिटि' इति णिलोपः । णौ चङ्युपधाया
वः । द्वित्वम् । 'चङि' इति । चुत्वम् । 'सन्वल्लघुनि—' इति
न्वद्भावः । 'सन्यतः' इतीत्वम् । '[९]दीर्घो लघोः' इति दीर्घः ।
रयामास । कारयिता । कार्यात् । कारयिष्यति । अकारयिष्यत् ।
कर्तृगामिनि क्रियाफले णिचश्च' इत्यात्मनेपदम् । कारयते इत्यादि ।
रूपाणि सर्वत्र ण्यन्ते ज्ञेयानि । विशेषस्तत्र तत्र कथयिष्यते ।
रयतीति चुर स्तेये अस्मात् स्वार्थे णिजन्ताद्धेतुमण्णिच् ।
णेरनिटि' इति पूर्वणिलोपः । पूर्ववच्छप्तिबादि ।

**नाग्लोपि** । अगिति प्रत्याहारस्तस्य लोपोऽस्ति यस्य तदग्लोपि ।
सु अनुशिष्टौ । ऋकार इद्यस्य तत् ऋदित् । इह हि द्विविधमग्लो-
ङ्गम् । क्वचिदगेव लुप्यते । मालामाख्यत् [१०]अममालदित्यादौ ।
चिद्धलचौ । राजानमतिक्रान्तवान् अत्यरराजदित्यादौ । अत्र

---

१. After it—कारयते । कार्यात् $B_2$. २. After it—चुर स्तेये $D_4$.
°श्चोपधाया $D_1$, $D_2$, $D_3$, $B_2$, ४. C, $D_3$, $D_4$ drop लोपे. ५. क्वचित् after
in $D_2$. ६. ह्रस्वादिः $D_2$. ७. एतद्भिक्षा $Dc_1$. ८. Dropped $Bc_2$.
'दीर्घः—' इति $Bc_2$. १०. अमामलदित्यादौ $Dc_3$.

अचूचुरत् । णिलोपेग्लोपित्वमिति केचित् । अचु
अशशासत् । ऋदितः ।[2] अडुढौकत् ।

**णौ च संश्चङोः ॥६।१।३१॥**

सन्परे चङ्परे च णौ श्वयतेः संप्रसारणं वा

---

'प्रातिपदिकाद्धात्वर्थे' इति णिच् । 'णाविष्ठवत्' इति टि
हलचोः । तत्र यत्रागेव केवलो लुप्यते तत्र 'अचः परस्मि
स्थानिवत्त्वादकारव्यवधानादेवोपधाह्रस्वो न स्यात् । यत्र
लुप्येते तत्र न सिध्यति । स्थानिवत्त्वाभावात् । 
हि[6] स्थानिवद्भाव उक्तः । न तु हलजादेशस्य । तस्मा
चोरादेशस्तदर्थमग्लोपित्ववचनम् । **अचूचुरदिति** । चो
च्लेश्चङ् । 'णौ चङ्युपधाया ह्रस्वः' । 'एच इग्घ्र
द्वित्वम् । 'दीर्घो लघोः' इत्यभ्यासदीर्घः । **णिलोप इति**
**मुग्धबोधे** । 'पुनर्नाग्लोपित्वान्न ह्रस्वः' इति । **अचु**
द्वित्वम् । अभ्यासह्रस्वः । अग्लोपित्वादुपधाह्रस्वाभ्यास
**अशशासदिति** । शासु अनुशिष्टौ । णिच् । लुङ् । तिप्
चङ् । द्वित्वम् । ह्रस्वः । णेर्लोपः । **अडुढौकदिति** । 
'अभ्यासे चर्च' इति जश्त्वेन डः ।

**णौ च** । णौ च संश्चङोरिति भिन्नाधिकरणे स
दर्शयति—**सन्परे चङ्परे च णाविति** । सन् परो यस्मात्
चङ् परो यस्मात् स चङ्परः । एवंविधे णौ परत इ
श्वयतेर्णिचि तदन्ताच्च सनि कृते चङि चान्तरङ्गत्वादादौ 

---

१. Before it—शासु अनुशिष्टौ $D_4$. २. $D_1$ and $D_2$, $D_4$ h
before it. ३. Dropped $D_3$. ४. स्याद्वा $D_2$. ५. $D_1$
६. Dropped $Bc_1$. ७. च ङः $Dc_1$.

संप्रसारणं तदाश्रयं च कार्यं बलवदिति वचनादादौ संप्रसारणम्। वृद्ध्यावादेशौ । द्वित्वम् । आवादेशस्याभ्यासे[2] स्थानिवत्त्वादुकारदीर्घः[3] । अशूशवत् । [4]अलघुत्वान्न दीर्घः । अशिश्वयत् ।

**स्तम्भुसिवुसहां चङि ॥८।३।११६॥**

एषां षो न स्याच्चङि । उपसर्गादिति वाच्यम् ॥* एषामुपसर्गनिमित्तः षो नेष्यते नाभ्यासकृत इत्यर्थः । अवातस्तम्भत् ।

---

स्यातां ततः संप्रसारणमित्याशङ्क्याह—**संप्रसारणमित्यादि** । **वचनादिति** । **वार्तिककृद्वचनादित्यर्थः** । तदाश्रयं संप्रसारणाश्रयं च कार्यं 'संप्रसारणाच्च' इति पूर्वरूपत्वादि । **आवादेशस्येति** । आवादेशस्याभ्यासे क्रियमाणे 'ओः पुयण्' इति ज्ञापकादद्वित्वनिमित्तेपि णौ परतः स्थानिवत्त्वादुकारस्तस्य दीर्घ इत्यर्थः । **अशूशवदिति** । टुओश्वि गतिवृद्ध्योरित्यस्माण्णिचि लुङ् । च्लेश्चङ् । णिलोपः । 'णौ चङ्युपधाया ह्रस्वः' । 'चङि' इति द्वित्वम् । शु इत्यस्य 'दीर्घो लघोः' । अट् । **अशिश्वयदिति** । संप्रसारणाभावे रूपम् । वृद्ध्यायादेशौ । उपधाह्रस्वः । 'ओः पुयण्' इति ज्ञापकाद्द्वित्वं श्वि इत्यस्य । हलादिः शेषः । येषां पक्षे उवर्णादेश एव स्थानिवत्तेषां पक्षे 'सन्वल्लघुनि' इति सन्वद्भावः । 'सन्यतः' इतीत्वम् । अलघुत्वात् 'दीर्घो लघोः' इति न दीर्घः ।

**स्तम्भु** । स्तम्भु रोधने । षिवु तन्तुसन्ताने । षह मर्षणे । 'स्तम्भेः' इति 'परिनिविभ्यः' इति प्राप्तस्य प्रतिषेधः । **उपसर्गादित्यादि** व्याकरोति । **एषामिति** । **अवातस्तम्भदिति** । स्तम्भेर्णिचि लुङि चङि सति णिलोपः । द्वित्वम् । 'शर्पूर्वाः खयः' इति तकारः शेषः

---

१. उवर्णनिर्देशात् णौकृत आवा° N. २. D₂ has कर्तव्ये after it. ३. °दुकारो दीर्घः $D_1$, N. ४. Before it $D_1$, $D_2$, $D_3$, $D_4$, N have सन्वद्भावः.

पर्यसीषिवत्[1] । व्यसीषहत्[2] । सुब्धातोरनेकाचश्च सन्व
वेति केचित् । अचचकासत् । अचीचकासत् । [3]
संयोगेति[4] नद्राणां न द्वित्वम् । उन्दी[5] क्लेद्
औन्दिदत् । अड्ड[6] अभियोगे । आड्डिडत् । आर्चिच

---

अडागमः । पर्यसीषिवदिति । सिवश्चङ्परे णौ लघूपधागुणे
'णौ चङि' इत्युपधाह्रस्वः । द्वित्वम् । 'दीर्घो लघोः' इति दी
पर्यसीषहदिति । सहेरपि 'अत उपधायाः' इति वृद्धौ उपधाह्र
'सन्वल्लघुनि' इति सन्वद्भावः । 'सन्यतः' इतीत्वम् ।
शेषं पूर्ववत् । सुब्धातोरिति । सन्वद्भावो दीर्घस्याप्युपलक्ष
तथोक्तं मुग्धबोधे । 'खेः सन्वद् घौ घोर्हसादेर्घश्च ल्यनेकाचोस्त्व
हलेवा' इति । अचचकासत् । अचीचकासदिति । चकासृ
णौ चङि सति ऋदित्वादुपधाह्रस्वो न । अनेकाच्त्वाद्वा सन्
दीर्घश्चेति केचित् । औन्दिददिति । उन्दी क्लेदने । णिच् ।
'अजादेर्द्वितीयस्य' इत्युकारस्य न द्वित्वम् । 'नन्द्राः' इ
नकारस्य । अतः सणिच्कस्य दकारस्य द्वित्वम् । अजा
'दीर्घो लघोः' इति दीर्घो नार्वाचीनमते । स्वमते स्यात् ।
'आटश्च' इति वृद्धिः । आड्डिडदिति । अड्ड् उद्यमने । द
न द्वित्वम् । णिच्सहितस्य डकारस्यैव द्वित्वम् । आर्चिच
अर्च पूजायाम् । रस्य न द्वित्वम् । सणिच्कस्य चस्यैव द्वि

---

१. C has पर्यसीषहत् for पर्यसीषिवत् । व्यसीषहत्; पर्यसीषहत
२. न्यसीषहत् $D_3$. ३. Before it—अप्राप्ते नित्यप्राप्तेयमपि विकल
ग्लोपिविषय एव $B_2$. ४. °संयोगास्य इति $D_1$. ५. $D_2$, $D_3$, $D_4$ dr
क्लेदने. ६. अड्ड उद्यमने । आड्डिडत् given after औञ्जिजत् $B_1$,
अड्ड अभियोगे dropped $D_1$, $D_3$, $D_4$. ७. After it–षत्वम्
८. सुब्धातोरनेकाश्चेति । तथोक्तं &c. $Bc_2$.

कारस्यापि न द्वित्वम् । उब्ज आर्जवे । औब्जिजत् । जादेरित्येव । नेह । अदिद्रपत् ।

**रभेरशब्लिटोः ॥७।१।६३॥**

रभेर्नुमागमः स्यादचि न तु शब्लिटोः ॥ लघुनीत्युक्तेर्न न्वत् । अररम्भत् ।

---

ौब्जिजदिति । उब्ज आर्जवे । बकारस्य न द्वित्वम् । सणिच्कस्य स्यैव द्वित्वम् । येषां पक्षे बकारोपधस्तेषामयं प्रतिषेधः । येषां कारोपधस्तेषां मते तु बत्वं विधातव्यम् । बकारोपदेशस्य प्रयोजन- ोब्जिजदित्यादि । दकारोपधस्य समुद्र इत्यादि । अजादेरित्येवेति । अजादेः' इत्यनुवर्तत इत्यर्थः । अदिद्रपदिति । द्रा कुत्सायां गतौ । च् । 'अर्तिह्री—' इति पुक् । लुङि चङ् । णौ चङ्युपधाया ह्रस्वत्वम् । त्वम् । सन्वद्भाव इत्वम् । ननु च द्वितीयस्येत्यनुवृत्तेरेवात्र न प्राप्नोति मर्थमजादेरित्यस्यानुवृत्तिः क्रियत इति चेदुच्यते । वृत्तिकारादिमते द्वितीयस्येत्यनेनैवात्र निषेधः । ये तु इन्दिद्रीयिषतीत्यादिसिद्ध्यर्थ- जादेरिति पञ्चम्यन्तं कर्मधारयमनुवर्तयन्ति तत्पक्षमाश्रित्योक्तम देरित्येवेति । एतदर्थमजादेरित्यनुवर्तनीयमेव तदन्यार्थमपि भवति । पक्षे तु द्वितीयस्येति विस्पष्टार्थमेव । इन्द्रमिच्छतीति क्यच् । न्तादिन्द्रीयितुमिच्छतीति सन् । पञ्चम्यन्तस्याजादेरित्यस्यानुवृत्तौ स्मादित्युत्तरस्य' इत्यनन्तराणामेव न्द्राणां प्रतिषेधः । अतो कारस्यैव न द्वित्वम् । दकारस्त्वत्र यद्यपि रेफदकारसंयोगादि- तस्तथापि नकारेण व्यवहितत्वात् द्विरुच्यते एव ।

**रभेः** । रभ राभस्ये । अचि किम् । आरब्धा । अशब्लिटोरिति म् । आरभते । आरेभे । **अररम्भदिति** । चङ् । पूर्ववत् प्रक्रिया ।

---

१. उब्ज आर्जवे dropped $D_1$, $D_3$ $D_4$. २. अदुद्रवत् । द्रा कुत्सायां ौ च । अदिद्रपत् $D_2$, $B_1$, P, C. ३. नुम् $D_1$, $D_2$, $D_4$. ४. लघुन्युक्ते... वत् after अररम्भत् P. ५. सन्वद्भावः $B_2$.

लभेश्च ॥७।१।६४॥

लभेर्नुम् स्यादचि न तु शब्लिटोः । अललम्भत् अचङीत्युक्तेर्न कुत्वम् । अजीहयत् ।

नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः ॥३।१।५

एभ्यश्च्लेश्चङ् न स्याच्छन्दसि ॥[5] औनयीत् । अध्वनयी ऐलयीत् ।[6] आर्दयीत् । लोके तु । औनिनत् । अदध्व

---

लभेः । डुलभष् प्राप्तौ । अचि किम् । लब्धा । अशब्लिटें किम् । लभते । लेभे । अचङीत्युक्तेरिति । 'हेरचङि' इत अजीहयदिति । हि गतौ वृद्धौ च । णिच् । वृद्धिः । चङ् । उपधाह्र द्वित्वम् । सन्वद्भावः । इत्वम् । दीर्घः । चुत्वम् ।

नोनयति । ऊन परिहाणे । ध्वन शब्दे । इल प्रेरणे । अ याचने च । एतेभ्यो ण्यन्तेभ्यो धातुभ्यो 'णिश्रि—' इत्य च्लेश्चङादेशः प्राप्तः प्रतिषिध्यते छन्दसि विषये । औनयी सिच् । 'इट ईटि' इति सिचो लोपः । तस्यासि वृद्धौ प्राप्तायां 'ह्यन्तक्षण—' इति निषेधः । गुणाया 'आडजादीनाम्' इत्याट् । 'आटश्च' इति वृद्धिः । अध्वनयी ध्वनयतीत्येतस्मादेव निपातनाददन्तत्वम् । अतो लोपः स्थानिवत्त्वात् 'अत उपधायाः' इति वृद्धिर्न । ऐल 'यीदिति । पूर्ववत् प्रक्रिया । औनिनदिति । 'अजादेर्द्वितीयस्य' इति निशब्दस्य [7]द्विर्वचनम् । उ दिति । अभ्यासस्य जश्त्वम् । अग्लोपित्वान्न सन्वद्

---

१. Before it—डुलभष् प्राप्तौ $B_2$. २. C drops लभे°...°लिटोः गमः $D_3$. ४. Before it—हेरचङीत्यत्र $D_1$; हेरचङीति $B_1$; हेरच $B_2$. ५. After it $D_1$ has—सिच् इट् ईट् गुणः । सिच्लोपः ६. एलन प्रेरणे after it in $D_2$; एलनं प्रेरणम् $B_2$. ७. द्वित्वम् $Bc_2$

ऐलिलत् । आर्दिदत् । द्वयमपि लोक इति केचित् ।

**अत्स्मृदॄत्वरप्रथम्रदस्तॄस्पशाम् ॥७।४।९५॥**

एषामभ्यासस्य अ[1]कारोन्तादेशः स्याच्चङ्परे णौ ॥ इत्वापवादः । अस[2]स्मरत् । अ[2]ददरत् । तपरत्वसामर्थ्यादत्र लघोन दीर्घः । अ[3]तत्वरत् । अ[4]पप्रथत् । अ[5]मम्रदत् । अतस्तरत् । अ[6]पस्पशत् ।

**विभाषा वेष्टिचेष्ट्योः ॥७।४।९६॥**

अनयोरभ्यासस्य[7]ाद्वा स्यात् चङ्परे णौ ॥ अववेष्टत् ।[8] अविवेष्टत् । एच इग्घ्रस्वादेशे । अ[9]चचेष्टत् । अचिचेष्टत् ।[10]

---

ऐलिलदिति । 'अजादेः—' इति लिशब्दस्य द्वित्वम् । आट् वृद्धिः । आर्दिददिति । इहापि पूर्ववत् दि[11]शब्दस्य द्विर्वचनं रेफस्य द्वित्वम् । 'नन्द्राः—'इति निषेधात् । आट् । वृद्धिः ।

अत्स्मृ । स्मृ चिन्तायाम् । दॄ भये । ञित्वरा संभ्रमे प्रथ प्रख्याने । म्रद मर्दने । स्तृञ् आच्छादने । स्पश बाधनस्पर्शनयोः । अससमरदिति । स्मारि । अस्माच्चङ् । उपधाह्रस्वः द्वित्वम् । अथाददरदित्यत्र 'दीर्घो लघोः' इति दीर्घत्वं कस्मा भवतीत्याह—तपरत्वसामर्थ्यादिति । अत्र यदि 'दीर्घो लघो इति दीर्घः स्यात् तपरकरणमनर्थकं स्यात् । अथैवमुच्यते सव ग्रहणाभावार्थं तपरत्वमिति । तन्न । भाव्यमानेनाणा सवर्णानाम ग्रहणात् । अतत्वरदित्यादि । पूर्ववत् ।

विभाषा । वेष्ट वेष्टने । चेष्ट चेष्टायाम् । एतयोरभ्यासो लघुप नास्तीत्यप्राप्त एव सन्वद्भावे विभाषयाकारो विधीयते ।

---

१. अकारान्तादेशः $D_1$, $B_2$. २. P has before it—दॄ विदारे भये च ३. P has before it—ञित्वरा संभ्रमे ।. ४. Before it P has–प्रथ क्षि ५. Before it—म्रद क्षोदे P. ६. अपस्पशत् $D_1$, $D_2$, $D_4$, $B_2$, $N_1$. ७. °स्य वा $D_3$, $D_4$. ८. After it—अचचेष्टत् $D_3$. ९. C, $B_2$, $N_1$ ha अविवेष्टत् after एच इग्घ्रस्वादेशे. १०. $D_1$ and $D_2$ have अचिचेष्ट अचचेष्टत्. ११, °शब्दाद्वि° $Bc_2$.

**भ्राजभासभाषदीपजीवमीलपीडामन्यतर-स्याम् ॥७।४।३॥**

एषामुपधाया ह्रस्वो वा स्यात् चङ्परे णौ ॥ अबिभ्रजत्
अबभ्राजत् । अदीदिपत् । अदिदीपत् । इत्यादि । कणरणवणभ
श्रणह्वेञ्लुपलुठहेठां च । अचीकणत् । अचकाणत्

---

**भ्राज** । भ्राजृ दीप्तौ । भासृ दीप्तौ । भाष व्यक्तायां वा
दीपी दीप्तौ । जीव प्राणधारणे । मील निमेषणे । पीड अवबाध
एतेषां नित्यं ह्रस्वे प्राप्ते विभाषेयमारभ्यते । भ्राजभास
ग्रहणमपाणिनीयम् । **अबिभ्रजदिति** । अस्माच्चङ् ।
ह्रस्वस्तदा सन्वद्भावेनेत्वम् । हलादिः शेषः । अभ्यासजह्रस्व
**अबभ्राजदिति** । ह्रस्वाभावे रूपम् । आदिशब्दात् । अबीभस
अबभासत् । अबीभषत् । अबभाषत् । अदीदिपत् । अदिदीप
अजीजिवत् । अजिजीवत् । अमीमिलत् । अमिमील
अपीपिडत् । अपिपीडत् । इति । **कणेत्यादि** । उपधाह्रस्वत्वं
वक्तव्यमिति शेषः । कण आर्तस्वरे । रण शब्दे । वण श
भण शब्दे । श्रण दाने । ह्वेञ् स्पर्धायां शब्दे च । लप परिभा
लुप लोपने । लुठ लोठने । हेठँ बाधे । **अचीकणदिति** । ह्रस्व
सन्वद्भावादित्वम् । 'दीर्घो लघोः' इति दीर्घः । **अचकाणदि**

---

१. °मुपधाह्रस्वो $D_2$. २. $D_1$, $D_3$ drop अदीदिपत् । अदिदीपत्; $D_4$ have अदिदीपत् । अदीदिपत् ।. ३. लप्लुपप्लुठ $N_1$. ४. इत्यादि it, dropping all forms $D_3$. ५. निमेलने $Bc_2$; निमीषणे ६. अवबाधने $Bc_2$. ७. हठ $Dc_3$.

अरीरणत् । अरराणत् । अवीवणत् । अववाणत् । अबीभणत् । अबभाणत् । अशिश्रणत् । अशश्राणत् । अजूहवत् । अजुहावत् । अलीलपत् । अललापत् । अलूलुपत् । अलुलोपत् ।[1] अलूलुठत् । अलुलोठत् । अजीहिठत् । आजिहेठत् ।[2]

उर्ऋत् ॥७।४।७॥

उपधाया ऋवर्णस्य स्थाने ऋत् स्याद्वा चङ्परे णौ ॥[3] अचीकृतत् । अवीवृतत्[4] । अमीमृजत् । पक्षे[5] इद्गुणवृद्धयः । अचिकीर्तत् । अववर्तत्[6] । अममार्जत् ॥

---

ह्रस्वाभावे रूपम् । आदिशब्दात् अरीरणत् । अरराणत् । अवीवणत् । अववाणत् । अबीभणत् । अबभाणत् । अशिश्रणत् । अशश्राणत् । अजूहवत् । अजुहावत् । अलीलपत् । अललापत् । अलूलुपत् । अलुलोपत् । अलूलुठत् । अलुलोठत् । अजीहिठत् । अजिहेठत् ।

उर्ऋत् । ईर्[7] । गुणवृद्धीनामपवादः । अचीकृतदिति । कॄत संशब्दने । चुरादि णिच् । चङ् । द्वित्वम् । उर्ऋत् । सन्वद्भावेनेत्वम् । चुत्वम् । दीर्घः[8] । अवीवृतत् । अमीमृजदिति । वृतु वर्तने । मृजूष् शुद्धौ । हेतुमण्णिच् । शेषं पूर्ववत् । पक्षे इद्गुणवृद्धय इति । 'उपधायाश्च' इतीत्वम् । रपरः । 'उपधायां च' इति दीर्घः । अयमित् कॄतः 'पुगन्त–' इति गुणो वृतः 'मृजेर्वृद्धिः' इति मृजेर्वृद्धिरित्यर्थः । तपरकरणं दीर्घेऽपि स्थानिनि ह्रस्व एव यथा स्यात् । अचीकृतदिति । न चायं भाव्यमानः । आदेशान्तरनिवृत्त्यर्थं स्वरूपमेवैतदभ्यनुज्ञायते ।

---

१. $B_2$ has इत्यादि after it and drops the remaining forms. २. After it—इत्यादि $N_1$. ३. After it—इद्गुणवृद्धीनामपवादः $B_1$, $B_2$, $D_2$, $D_4$. ४. अवीवृधत् C. ५. पक्षे 'ऋत इद्धातोः' इति इत् । 'पुगन्त—' इति गुणः । 'मृजेर्वृद्धिः' इति वृद्धिः । C, $D_2$, $D_3$, $D_4$, $B_1$, $B_2$. ६. अववर्धत C. ७. इति $Dc_1$; इद्गुण° $Dc_3$. ८. दीर्घः dropped $Dc_1$.

**स्वापेश्चङि ॥६।१।१८॥**

ण्यन्तस्य स्वापेश्चङि संप्रसारणं स्यात् ॥ असूषुपत् ।

**शाच्छासाह्वाव्यावेपां युक् ॥७।३।३७॥**

एषां युगागमः स्यात् णौ ॥ शाययति । अशीशयत् छाययति । अचिच्छयत् । साययति । असीसयत् । ह्वाययति ॥

---

**स्वापेः** । आपॢ व्याप्तावित्यस्य सुपूर्वस्यैष निर्देशः संभव स्यतस्तद्ग्रहणशङ्कानिरासार्थमाह-**ण्यन्तस्य स्वापेरिति** । **असूषुपदिति** 'हेतुमति च' इति णिच् । चङ् । द्विर्वचनात् पूर्वमत्र संप्रसार बलीयस्त्वात् । तत्र कृते लघूपधगुणः । तस्य 'णौ चङि' इति ह्रस्व ततो द्वित्वम् । 'दीर्घो लघोः' इति दीर्घः । षत्वम् । चङी किम् । स्वाप्यते ।

**शाच्छा** । शो तनूकरणे । छो छेदने । षोन्तकर्मणि । ह्वे आह्वाने । व्येञ् संवरणे । वेञ् तन्तुसन्ताने । पा पाने । पै शोषे इत्युभयोर्ग्रहणम् । पा रक्षणे इत्यस्य तु लुग्विकरणत्वान्न ग्रहण **शाययतीति** । 'आदेच—' इत्यात्त्वम् । णिच् । शप् । तिबादि गुणायादेशौ । आदिना छाययति । संव्याययति । वाययति पाययति । शाछासाह्वाव्यापां कृतात्त्वानां ग्रहणं पुक्प्राप्तिख्यापनार्थ किमेतस्य ख्यापने प्रयोजनम् । एतस्मिन् प्रकरणे लक्षणप्रतिपदो परिभाषा नास्तीत्युपदेशः । अतः ज्ञापयतीत्यादि सिद्धं स्यात् इत्यनात्त्वेन निर्देशो वातिवायत्योर्निवृत्त्यर्थः । अयं युक् पुकोपव **ह्वाययतीति** । आत्त्वम् । युक् । शप् । तिबादि । गुणायादेशौ ।

---

१. शाययतीत्यादि for शाययति...ह्वाययति $D_1$, $D_4$, $B_1$, $B_2$; शाय इत्यादि । ह्वाययति $N_1$, $D_3$. २. P has छयु छेदने । छाययति । साययति अचिच्छयत्. ३. इत्युपधाया ह्रस्वः । $Dc_3$.

## ह्वः संप्रसारणम् ॥६।१।३२॥

सन्परे चङ्परे णौ[1] ह्वयतेः संप्रसारणं स्यान्नित्यम् ॥ संप्रसारणस्य बलीयस्त्वान्न युक् । अजूहवत्[2] । [3]व्याययति । वाययति ।[4] पाययति ।

## लोपः पिबतेरीच्चाभ्यासस्य[5] ॥७।४।४॥

पिबतेरुपधाया लोपः स्यादभ्यासस्य ईदन्तादेशश्च[6] चङ्परे

---

ह्वः। 'ष्यङः संप्रसारणम्' इत्यनुवर्तमानेपि पुनः संप्रसारणग्रहणं 'विभाषा' इत्यस्य निवृत्त्यर्थमित्यभिप्रेत्याह—नित्यमिति। अजूहवदिति। ह्वा इ अत् इति स्थिते बलीयस्त्वादादौ संप्रसारणम्। वृद्ध्यावादेशौ। उपधाह्रस्वः। द्वित्वम्। उवर्णादेशस्य[7] स्थानिवत्त्वम्। 'दीर्घो लघोः'। 'कुहोश्चुः' इति चुत्वं झकारः। तस्य 'अभ्यासे चर्च' इति जश्त्वं जकारः। णिलोपः। ह्वः संप्रसारणमभ्यस्तस्य चेत्येकयोगे सिद्धे पृथग्योगकरणमभ्यस्तस्य निमित्तं यः प्रत्ययो न भवति तेन व्यवधाने संप्रसारणाभावज्ञापनार्थम्। ह्वायकमिच्छति ह्वायकीयति। ह्वायकीयतेः सन्। जिह्वायकीयिषतीत्यत्र। पाययतीति। 'शाच्छा—' इति युक्।

लोपः इति। 'णौ चङ्युपधायाः' इति ह्रस्वे प्राप्ते तदपवादः पिबतेर्लोपो विधीयते ईकारश्चाभ्यासस्य। उपधाधिकारादुपधाया एव पर्यायेण लोपेकारौ मा भूतामित्येवमर्थमभ्यासग्रहणम्। तिपानिर्देशो यङ्लुङ्निवृत्त्यर्थः। अपपेयदिति। न पा रक्षणे पै शोषणे इत्यनयो निवृत्त्यर्थः। तयोर्हि एकस्य लुग्विकरणत्वादेव न। अपरस्

---

१. णौ परे $N_1$. २. अजूहवत् । अजुहावत् $D_3$. ३. $D_1$, $D_2$, $D_3$, $D_4$ an $B_2$ drop व्याययति । वाययति. ४ P, $N_1$ have अवीयत् after i ५. °चाभ्यासस्य $D_1$, $N_1$. ६. $D_1$ drops च. ७. उवर्णादेशः । स्थानिवत्त्व $Bc_2$.

णौ ॥ अपीप्यत्। अर्तिह्रीव्लीति पुक्। पुगन्तेति गुणः। अर्पयति। ह्रेपयते। व्लेपयति। रेपयति। यलोपः। क्नोपयति। क्ष्मापयति। स्थापयति।

तिष्ठतेरित् ॥७।४।५॥

तिष्ठतेरुपधाया इदादेशः स्यात् चङ्परे णौ ॥ अतिष्ठिपत्।

---

लाक्षणिकत्वात्। अपीप्यदिति। पा पाने अस्मात् 'शाच्छा—' इति युक्। णिलोपः। उपधालोपः। ओः पुयण्वचनं ज्ञापकं णौ स्थानिवद्भावस्येति स्थानिवत्त्वाद्द्विर्वचनम्। अभ्यासस्येकारः। अट्। 'अर्तिह्री—' इति पूर्वमेव व्याख्यातम्। अर्पयतीति। ऋ गतौ। णिच्। ह्रेपयतीति ह्री लज्जायाम्। व्लेपयतीति। व्ली वरणे। रेपयतीति। रीङ् क्षरणे[2] यलोप इति। 'लोपो व्योर्वलि' इत्यनेन। क्नोपयतीति। क्नूयी दुर्गन्धे आर्द्रत्वे शब्दे च। क्ष्मापयतीति। क्ष्मायी विधूनने। अत्रापि यलोपः। स्थापयतीति। ष्ठा गतिनिवृत्तौ। आकारान्तत्वात् पुक्।

तिष्ठतेः। अयमपि ह्रस्वापवादः। 'ई चाभ्यासस्य' इति निवृत्तम्। तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः अतास्थपत्। अतिष्ठिपदिति। स्था इ इति स्थिते पुक् चङ् इकारोन्तादेशः। इत्वस्य स्थानिवत्त्वात् स्थाशब्दस्य द्वित्वम्। सन्वद्भावादभ्यासस्येत्वम्। 'शर्पूर्वाः खयः' इति खयः शिष्यन्ते। 'अभ्यासे चर्च' इति थकारस्य तकारः। षत्वम्।

---

१. After it—आर्पिपत् $B_2$. २. रक्षणे $Dc_3$.

जिघ्रतेर्वा ॥७।४।६॥

जिघ्रतेः प्रागुक्तं वा स्यात् ॥ आजिघ्रिपत् । अजिघ्रपत् ।
ातेर्णौ लुगागमो वक्तव्यः । पालयति ।[१]

वो विधूनने जुक् ॥७।३।३८॥

वातेर्जुक् स्यात् णौ कम्पनेर्थे ॥ वाजयति । कम्पे किम् ।
शान् वापयति । धूञ्प्रीञोर्नुग्वेति केचित् । धूनयति ।
ावयति । प्रीणयति । प्राययति ।

---

जिघ्रतेः । अयमपि ह्रस्वापवादः । तिपा निर्देशो यङ्-
ुङ्निवृत्त्यर्थः । अजिघ्रपत् । अजिघ्रिपदिति । घ्रा गन्धोपादाने ।
ालयतीति । पा रक्षणे । पाल रक्षणे इत्यनेन पालयतीति सिद्धे
ातेः पुग्बाधनार्थं लुग्विधिः ।

वो वि । वाजयतीति । कम्पयतीत्यर्थे । वा गतिगन्धनयोः ।
ाज गताविल्यस्य णिचि वाजयतीति सिद्धे वातेः पुङ्निवृत्त्यर्थं जुको
विधिः । धूञ्प्रीञोरिति । धूञ् कम्पने । प्रीञ् तर्पणे । वेति
ेचिदिति । तथा च सरस्वतीकण्ठाभरणप्रक्रियायां पदसिन्धुसेता-
वेत्युक्तं 'धावयतीत्येके प्राययतीत्येके इति च । मुग्धबोधे च
धूञ्प्रीञोर्नन्वा' इति ।

---

१. Dropped N. २. वाच्यः $B_2$. ३. After it—अपीपलत् $B_2$.
. वातेर्णौ जुक्° $D_3$. ५. णौ परे $N_1$. ६. कम्पेर्थे $B_2$, P, C. ७. कम्पने
$D_2$, $D_3$. ८. C drops from धूञ्प्रीञो°......प्राययति. ९. पुग्बाधनार्थं
$Bc_2$. १०. धूञ् इति $Bc_2$. ११. इति dropped $Bc_2$. १२. प्रपञ्चयती° $Dc_3$.
१३. 'प्रीधूञोर्नन् वा' मुग्ध.

**विभाषा लीयतेः ॥६।१।५१॥**

लीलीङोरात्वं वा स्यात् ल्यपि ऐज्निमित्ते अशिति
विलापयति विलाययति वा घृतम् ।

**लीलोर्नुग्लुकावन्यतरस्यां स्नेहनिपातने ॥७।३।३९॥**

लीयतेर्लातेश्च क्रमान्नुग्लुकावागमौ स्तो वा णौ स्नेह
विलीनयति विलाययति विलालयति विलापयति वा घृ
स्नेहद्रवे किम् । लोहं विलापयति ॥ प्रलम्भनाभिभवपूजासु
नित्यमात्वमाशिति वाच्यम् ॥*

---

**विभाषा** । ली श्लेषणे इति क्र्यादिः । लीङ् श्लेषणे इति दि
उभयोरपि यका निर्देश इति स्मर्यत इत्यभिप्रेत्याह—**लीलीङो**
**विलापयती**ति । पुक् ।

**लीलो** । लीयतेरिति लीलीङोर्ग्रहणम् । लातेरिति ला
इत्यस्य कृतात्वस्य लीयतेश्च ग्रहणम् । ली ई इति इकारोत्र प्र
तत इकारान्तस्यैव नुग्विधिः न तु 'विभाषा लीयतेः' इति कृत
**विलीनयती**ति । नुक् । **विलाययती**ति । नुगभावे
**विलालयती**ति । लुक् । **विलापयती**ति । लुगभावे पुक्
द्रवीकरोतीत्यर्थः । **प्रलम्भने**ति । प्रलम्भनं मिथ्याफलाख
वञ्चनमित्यर्थः । अभिभवः पराभवः ।

---

१. लिङ्लीङो° P., लीङोप्यात्वं C, $D_1$, $N_1$. २. विलापयति $D_3$, $D_4$, $N_1$, $B_2$ ; विलाययति घृतम् $D_2$. ३. विपातने $D_2$, $D_3$, ४. स्नेहद्रावे C. ५. C drops it; $D_2$ drops it and also विल घृतम् ; विलाययति विलापयति वा घृतम् $N_1$; $D_4$ (वा घृतम् drop ६. स्नेहद्रावे C. ७. विलाययति । विलापयति P; $D_2$, $D_3$, $D_4$, $B_2$; वि विलाययति $N_1$. ८. इति स्थिते $Bc_2$. ९. नुग् भवति $Dc_1$. drops from विलाययतीति to वृद्धिः ११. नुग्भावे Ms. ] १२. नगभावे $Bc_2$. १३. °कथाख्यानम् $Dc_3$.

**लियः संमाननशालीनीकरणयोश्च ॥१।३।७०॥**

लीङ्लियोरात्मनेपदं स्यादकर्तृगेऽपि फले पूजाभिभवयोः ञ्भने चार्थे ॥ जटाभिर्लापयते । श्येनो वर्तिकामुल्लापयते । ऌमुल्लापयते ।[4]

**बिभेतेर्हेतुभये ॥६।१।५६॥**

बिभेतेरेच आत्वं वा स्यात् प्रयोजकाद् भयं चेद्वाच्यम् ॥

**भीस्म्योर्हेतुभये ॥१।३।६८॥**

आभ्यामात्मनेपदं स्याद् हेतुभये । पुगागमः । मुण्डो ापयते ।

---

**लियः** । जटाभिर्लापयत इति । पूजामधिगच्छतीत्यर्थः । येनो वर्तिकामुल्लापयते । पराभवतीत्यर्थः । बालमुल्लापयते । थ्याफलाख्यानेन वञ्चयतीत्यर्थः । 'विभाषा लीयतेः' इति यदात्वं धीयते तदस्मिन् विषये नित्यमन्यत्र विकल्पेन । व्यवस्थितविभाषा इं सा ।

**बिभेतेः** । हेतुरिह पारिभाषिकः स्वतन्त्रस्य प्रयोजकः । हेतुभये' इति 'पञ्चमी भयेन' इति समासः । एतद् ह्र्यं नसि कृत्वाह—**प्रयोजकाद् भयं चेद्वाच्यमिति** ।

**भीस्म्योः** । ञिभी भये । स्मिङ् ईषद्धसने । **हेतुभये** इति । योजकाद्भयं चेद् वाच्यमित्यर्थः । भयग्रहणं धात्वर्थोपलक्षणार्थम् । न विस्मयोऽपि तत एव । **पुगागम** इति । 'अर्तिह्री—' इति । **मुण्डो भापयत** इति । मुण्डगुणोपेतत्वान्मुण्डः ।

---

१. °त्वकर्तृगामिफले $D_1$. २. °र्लापयते तापसः । पूजामधिगच्छति $B_2$. ३. $D_2$, $D_4$ have उल्लापनमभिभवनम् before it. ४. After it—अत्र प्रतारणम् $B_2$, $D_4$. ५. स्याद्वा $D_1$. ६. भये वाच्ये $D_1$. ७. $D_2$ has स्यात् after it. ८ °र्लापयतीति $Bc_2$. ९. हेतुभयमिति $Bc_2$.

**भियो हेतुभये षुक् ॥७।३।४०॥**

भियः षुक् स्यात् णौ हेतुभये ॥ इयन्तनिर्देशान्ना षुक् । भीषयते ।

**नित्यं स्मयतेः ॥६।१।५७॥**

स्मयतेरेचो नित्यमात्वं स्यात् णौ हेतुभये ॥ उ विस्मापयते । हेतुभये किम् । कुञ्चिकयैनं भाययति विस्मायय

**स्फायो वः ॥७।३।४१॥**

अस्य वान्तादेशः स्यात् णौ ॥ स्फावयति । अपिस्

**शदेरगतौ तः ॥७।३।४२॥**

शदेर्णौ तान्तादेशः स्यान्न तु गतौ ॥ शातय

---

**नित्यम्** । हेतुभये इति भयशब्देनात्र धात्वर्थसाम स्मयतेरर्थोऽभिधीयते । न हि मुख्ये भये स्मयतेर्वृत्तिर **कुञ्चिकयैनं भाययतीति** । अत्र करणात् कुञ्चिकातो न हेतोः । अत आत्वमात्मनेपदं पुग् च न । **विस्माय**य रूपेणेति शेषः ।

**स्फायो वः** । स्फायी वृद्धौ ।

**शदेः** । शद्लृ शातने । ननु किमर्थमिदमुच्यते यतः शद्ल इत्यस्मादेव निपातात्तः स्यात् । सत्यम् । ज्ञापनार्थम् । अबाध निपातनानि भवन्तीति । तेन पुराशब्दात् 'सायंचि इत्युच्यमानयोष्ट्युट्युलोः 'पुराणप्रोक्तेषु' इति निपातेन बाध पुरातन इति सिद्धम् । **शातयतीति** । 'अत उपधायाः' इति

१. After it—अबीभयत् । असिस्मयत् $B_2$. २. वान्तादेशः P; I N. ३. $D_1$, $D_3$ drop it; after it—शद्लृ गतौ $B_2$. ४. तान्तादेशः $D_3$, $N_1$. ५. अत्र dropped $Bc_2$. ६. धारणात् $Dc_3$. ७. आत्वं d $Bc_2$. ८. Dropped $Bc_2$.

ो तु गाः शादयति गोविन्दः ।

**रुहः पोऽन्यतरस्याम् ॥७।३।४३॥**

रुहः पः स्याद्वा णौ ॥ रोपयति रोहयति ।[1]

**क्रीङ्जीनां णौ ॥६।१।४८॥**

[2]क्री इङ् जि एषामेच आत्वं स्याण्णौ ॥[4] क्रापयति । यापयति । [5]जापयति ।

**णौ च संश्चङोः ॥२।४।५१॥**

सन्परे चङ्परे च णौ ईङो गाङ् वा स्यात् ॥

---

शादयतीति । गमयतीत्यर्थः ।

रुहः । किमर्थमिदमुच्यते । यतो रुप परिमोहने इति ादिस्तस्य रोपयतीति स्यात् । रुह जन्मनीत्यस्य रोहयतीति चेत् ष्म् । जन्मार्थस्य रोपयतीति प्रयोगार्थम् । धातूनामनेकार्थत्वात् दिति चेत् अनेकार्था हि धातवो न सर्वे सर्वार्थाः । रोपयतीति । पधगुणः ।

क्रीङ् । डुक्रीञ् द्रव्यविनिमये । इङ् अध्ययने । जि जये । पयतीति । णौ परे वृद्धिः । पुक् ।

णौ च । णाविति चेयं परसप्तमी इङपेक्षया संश्चङोरिति मी ण्यपेक्षयेत्यभिप्रायेणाह—सन्परे चङ्परे च णाविति ।

---

। After it—अरूरुपत् । अरूरुहत् । अरूरुहताम् $B_2$. २. क्री जि इङ् $D_4$. ३. एषामेवात्वं णौ । $D_4$. ४. After it—परे N. ५. जापयति । यापयति $D_2$, $D_4$. ६. C, $B_2$, N drop it. ७. Dropped $B_2$. C has इङो गाङ् वा स्यात् in the beginning of the Vritti ore सन्परे°. ९. स्याद्वा $N_1$.

अध्यजीगपत् । अध्यापिपत् ।

**सिध्यतेरपारलौकिके ॥६।१।४९॥**

अस्यैच आत्वं स्याण्णौ न तु पारलौकिकेर्थे[1]। साधयति । अदृष्टार्थे तु[3] तपः सेधयति ।

---

अध्यजीगपदिति । इङ्[4] अध्ययने । अधिपूर्वः । णिचि गाङ 'अर्तिह्री—' इति पुक् । 'णिश्रि—' इति चङ् । णिलोपः । 'णौ इत्युपधाह्रस्वः । द्वित्वम् । 'सन्वत्' इति सन्वद्भावः । ' इतीत्वम् । 'दीर्घो लघोः' इति दीर्घः । चुत्वम् । अध्यापि गाङभावेरूपम् । 'क्रीङ्जि—' इत्यात्वम् । पुक् । 'अजादेर्द्वि इति पीत्यस्य द्वित्वम् ।

**सिध्यतेः** । षिधु संराद्धौ । अन्नं साधयतीति । नि त्यर्थः । तपः सेधयतीति । तापस इति शेषः । अत्र परलोकार्थे ज्ञानविशेषे वर्तते । तापसो ज्ञानविशेषमासादयति प्रयुङ्क्ते । स च ज्ञानविशेष उत्पन्नः परलोकाभ्युदयलक्षण संहरन् परलोकप्रयोजनो भवति । इह कस्मान्न भवति अन्नं साधयति ब्राह्मणेभ्यो दास्यामीति । उच्यते । सिध निष्पत्तिः । तस्याः प्रयोजनमन्नं तस्य यद्दानं तत् पारलौ न पुनः सिद्धेरेवेति पर्युदस्यते[5] साक्षात् परलोकप्रयोजने कृतावकाशं वचनं नैवंविधे विषये प्रवर्तत इति । ि श्यना निर्देशः षिधु गत्यामित्येतस्य भौवादिकस्य नि

---

१. For it— ज्ञापयति $N_1$. २. °ण्णौ परे $N_1$; णौ dr
३. $D_1$ drops it. ४. इङ् $Dc_3$. ५. न पर्युदस्यते $Bc_2$.

## चिस्फुरोर्णौ ॥६।१।५४॥

चिञः स्फुरश्चैच आत्वं वा स्याण्णौ[4] ॥ चापयति । चाययति । स्फारयति । स्फोरयति । आत्वस्याभ्यासे स्थानिवत्त्वात् । अपुस्फरत् । अपुस्फुरत् ।

## प्रजने वीयतेः ॥६।१।५५॥

अस्यैच आत्वं वा स्यात् णौ प्रजनेर्थे ॥ वापयति वाययति वा गाः पुरोवातः । गर्भं ग्राहयतीत्यर्थः । स्तावयति ।

---

चिस्फुरोः । चिञ् चयने । स्फुर स्फुरणे । चापयतीति । आत्वपक्षे पुक् । अन्यत्रायादेशः । आत्वस्येति । 'ओः पुयण्–' इत्युवर्णनिर्देशाण्णौ कृत उवर्णादेश आकार आवादेशश्चाभ्यासे स्थानिवदिति स्थानिवत्त्वादित्यर्थः। अपुस्फरादिति । स्फुर अस्माण्णिचि चङि च सति गुणः । उपधाया आत्वम् । उपधाया ह्रस्वः द्वित्वम् आकारस्य स्थानिवत्त्वात् स्फु इत्येतस्य । अपुस्फुरादिति आत्वाभावे ह्रस्वः । 'एच इग्घ्रस्वादेशे' ।

प्रजने । वी गतिप्रजनकान्त्यशनखादनेषु । प्रजनो जन्म उपक्रमो गर्भग्रहणमित्यर्थः । अत एवाह—गर्भं ग्राहयतीत्यर्थः इति यदि वा गतिगन्धनयोरयं धातुः प्रजने वर्तते तदा शक्योयं योगोकर्तुम् वातेर्हि वापयतीति स्यात् वीयतेस्तु वाययतीति । स्तावयतीति

---

१. चिस्फुरो° D1. २. स्याद्वा for वा स्याण्णौ N. ३. स्याद्वा णौ I ४. D2, D4, B2 drop णौ. ५. C has अपुस्फुरत् । अपस्फुरः अपुस्फुरत् । अपुस्फरत् । D4. ६. Dropped N1, D4. ७. उपधाह्रस्वः Bc2, Dc3.

आवादेशस्य स्थानिवत्त्वात् अतुष्टवत् । भावयति । सन्वद्भावे

ओः पुयण्ज्यपरे ॥७।४।८०॥

अभ्यासोवर्णस्य सनि परे इत्वं स्यात् पवर्गयण्ज॰
ण्यवर्णपरेषु परतः ॥ अबीभवत् । अयीयवत् । अजीजवत् ।[1]

---

ष्टुञ् स्तुतौ । अतुष्टवदिति । णिचि चङि वृद्ध्यावादेशौ । उपधाह्र॰
द्वित्वम् । अभ्यासावादेशस्य स्थानिवत्त्वम् । शर्पूर्वाः खयः शिष्य
षत्वष्टुत्वे । भावयतीति । भू सत्तायाम् । सन्वद्भाव इति ।
अस्माण्णिचि चङि वृद्ध्यावादेशोपधाह्रस्वाद्वित्वेषु कृतेषु ' सन्वल्लघु
इति सन्वद्भावे सतीत्यर्थः ।

ओः पु । पुयण्जकाराणां समाहारद्वन्द्वे सप्तम्येक॰
' पुयण्जि ' इति । ' द्वन्द्वाच्चुदषहान्तात्— ' इति समासान्तस्त्वा॰
त्वान्न भवति । अः परो यस्मात् पुयण्जः तदपरमिति सूत्रार्थमभिप्रेत॰
अभ्यासोवर्णस्येत्यादि । अबीभवदिति । अत्रावर्णपरपवर्गपरोभ्या॰
ननु चाबीभवदित्यादौ कथमुकारान्तताभ्यासस्य यावता णौ वृद्ध्य॰
देशयोः कृतयोराकारान्तेनाभ्यासेन भवितव्यमिति चेत् । नैव
स्थानिवद्भावादुकारान्त एवाभ्यासो भवतीत्येतत् चुरादिगणे निपु॰
प्रत्यपादि । ' दीर्घो लघोः ' इति दीर्घः । अभ्यासस्य जइत्व॰
अयीयवदिति । यु मिश्रणे । णिचि चङि वृद्ध्यावादे॰
स्थानिवत्त्वात् द्वित्वमुकारान्तस्य । यकारपरोयमभ्यासः । अज॰
वदिति । जु गतौ । जकारपरोयमभ्यासः । अरीरवत् । अलीलव॰
ज्ञेयम् । रेफलकारपरेभ्यासे ।

---

१. Dropped $B_2$; before it—अपीपवत् $D_3$. २. After it—यु मि॰ अयीयवत् $B_2$; अपीपवत् for अयीयवत् N. ३. °द्वन्द्वः $Dc_3$. ४. प॰ भक्कारः । $Dc_3$. ५. अभ्यासजइत्वम् $Dc_1$.

स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ॥७।४।८१॥

एषामभ्यासस्योकारस्येत्वं वा स्यात् सन्यवर्णपरे धात्वक्षरे परे ।[2] असिस्रवत् । असुस्रवत् । इत्यादि ॥

गूहयति । अजूगुहत् ।

**दोषो णौ ॥६।४।९०॥**

दुष्यतेरुपधाया ऊदादेशः स्यात् णौ ॥ दूषयति ।

---

स्रवति । पूर्वसूत्रे त्वनन्तर एव याणि भवितव्यमित्यप्राप्तविभाषेयम् । स्रु गतौ । श्रु श्रवणे । द्रु गतौ । च्युङ्प्रुङ्प्लुङ् गतौ । 'पुयण्ज्यपरे' इत्यनुवर्तते । तत्रैषां धातूनामवर्णपरता यण् च संभवति । स च यण् अत्राभ्यासोवर्णात् परः सकारादिभिर्व्यवहित एव नानन्तर इति वचनसामर्थ्यादेकेन वर्णेन व्यवधिराश्रीयत इत्यभिप्रेत्याह—अवर्णपरे[1] धात्वक्षरे परे इति । व्यञ्जनसहितोऽक्षरं धातोरक्षरं धात्वक्षरं तत्र । अवर्णः परः अन्तावयवो[5] यस्य तदवर्णपरम् । अवर्णान्ते धात्वक्षरे परे इत्यर्थः । असिस्रवदिति । पूर्ववत् प्रक्रिया । आदिशब्दात् । अशिश्रवत् । अशुश्रवत् । अदिद्रवत् । अदुद्रवत् । अपिप्रवत् । अपुप्रवत् । अपिप्लवत् । अपुप्लवत् । अचिच्यवत् । अचुच्यवत् । इति ज्ञेयम् ।

गूहयतीति । गुहू संवरणे । 'ऊदुपधाया गोहः' इति ऊत् ।

दोषः । दुष वैकृत्ये ।

---

१. अवर्णे परे N. २. परे सति N. ३. P and C, D3 drop it. . ऊ आ° D3. ५. अन्त्योवयवः Dc3,

## वा चित्तविरागे ॥६।४।९१॥

चित्तविरागेर्थे[1] दुष्यतेर्वा ऊत् स्यात् णौ ॥ चित्तं दू
दोषयति वा ।

## मितां ह्रस्वः ॥६।४।९२॥

घटादयो मित इति कृतसंज्ञानामुपधाया ह्रस्वः
णौ ॥ घटयति । व्यथयति । एवं पञ्चपञ्चाशतो रू

---

**वा चित्त** । पूर्वेण नित्ये प्राप्ते विकल्पः । चित्त
श्चित्तस्याप्रीतता ।

**मिताम्** । **घटादय** इत्यादि । 'घटादयो मितः' इति धा
कृतमित्संज्ञानामित्यर्थः । **घटयति** । **व्यथयतीति** । घट चेष्ट
व्यथ भयचलनयोः । 'अत उपधायाः' इति वृद्धिः । पश्चा
**एवमिति** । एवमनेन प्रकारेण प्रथ प्रख्याने इत्यादीनां
व्यतिरिक्तानां पञ्चपञ्चाशतो धातूनां रूपं ज्ञातव्यमित्यर्थः
कथयिष्यति । स्वनं तु केचिदेव पठन्ति न सर्वे ।

घटव्यथप्रथाश्चैव पृथुप्रसम्रदस्खदाः ।
क्षजिदक्षिक्रपकदिक्रदिक्लदित्वादित्वराः ॥
गडिहेडी वटिभटी नटिश्चकिष्टकी स्तकिः ।
कखेरगेलगश्चैव ह्रगेल्हगेष्टगेस्थगः ॥
कगेकागः क्रुटिकणी रण्चण्शण्श्रण्श्रथिक्नथः ।
क्राथिक्लथी चनुवनू ज्वलह्वलम्हलस्मृदृ ॥
नॄश्राज्ञाचल्छद्लडयो मदध्वनी स्वन इत्यपि ।
घटादयस्त्वमी ज्ञेया ऊनषष्टिर्हि धातवः ॥

---

१. विरागेर्थे N. २. दूषेर्वा ऊ $D_3$. ३. कृतमित्संज्ञाना° $B_2$, D

नीजॄष्क्नसुरञ्जोमन्ताश्च । जन्यादयोमन्ताश्च मितो ज्ञेयाः ॥
नयति । जरयति । क्नसयति । रञ्जेर्णौ मृगरमणे[2] रजयति
गान् । अन्यत्र तु[3] रञ्जयति वस्त्रम् । दमयति । मारणतोषण-
शानेषु ज्ञा ॥* एष्वर्थेषु ज्ञा मित् स्यात् । ज्ञपयति[4][5] । अन्यत्र तु[6]

---

चिदत्र वेत्यनुवर्तयन्ति । सा च व्यवस्थितविभाषा । तेन
क्रामयतीत्यादि सिध्येत्[7] । मित्संज्ञाविधायकान्यन्यान्यपि धातुसूत्राणि
ति—जनीत्यादि । व्याकरोति च जन्यादय इति । जनी
दुर्भावे । जन जनने । उभयोरपि ग्रहणम् । जॄष् वयोहानौ
वादिर्न ऋयादिरषित्त्वात् । क्नसु ह्वरणदीप्त्योः । रञ्ज रागे । अम्
न्ते येषां ते अमन्ताः । जनयतीत्यादिषु ह्रस्वः । जॄणातेस्तु
रयत्यभ्रकम् । दमयतीति । दम दान्तौ । अमन्तोयम् । मारणेति
दिगणान्तर्गतसूत्रम् । मारणं हिंसनम् । निशानं तीक्ष्णीकरणम् ।
शामनमित्येके पेठुः । निशामनमालोकनम्[8] । ज्ञेति । ज्ञा अवबोधने ।
पयतीति । पुक् । मारणे । संज्ञपयति पशुम् । तोषणे । विष्णुं
ज्ञपयाम्यहम् । निशाने[9] । प्रज्ञपयति शस्त्रम् । चुरादौ ज्ञा
योजने । तस्य 'आज्ञापय ज्ञातविशेषपुंसाम्' इत्यादयः प्रयोगाः ।
ाज्ञप्र इत्यादयस्तु ज्ञानाङ्के तोषणे प्रध्वंसाभावे वा । ज्ञीप्स्यत[10] इत्यादौ

---

१. Dropped $B_2$. २. मृगरमणर्थे C; मृगरमणे लोपो वक्तव्यः $B_2$; मृगरमणे
लोपो वक्तव्यः N, $D_3$, $D_4$. ३. Dropped N. ४. Before it—मारणं
हिंसनम् $B_2$. ५. After it–पशुम् । पुगागमः । तोषणे । विष्णुं विज्ञपयाम्यहम् ।
निशानं तिक्ष्णीकरणम् । प्रज्ञपयति शस्त्रम् । अन्यत्र तु ज्ञापयाति $B_2$. ६. Dropp-
ed $D_3$. ७. सिद्धिः $Bc_3$. ८. निशातनमाज्ञापनम् । $Dc_3$. ९. निशामने
$c_1$. १०. ज्ञीप्सित $Bc_2$.

ज्ञापयति ॥ ज्वलह्वलह्मलनमोनुपसर्गा वा । ग्लास्नावनुंव
ज्वलादयो ग्लादयश्च मितो वा स्युः अनुपसर्गाः । ज्वल
ज्वालयति । ग्लपयति । ग्लापयति । स्नपयति । स्नापयति ।
सर्गाः किम् । प्रज्वालयति । प्रग्लापयति ॥ नकम्यामिच
अमन्ता अप्येते मितो न स्युः ॥ कामयति । आमयति । चा
शमोदर्शने ॥* शमोदर्शने मित् स्यात् । शमयति
तु निशामयति ॥ यमोपरिवेषणे ॥* यमयति । अ
यामयति ॥ स्खदिरवपरिभ्याम् ॥* अवस्खदयति
स्खदयति । सोपसर्गात् स्खदेः फणश्च मित्वं वेति
प्रस्खदयति । प्रस्खादयति । फणयति । फाणयति ।

---

'प्रच्छ ज्ञीप्सायाम्' इति ज्ञापकात् ह्रस्वः । ज्वलेति । ज्व
ह्वलह्मल चलने । णमु प्रह्वीभावे । एतेषां नित्यमित्वं प्राप्तम
विकल्प्यते । अत्र क्षीरस्वामी चलिमपि पठति ।
दुर्गादिभिरत्रापठितत्वान्न पठितः । अतस्तदीयान्येवात्र सूत्रा
ग्लास्नेति । ग्लै हर्षक्षये । ष्णा शौचे । एतयोरप्राप्तम् । वनु
टु वमु उद्गिरणे । एतयोः प्राप्तम् । न कम्यमीति । कमु
अम गतौ । चमु अदने । शम इति । शमु उपशमे
दर्शनादन्यत्र मित्संज्ञा । यम इति । यमु उपरमे । स्ख
स्खद खेदने । सोपसर्गेति । तथोक्तं मुग्धबोधे । 'वा
फणगिस्खदाम्' इति ।

---

१. °वन° $D_1$, $B_2$. २. अनुपसर्गाश्चेत् $B_2$, $D_3$, $D_4$; अनुपसर्गे N
it–विग्लापयति ; dropped $D_3$, $D_4$, $B_2$. ४. °चमाम् P. ५.
६. शमो दर्शनेमित् । शामयति । $D_3$. ७. मित्संज्ञः $N_1$ ८. D
९. After this P and $D_2$, $D_4$, $B_2$ have–अन्यस्मात्तु प्रस्खादय
अन्यस्मात्तु only after it. १०. $D_2$ has प्रस्कदयति । प्रस्कादयति
फाणयति ; C has—अन्यस्मात्तु प्रस्खाथति । फण गतौ । फणयति
तु फाणयति ; P has प्रस्खदयति । फण गतौ । फणयति । अन्यमते
११. फण गतौ । फणयति । अन्यत्र तु फाणयति । $N_1$. १२. अत्र dr

**णौ गमिरबोधने ॥२।४।४६॥**

इणो गामिः स्यात् णौ । गमयति । बोधने तु
त्यायययति । इण्वदिक् । अधिगमयति ॥

**हनस्तोऽचिण्णलोः ॥७।३।३२॥**

हन्तेस्तकारोऽन्तादेशः स्यात् चिण्णल्वर्जे [1] ञ्णिति ॥ हो
न्तेरिति कुत्वम् । घातयति । ईर्ष्ययति । ईर्ष्यतेस्तृतीयस्य द्वे ॥*
तीयव्यञ्जनस्यैकाचो वा [4] । ऐर्षिष्यत् । ऐर्ष्ययत् ।

इति ण्यन्तप्रक्रिया ।

---

**णौ गमि** । इण गतौ । प्रत्याययतीति । णिच् । वृद्ध्यायादेशौ ।
धयतीत्यर्थः । इण्वदिति । इक् स्मरणे ।

**हनः** । हन हिंसागत्योः । घातयतीति । 'अत उपधायाः' इति
द्धिः । अचिण्णलोरिति किम् । अघानि । जघान । अथेह कस्मान्न ।
त्रं हतवान् । 'ब्रह्मभ्रूण—' इति क्विप् । तदन्तात् 'तस्येदम्' इत्यण् ।
र पूर्व—' इत्यल्लोपः । वार्त्रघ्न इत्युच्यते । धातोः कार्यमुच्यमानं
तुप्रत्यय एव भवति तेनात्र न भवति । एतच्च भ्रौणहत्येति
पातेन ज्ञापितम् । ईर्ष्ययतीति । ईर्ष्य ईर्ष्यें । ईर्ष्यतेरिति वक्तव्यम् ।
त्र कस्य तृतीयस्येत्याशङ्कायां केचिदाहुर्व्यञ्जनस्येति । अन्ये तु
ीयस्यैकाच इति । तदुभयमाह—तृतीयेति । व्यञ्जनापेक्षया
ीयव्यञ्जनस्य यकारस्य । अथवा तृतीयस्यैकाचः षकारस्येत्यर्थः ।

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा—
चार्यो यं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय—
व्याख्यानेऽस्मिन् प्रसादे निरगमदमला **प्रक्रिया ण्यन्तसंज्ञा** ॥

---

१. वर्जे N. २. C, $N_1$ and $D_2$ drop it. ३. °स्तृतीयस्य द्वितीयस्य
ञ्जनस्य एकाचो वा C ; °द्वितीयस्य द्वे । द्वितीयस्य व्यञ्जनस्यैकाचो वा P.
After it–द्वे स्तः $B_2$ ; द्वे स्तो वा N. ५. $D_2$ has ईर्ष्य ईर्ष्यायाम् before it.

## अथ सन्नन्ताः ।

धातोः कर्मणः समानकर्तृकादिच्छायां
॥३।१।७॥

इषिकर्मणो धातोरिषिणैककर्तृकात् सन्प्रत्ययो
स्यादिच्छायाम् ॥ लुङ्सनोर्घस्लृ । द्वित्वम् । सन्यतः ।
विधेरिहार्धधातुकत्वम् । एकाच उपदेश इति नेट् ।[2] धातुत्व
दयः । सस्य तत्त्वम् । अत्तुमिच्छति[3] जिघत्सति । अतो

---

धातोः कर्मणः । इषिकर्मण इत्यादि । इषेः
इषिकर्म । एकः कर्ता यस्य स एककर्तृकः । य ए
इषेः स एव कर्ता यस्य तस्मात् सन्प्रत्ययो वा स्यादिच्छ
इत्यर्थः । कर्मत्वं समानकर्तृत्वं च धातोरर्थद्वारकम् । द्वित्व
'सन्यङोः' इति । धातुत्वाल्लुङादय इति । 'सनाद्यन्ता
इति धातुत्वादित्यर्थः । सस्य तत्वमिति । 'सः स्यार्धधातुके'
जिघत्सतीति । अत्र भक्षणस्यार्थस्येच्छया व्याप्यमानत्वात् क
तद्द्वारादिरिषेः कर्म । तथा अदेः समानकर्तृत्वं चेषिणा ।
कर्ता इषेरर्थस्य स एवाद्यर्थस्येत्यर्थद्वारेण । धातोरिति
उपसर्गादुत्पत्तिर्मा भूत् । प्रकर्तुमैच्छत् प्राचिकीर्षत् । यदि
नोच्येत तदा प्रकर्तुमित्यस्य संघातस्येषिकर्मत्वात् सोपसर्गा
स्यात् ततश्च प्र इत्यस्य द्वित्वं स्यात् । अट् च प्रशब्दात् पूर्वः
कर्मण इति किम् । करणान्मा भूत् । गमनेनेच्छति । समानकर्तृ
किम् । देवदत्तस्य भोजनमिच्छति । इच्छायामिति किम्
जानाति । ननु चात्रेच्छा इषिकर्मत्वमिषिसमानकर्तृत्वमपि

---

१. सन्यङोरिति द्वित्वम् $B_2$. २. $D_1$ has पक्षे वाक्यमपि befor
३. P and C, $N_1$ have—उक्तार्थानामप्रयोगः before जिघत्सति ।

जिघत्सीत् । पक्षे वाक्यमपि ।

दीङः सन्यात्वं वेति केचित् । दिदासते ।[2] दिदीषते । तिस्वाप्योः संप्रसारणम् ।

**रलो व्युपधाद्धलादेः संश्च ॥१।२।२६॥**

उश्च इश्च वी[3] । उइवर्णोपधाद्धलादेः रलन्तात्परौ क्त्वासनौ टौ वा कितौ स्तः ॥ दिद्युतिषते । दिद्योतिषते ।

---

यनेकाङ्गविकलता । नैवम् । सति हीच्छाग्रहणे इषिकर्मत्वमिषिसमानर्तृकत्वं च लभ्यते । असति तु तस्मिन् यां कांचन क्रियां प्रति धातोः र्मत्वं समानकर्तृकत्वं चेति युक्तम् । जिघत्सेत् । जिघत्सतु । जिघत्सत् । अजिघत्सीदिति । लुङ् । सिच् । इट् । ईट् । सलोपः । डागमः । जिघत्सामास । जिघत्सिता ॥ जिघत्स्यात् । घत्सिष्यति । अजिघत्सिष्यत् । इति रूपाणि सन्नन्ते ज्ञेयानि सर्वत्र । वे वाक्यमपीति । वावचनादित्यर्थः ।

दीङ इति । दीङ् क्षये । तथोक्तं मुग्धबोधे । 'दीङश्चायां यन् णौ ङा सनि तु वा' इति । दिदासत इति । 'पूर्ववत् सनः' ात्मनेपदम् । दिदीषते इति । 'इको झल्' इति कित्त्वान्न गुणः । तिस्वाप्योः संप्रसारणमिति । द्युत दीप्तौ । अस्मात् द्योतितुमिच्छत्येतस्मिन्नर्थे सन् । द्वित्वम् । पश्चादभ्यासस्य संप्रसारणमित्यर्थः । ार्धधातुकस्य' इतीट् ।

रलः । क्त्वाप्रत्ययस्य 'न क्त्वा सेट्—' इति कित्त्वे प्रतिषिद्धे ोप्यकित्त्वे स्वभावत एव व्यवस्थिते उभयत्रेदं विधिमुखेनैव र्तते । पक्षे कित्त्वं भवतीति । दिद्युतिषते इति । 'क्ङिति ' इति गुणप्रतिषेधः । 'पूर्ववत् सनः' इत्यात्मनेपदम् ।

---

१. D₁ drops पक्षे.. मपि. २. After it—अदिदासिष्ट B₂. ३. वि: D₁.

उच्छेस्तुकि द्वित्वे च कृते खरपूर्वाः खयः शिष्यन्त
वक्तव्यम् । इति तलोपः । चर्त्वम् । अभ्यासचर्त्वस्य तु
सिद्धत्वात् छे चेति न तुक् । उचिच्छिषति । तलोपो वे
उतिच्छिषति ।

ण्यन्तात् सन् । णौ च संश्चङोरिति गाङ्
अधिजिगापयिषति । अध्यापिपयिषति । णौ संश्चङोरि
संप्रसारणम् । शुशावयिषति । शिश्वाययिषति । अण्यन्तस

---

उच्छेरिति । उछ बन्धनसमापनवर्जनातिक्रमेषु । अस्मात्
कृते 'छे च' इति तुकि च इटि च 'सन्यङोः' इत्यजा
द्वितीयस्य तकारसहितस्य छकारस्येट्सहितस्य द्वित्वे कृते इ
चर्त्वमिति 'अभ्यासे चर्च' इति चकारः। पूर्वत्रासिद्धन्यायेन पुन
प्राप्ते आह—अभ्यासचर्त्वस्येति। अभ्यासजश्त्वचर्त्वे एत्वतुकोः
वाच्ये इति वचनात् सिद्धत्वादित्यभिप्रायः । तलोप इति । त
रामव्याकरणे ।

उचिच्छिषति चछोर्द्विरुतिच्छिषति तच्छयोः ।
द्विर्भावं शर्ववर्माह छस्य (?) च्छे पाणिनिस्तुकम् ॥ इति

ण्यन्तात् सन्निति । इङ् अध्ययने । अस्मा
मण्णिजन्तात् सन्नित्यर्थः । अध्यापिपयिषतीति । गा
'क्रीङ्जि—' इत्यात्वम् । 'अजादेर्द्वितीयस्य' इति ए
पीत्येतस्यावयवस्य द्वित्वम् । शुशावयिषतीति । टुओश्वि
वृद्ध्योः । हेतुमण्णिच् । सन् । संप्रसारणम् । वृद्ध्यावादेशौ । शु इ
द्वित्वम् । सन इट् । गुणः । अय् । षत्वम् । शिश्वाययिषतीति ।
सन् वृद्ध्यायादेशौ । द्वित्वम् । इत्वम् । सन इट् । गुणः । अय् । षत्व

---

१. न छे चेति तुक् $D_1$. २. वेति केचित् P. ३. वा गाङ् $D_1$. ४.
अध्येयन before अधिजिगापयिषति in $D_1$. ५. C drops णौ...°
णौ च सन्निति वा सं° $D_3$, $D_4$. ६. $D_1$ and $D_2$, $D_3$, $D_4$ have—शि
यिषति । शुशावयिषति. ७. $D_2$, $D_3$ drop अण्य°...°यिषति. ८. च कृते

श्वयिषति । ह्वः संप्रसारणम् । जुहावयिषति । जुहोतेरप्येवं रूपम् ।

**उभौ साभ्यासस्य ॥८।४।२१॥**

अनितेः साभ्यासस्य उभौ नकारौ णत्वं प्राप्नुतः निमित्ते
ते ॥ प्राणिणिषति । पराणिणत् । न वृद्भ्यश्चतुर्भ्यः ।

**हलन्ताच्च ॥१।२।१०॥**

इक्समीपाद्धलः परो झलादिः सन् कित् स्यात् ॥

---

ावयिषतीति । ह्वेञ् स्पर्धायां शब्दे च । णिच् । सन् ।
सारणम् । शेषमनन्तरवत् ।

उभौ । अन प्राणने । **निमित्ते सतीति** । उपसर्गस्थे निमित्ते
त्यर्थः । **प्राणिणिषतीति** । अनितेः सन् । इट् । 'अजादेः—'
नीत्यस्य द्वित्वम् । **पराणिणदिति** । णिच् । चङ् । पूर्वत्रासिद्धीय-
त्वे इत्येतस्मिन् सति 'अनितेः' इत्यनेनैव कृतणत्वस्य द्वित्वे
द्धमेतत् सूत्रं विनापि । तथापि पूर्वत्रासिद्धीयमिति वचनस्य नित्यत्वे
प्सतीत्यत्र कृतलत्वस्य द्वित्वं प्राप्नोति तन्नाश्रयितव्यमित्येतस्य
नस्यानित्यत्वज्ञापनार्थमिदं सूत्रमारभ्यते ।

**हलन्ताच्च** । यदीहान्तशब्दोवयववाची स्यादिको हला सह
न्धो न स्यात् । न हीको हलवयवः संभवतीति । तस्मान्नायमन्त-
ोवयववाची अपि तु समीपवाच्येव युक्त इति मत्वाह—

---

१. अण्यन्तस्य तु जुहूषति for जुहोते···रूपम् $B_2$, $D_4$; dropped from ...रूपम् $D_3$. २. C has प्राणिणिषति for पराणिणत्. ३. °श्चतुर्भ्यो नेद $B_2$.

विवृत्सति । ताङि तु विवर्तिषते । सेसिचीति वेट् । निनृत्सति
निनर्तिषति ।

**इट् सनि वा ॥७।२।४१॥**

वृङ्वृञ्भ्यामृदन्ताच्च परस्य सन इड् वा स्यात् ॥

**इको झल् ॥१।२।९॥**

इगन्ताज्झलादिः सन् कित् स्यात् ॥ ऋत इद्धातो

---

**इक्समीपादिति** । **विवृत्सतीति** । वृतु वर्तने । सन् । 'वृद्
स्यसनोः' इति परस्मैपदम् । ततः 'न वृद्भ्यः' इतीट् न
ततः कित्त्वम् । ततो गुणनिषेधः । द्वित्वम् । 'उरत्
इत्वम् । ताङि त्विति । यदा तु 'वृद्भ्यः स्यसनोः' इति परस्मै
न तदा 'न वृद्भ्यः--' इति निषेधोपि न । आत्मनेपदत्वात् । त
तदा कित्त्वमपि न । अझलादित्वात् । अतो विवर्तिषते इत्यत्र
भवतीति भावः । **निनृत्सतीति** । नृती गात्रविक्षेपे । कित्त्व
उरत् । इत्वम् । **निनर्तिषतीति** । इट्पक्षे अकित्त्वाद्गुणः ।

**इट्** । वृङ् संभक्तौ । वृञ् आवरणे ।

**इकः** । सन्ग्रहणं प्रथमान्तमिहानुवर्तते । तस्य च 'झल्' इत
सामानाधिकरण्यमनुपपन्नम् । अतः सामर्थ्यात् तदादिविधिर्विज्ञे
इत्यभिप्रेत्याह—**झलादिः सन्निति** । इगिति प्रत्याहारः । न
स्मरणे इति धातुः । झलिति प्रत्याहारेण साहचर्यात् । अन्य
धातोः परो हल् न संभवतीति हलन्ताच्चेत्यघटमानं स्यात् ।
किमर्थमिदं कित्त्वम् । गुणनिषेधार्थमिति चेत्तन्न । यतः 'अज्झन
सनि' इति दीर्घत्वमनवकाशं सद्गुणस्य बाधकं भविष्य
चेन्मैवम् । यदि कित्त्वं नोच्येत कृते दीर्घे गुणः स्यात् । तदपि

---

१. ननु च Dc1, Dc3, Dc4. २ दीर्घत्वे Dc3.

कृतेपि दीर्घे गुणः स्यात् दीर्घशास्त्रमनर्थकं स्यात् । ननु चिचीषती-
ादौ ह्रस्वानां कृतस्य दीर्घत्वस्य श्रवणं यथा स्यादित्येवमर्थं
ानर्थकं दीर्घत्वम् । दीर्घाणां तु गुणः स्यादेव । न हि तेषां
मुच्यते । यतो दीर्घवचनसामर्थ्याद्द् गुणो न स्यात् । ततश्च
ीति न सिध्येत् । नैतदस्ति । यथैव हि भुक्तवद्भिरपि
वेशेषात् पुनरपि भुज्यते तथा दीर्घाणामपि प्रयोजनत्वविशेषाद्
षेधाद् दीर्घत्वं स्यात् । यथैव तर्हि दीर्घवचनसामर्थ्याद् गुणो न
'ॠतः–' इतीत्वमपि चिकीर्षतीत्यादौ न स्यात् । न । ॠदित्वं
त्रानां दीर्घसंश्रयमिति न बाध्यते । तथोक्तम् । यं विधिं
ग्रोनर्थकः स विधिर्बाध्यते । यस्य तु विधेर्निमित्तमेव
ाध्यते । दीर्घाणामपि नाकृते दीर्घत्वे इत्वं स्यात् । गुणादि-
। तस्मात् ज्ञीप्सतीत्यत्र णिलोपः प्रयोजनं कित्त्वस्य । यथा
बाधते दीर्घत्वं तथा णिलोपमपि बाधेत ज्ञीप्सतीत्यत्र ।
दीर्घत्वेन णिलोपस्य बाधो मा भूत् । गुणस्यैवेति गुणबाधार्थं
( । अतश्चिचीषतीत्यादिषु सावकाशं दीर्घत्वं परत्वाण्णिलोपेन
। तथोक्तं वार्तिककृता ।

'इकः कित्त्वं गुणो मा भूद् दीर्घारम्भात् कृते भवेत् ।
अनर्थकं तु ह्रस्वार्थं दीर्घाणां तु प्रसज्यते ॥
सामर्थ्याद्धि पुनर्भाव्यमृदित्वं दीर्घसंश्रयम् ।
दीर्घाणां नाकृते दीर्घे णिलोपस्तु प्रयोजनम्' ॥ इति ।

स्वादीनां $Dc_3$. २. कृतदीर्घ° $Bc_2$. ३. ॠदित्वमपि $Dc_1$, $Dc_3$.
दौ $Bc_2$. ५. वार्तिके $Bc_2$.

तितीर्षति । तितरिषति । तितरीषति ।

**अज्झनगमां सनि ॥६।४।१६॥**

अजन्तानां हन्तेरिङादेशगमेश्च दीर्घः स्यात् सौ
'उदोष्ठ्यपूर्वस्य'। वुवूर्षति । विवरिषति । विवरीषति ।

'ऋतश्च संयोगादेः' इत्यत्र सनि इति पद
ऋदन्तात् संयोगादेः स्कुडजात् सन इड्वेति केचित् ॥ स्

---

तितीर्षतीति । तॄ प्लवनतरणयोः । सन् । यदेट् न तदा
गुणाभावः । 'ऋतः—' इतीत्वम् । रपरः । द्वित्वम् । 'हलि च
दीर्घः । 'इण्कोः' इति षत्वम् । तितरिषति । तितरीष
इट्पक्षे कित्त्वाभावाद् गुणः । 'सन्यतः' इतीत्वम् । 'वॄ
इतीटो वा दीर्घः ।

**अज्झन** । इहाज्ग्रहणं न कार्यम् । 'सनि' इत्येताव
कार्यम् । 'हनिगम्योः' इति द्वितीयम् । तत्राचश्चेति प
सनीत्यत्राजन्तस्यैव दीर्घः स्यात् । तदज्ग्रहणं क्रियते प्र
गमेरपि विशेषणार्थम् । अजन्तस्य दीर्घः इङादेशगमे
इत्यभिप्रेत्याह—अजन्तानामित्यादि । वुवूर्षतीत्यादि
औवरणे । सन् । 'इट् सनि वा' इतीडभावे रूपम् ।
उत्वम् । रपरः । द्वित्वम् । 'हलि च' इति दीर्घः । इट्पक्षे वेटो

'ऋतश्च' इत्यादि । एतदेवाभिप्रेत्योक्तं मुग्धबोधे । '

---

१. P, $D_3$, and C drop it. २. °देशस्य $D_4$. ३. सासौ
४. विवरीषति । विवरिषति N. ५. From 'ऋतश्च'···to अनुवर्त्य
C. ६. C So C; others सुडवर्जात् । ७. C; So others
before it—धृ प्राणने । विधरिषति । दुधूर्षति $B_1$. ८. नास्ति I
९. इति वेटो दीर्घः $Bc_2$, $Dc_3$. १०. °तीति $Bc_2$. ११. वरणे

। संचिस्कीर्षति । दुधूर्षति । दिध्वरिषति ॥

**सन्लिटोर्जेः ॥७।३।५७॥**

जिगीषति ।[2] 'विभाषा चेः' । चिकीषति । चिचीषति ।

( । जिघांसति ।

**सनि च ॥२।४।४७॥**

सनि[4] परे इणो गमिः स्यान्न तु बोधने । जिगमिषति ।

तु शपोकारेण सिद्धेपि सन्यङोरकारोच्चारणमजादेरिति

---

र्थम् सन् मही सेः' । इति । संचिस्कीर्षतीति । डुकृञ्

। सन् । 'अज्झन--' इति दीर्घः । ननु चात्र दीर्घतायाम् 'इट्

ा' इतीट् कस्मान्नेति चेत् तत्रोपदेशाधिकाराल्लाक्षणिकत्वाच्च न ।

इत् । रपरः । द्वित्वम् । चुत्वम् । 'संपरि—' इत्यभ्यास-

ापि सुट् । स्कृ अयामितीट् न । 'हलि च' इति दीर्घः । दुधूर्षति ।

ेषतीति । ध्वृ कौटिल्ये । सन् । मतान्तरे संयोगादित्वाद्दिट् ।

न तदा किन्त्वम् । दीर्घः । 'उदोष्ठ्यपूर्वस्य' इत्युत्वम् । रपरः ।

् । दीर्घः । यदेट् तदा गुणः । इत्वम् ।

जिगीषतीति । जि जये । एकाच इति नेट् । दीर्घः । कुत्वम् ।

षतीति । चिञ् चयने । कुत्वमिति । अभ्यासाच्चेति ।

ातीति । हन हिंसागत्योः । दीर्घः । इत्वम् । चुत्वम् । अनुस्वारः ।

सनि । जिगमिषतीति । इण् गतौ । 'गमेरिट् परस्मैपदेषु'

। प्रतीषिषतीत्यत्र सनो द्वित्वप्राप्तिमाह—शपोकारेणेति ।

ावः । सन्यङोरकारोच्चारणं व्यर्थम् । यतः सार्वधातुके

ेण सिध्यति । आर्धधातुके तु अतो लोपेन भवितव्यम् ।

---

इति किम् $D_2$, $D_4$. २. After it—सन् लिटोरिति किम् । जेजयिते ।
N. ३. चिच्चीषति । चिकीषति । $D_4$. ४. सनि च परे $N_1$, $D_3$,

द्वित्वार्थम् । तेन सनो द्वित्वम् । अभ्यासस्य इत्वम् । प्रती
इंण्वदिक् । अधिजिगमिषति ।

इङश्च ॥२।४।४८॥

इङो गामिः स्यात् सनि ॥ अधिजिगांसते । ईर्ष्यि
यसनोर्वा द्वित्वम् । ईर्ष्यियिषति । ईर्ष्यिषिषति ।

**सनि ग्रहगुहोश्च ॥७।२।१२॥**

ग्रहेर्गुहेरुगन्ताच्च सन इट् न स्यात् ॥ बु

---

नैवम् । 'अजादेर्द्वितीयस्य' इति प्रतीषिषति अटाट्यत
द्वितीयस्य साच्कस्य सकारस्य यकारस्य च द्वित्वार्थमित्यर्थः
न्यासे प्रतीषिषतीत्यत्र प्रतिपूर्वादिणः सनि विहिते यद्यकारो
स्यात् 'अजादेर्द्वितीयस्य' इति द्वितीयस्यैकाचो विधीय
इत्यस्य न स्यात् । अनच्कत्वात् सनः । अकारोपदेशे तु
इत्यस्य द्वितीयस्यैकाच्त्वाद् भवति द्विर्वचनं तदर्थमकारोपदेश
तेन सनो द्वित्वमिति । 'सन्यङोः' इति । अभ्यास
'सन्यतः' इत्यनेन । प्रतीषिषतीति । उपसर्गेकारस्य धा
अकः सवर्णे दीर्घः ।

इङः । अधिजिगांसत इति । इङ् अध्ययने । 'अज्झ
इति दीर्घः । 'नश्चापदान्त—' इत्यनुस्वारः । 'पूर्ववत् स
तङ् । ईर्ष्यतेरिति । ईर्ष्य ईर्ष्ये ।

सनि । 'श्रिस्वृयूर्णु—' इति विकल्पविधानात् श्रयतिन
उगेवानुवर्तत इत्यभिप्रेत्याह—उगन्ताच्चेति । बुभूषतीति
सत्तायाम् । ऊदन्तत्वादिटि प्राप्ते उगन्तत्वान्निषेधः । 'इको

---

१. इण्वदिकः $D_2$. २. C drops ईर्ष्यतेः ... ईर्ष्यिषिषति. ३. [illegible]
सनि. ४. सन इत्यस्य $Dc_1$. ५. Dropped $Bc_2$. ६. सवर्ण B

ूषाति । अत्रादेशादूदन्तत्वेपि नेट् । चिकीर्षति । जुगुक्षति ।

रुदविदमुषग्रहिस्वपिप्रच्छः संश्च ॥१।२।८॥

एभ्यः संश्च क्त्वा च कितौ स्तः ॥ ग्रहिज्यो । सनः वस्यासिद्धत्वात् भष्भावः । जिघृक्षति । वचिस्वपीत्युत्वम् । ुप्सति ।

---

। कित्त्वान्न गुणः । जुहूषतीति । हु दानादानयोः । ननु चात्र काच उपदेशे—' इत्यनेनैवेटो निषेधात् तस्योदाहरणमिदं ापद्यत इत्याशङ्क्यात्र 'अज्झन—' इति कृते दीर्घे ऊदन्तत्वेनोदा- ःवादिडत्र स्यादिति कस्यचिद् भ्रान्तिः स्यात् तन्निरासार्थ- दुदाहृतमित्यभिप्रेत्याह—अत्रादेशादिति । चिकीर्षतीति । डुकृञ् णे । दीर्घः । इत्वम् । जुगुक्षतीति । गुहू संवरणे । दित्वाद्विकल्पेनेटि प्राप्ते निषेधः । 'हो ढः' । 'षढोः कः सि' । त्वम् । 'एकाचः—' इति भष्भावः । कषयोगे क्षः ।

रुद । रुदिर् अश्रुविमोचने । विद ज्ञाने । मुषस्तेये । ग्रह ादाने । ञिष्वप शये । प्रच्छ ज्ञीप्सायाम् । आद्यानां त्रयाणां ल—' इति विकल्पे प्राप्ते नित्यार्थं वचनम् । ग्रहेर्विध्यर्थमेव । पिप्रच्छ्योः सन्नर्थम् । किदेव हि क्त्वा । जिघृक्षतीति । ग्रह । ादि पूर्ववत् । सुषुप्सतीति । ञिष्वप । 'एकाच—' इतीट्निषेधः ।

---

. Before it C has—भावकर्मणि यकि । अतो लोपः । वृद्धिदीर्घाभ्यामतो ः पूर्वविप्रतिषधेन । बुभूष्यते ।; $N_1$ has the same, but has भावे कर्मणि 1 वृद्धिदीर्घाभ्यां पूर्वविप्रतिषेधेन । बुभूष्यते । अबुभूष्यत । २. 'ज्योति सारणम् P.

स्मिपूङ्रञ्ज्वशां सनि ॥७।२।७४॥

स्मिङ् पूङ् ऋ अञ्ज् अश् एभ्यः सन इट् स्यात् ॥ 
यिषते । पिपविषते । अरिरिषाति । अञ्जिजिषाति । अशिशि

किरश्च पञ्चभ्यः ॥७।२।७५॥

कॄ गॄ दृ धृ प्रच्छ एभ्यः सन इट् स्यात् ॥ चिकरि

---

स्मिपूङ् । स्मिङ् ईषद्धसने । पूङ् पवने । ङकारः निवृत्त्यर्थः । ऋ गतिप्रापणयोः । ऋ गताविति द्वयोरपि ग्रह ऋकारान्तां तु ग्रहणं न । किरतीत्यादीनामिटो विधानात् । व्यक्तिम्रक्षणकान्तिगतिषु । अशूङ् व्याप्तौ । अश इत्यस्य ग्रहणं न भवति । उदात्तत्वादेवेटः सिद्धत्व अत्राञ्जेरशेश्चोदित्त्वाद्विकल्पे प्राप्ते स्मिङोऽप्राप्ते शेषयोरुगन्तत्वा प्राप्ते वचनम् । सिस्मयिषते इति । 'पूर्ववत् सनः' इत्यात्मने 'स्तौतिण्योः' इति नियमान्न षत्वम् । पिपविषत इति । पुयण्—' इत्यभ्यासस्येत्वम् । अरिरिषतीति । इटि गुणे र च कृते 'अजादेः—' इति रि इत्येतस्य द्वित्वम् । न 'द्विर्वचनेचि' इति स्थानिवत्त्वं प्राप्नोति यतो द्विर्वचननिमित्ते च्यते । न चात्र द्विर्वचनस्य निमित्तमिट् । किं तर्हि । व न च कार्यी निमित्तत्वेनाश्रीयते । तथा हि क्ङिन्निमित्त वृद्ध्योर्निषेधो विधीयमानः शायितेत्यत्र न भवति ।

किरश्च । कॄ विक्षेपे । गॄ निगरणे । दृङ् अनादरे । धृङ् अव प्रच्छ ज्ञीप्सायाम् । आद्ययोः 'इट् सनि वा' इति विकल्पे मध्ययोरुगन्तत्वादिण्निषेधे प्राप्ते अन्त्यस्य त्वनिट्त्वादप्राप्ते इदं व

---

१. स्मिङ् $D_1$, C, $N_1$. २. अञ्ज $D_1$; अञ्ज् $N_1$, $D_3$. ३. अ
४. रि रिकारस्य $Dc_3$. ५. अनवस्थाने $Dc_3$. ६. $Bc_2$; So; other

ागरिषाति । अत्र इटो दीर्घत्वं नेष्टम् । दिदरिषते । दिधरिषते । पृच्छिषाति ।

**सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् ७।२।४९॥**

इवन्तेभ्यः ऋधादिभ्यश्च सन इड् वा स्यात् ॥

**च्छ्वोः शूडनुनासिके च ॥६।४।१९॥**

सतुक्कस्य छस्य वस्य च क्रमात् श ऊठ् इत्येतावादेशौ स्तः

---

पृच्छिषतीति । 'रुदविद—' इति कित्त्वम् । 'ग्रहिज्या—' इति नसारणम् । 'छे च' इति तुक् । 'उरत्' इत्यत्त्वम् । ान्यतः' इतीत्त्वम् ।

**सनीवन्त** । इवन्ता दिविसिवीत्यादयः । ऋधु वृद्धौ । ज्जो पाके । दम्भु दम्भे । श्रिञ् सेवायाम् । स्वृ शब्दोपतापयोः । मिश्रणे । ऊर्णुञ् आच्छादने । भृञ् भरणे । भौवादिः । शपा र्देशात् । मारणतोषणनिशामनेषु ज्ञा ण्यन्तश्चौरादिको ज्ञपिश्च । । भक्तौ । षणु दाने । द्वयोरपि ग्रहणम् । विशेषाग्रहात् । अत्र ज्जोनुदात्तत्वात् स्वृऊर्णुभृञां चोगन्तत्वात् प्रतिषेधे प्राप्ते षाणामुदात्तत्वात् सनि नित्यमिटि प्राप्ते विकल्पार्थोयमारम्भः ।

**च्छ्वोः शूड्** । यदि केवलस्य छस्य ग्रहणं क्रियते तदा प्रच्छ प्सायामित्यस्य क्तप्रत्यये कृतेन्तरङ्गत्वात् पूर्वं 'छे च' इति तुकि मात्रस्य शकारे पृत्ष्ट इत्यनिष्टं रूपं स्यात् । सतुक्कस्य तु शादेशे ।यमाणे त्वेष दोषो नास्तीत्यालोच्याह—**सतुक्कस्येति** । एतच्च ानौ पृष्टप्रतिवचने' इत्यतो निर्देशादवसीयते । तुग्विरहितस्य ग्रहणे-

---

१. न दीर्घत्वम् C. २. ददरिषति C, $D_3$. ३. दिधरिषति $D_3$. ४. इति opped $N_1$, $D_3$, $D_4$.

अनुनासिके क्वौ झलादौ [1]क्ङिति च [2] ॥ द्वित्वम् । दुद्यू
दिदेविषति । सुस्यूषति । स्तौतिण्योरिति नियमात् न षः
सिसेविषति । अर्दिधिषति ।

आपूज्ञप्यृधामीत् ॥७।४।५५॥

एषामच ईत् स्यात् सादौ सनि ॥[3]

अत्र लोपोभ्यासस्य ॥७।४।५८॥

सनि मीमित्यारभ्य यदुक्तं [4]तत्राभ्यासलोपः स्य

---

भिमते पृच्छ इति निर्देशमकरिष्यत् । द्वित्वमिति । दिवः
'हलन्ताच्च' इति किच्त्वे ऊठ् यणादेशः । ततः 'सन्यङोः
द्वित्वमित्यर्थः । हलादिः शेषः । ह्रस्वः । स्तौतीति
कथयिष्यमाणे 'स्तौतिण्योः' इति सूत्रे अभ्यासेणः
स्तौतिण्यन्तयोरेव सस्य षः स्यात् षभूते सनि नान्यस्येति नि
षत्वं न भवतीत्यर्थः । अर्दिधिषतीति । ऋध । 'पुगन्त—' इ
कृते धीत्यस्य द्वित्वम् । रेफस्य 'नन्द्राः—' इति निषेधात्
न । 'अभ्यासे चर्च' इति जश्त्वं दकारः ।

आपूज्ञप् । आप्लृ व्याप्तौ । अन्यावनन्तरोक्तौ ।
मुखसुखार्थः ।

[5]अत्र लोपः । अत्रग्रहणं विषयावधारणार्थमित्यभि
सनिमीमेति । केचित् सर्वस्याभ्यासस्य लोपो यथा स्यादित्येवम
ग्रहणं वर्णयन्ति । विषयावधारणपक्षे तु नानर्थकेलोन्त्यवि
सर्वाभ्यासलोपः । अनभ्यासविकारेष्विति तु निषेधो न । ले

---

१. च क्ङिति $B_2$, $D_3$, $D_4$. २. Dropped $N_1$. ३. C, $B_2$, N
have रपरत्वम् after it. ४. तत्राभ्यासस्य $D_2$, $D_3$, $B_2$. ५. अत्र
$Dc_3$. ६ प्रतिषेधो न $Dc_3$.

रत्वम् । चर्त्वम् । [2]ईर्त्सति । बिभ्राज्जिषति । बिभार्ज्जिषति ।
भ्रक्षति । बिभर्क्षति । दिदंभिषति ।

दम्भ इच्च ॥७।४।५६॥

दम्भेरच इदादेशः स्यात् ईच्च सकारादौ सनि ॥

---

कारत्वात् । ईर्त्सतीति । ईत्त्वे कृते 'अजादेर्द्वितीयस्य' इति
त्वम् । बिभ्रज्जिषतीति । द्वित्वम् । 'सन्यतः' इतीत्वम् ।
लां जश् झशि' इति सकारस्य दकारः । 'स्तोश्चुना श्चुः' इति
ारस्य जकारः । बिभर्क्षतीति । 'भ्रस्जो रोपध—' इति अकारात्
ो रम् रेफस्य सकारस्य च निवृत्तिः । 'व्रश्च—' इति षः । 'षढोः
ः सि' इति कः । 'इण्कोः—' इति षत्वम् ।

दम्भः । 'हलन्ताच्च' इति दम्भेः परस्य सनः कित्त्वमित्यन्वयः ।
[ च दम्भेः परस्य सनः इक्समीपाद्धलः परत्वं नास्ति भकारेण
ावधानादिति शङ्कानिराकरणायाह—हलन्ताच्चेति । अत्र हल्ग्रहणस्य
ातिवाचकत्वादिति । अयमभिप्रायः । 'हलन्ताच्च' इत्यत्र
ेति हल्त्वजातिरुच्यते । तेन यदा तावत्त्यक्तभेदा व्यक्तयो
ातिरिति दर्शनं तदा तासां हल्त्वेनाश्रितानां नास्ति व्यवधानमतो
त्र हल्जातिरिक् समीपगता तत एव च परः सन्निति
म्भेर्विहितस्य सनः कित्त्वं सिद्धमेव । यदाप्यर्थान्तरभूता
ातिर्व्यक्तिषु प्रत्येकं परिसमाप्ता निरवयवा नित्या एका च तदापि
स्ति व्यवधानम् । यस्माद् व्यक्तिर्व्यक्त्यन्तरस्य व्यवधायिका न
तेः । तस्या अमूर्तत्वात् । तस्मादिहापि दर्शने यैवं हल्जातिरिकः
मीपे तस्या एव परः सन्निति दम्भेः सनः कित्त्वं सिद्धं भवति ।

---

१. C, B$_2$, N$_1$, D$_4$ drop it. २. P has before it—ऋध वृद्धौ. ३. Dropped N$_1$. ४. सस्य दः । Bc$_2$. ५. दस्य जः । Bc$_2$. ६. °निवृत्त्यर्थ-
ः । Bc$_2$. ७. तावत्युक्तभेदा Dc$_3$. ८. तस्या एव परः Dc$_3$. ९. एका
्या तदापि Dc$_1$, Dc$_3$. १०. Dropped Bc$_2$.

अभ्यासलोपः। हलन्ताच्चेत्यत्र दम्भेर्हल्ग्रहणस्य जातिवाच
सनः कित्त्वम्। न्लोपः[1]। धिप्सति। धीप्सति। शिश्रयि
शिश्रीषति। सिस्वरिषति। सुस्वूर्षति[2]। यियविषति। युयू
ऊर्णुनुविषति। ऊर्णुनविषति। ऊर्णुनूषति। बिभरिष
बुभूर्षति। जिज्ञपयिषति। इको झल्। कित्त्वान्न[4] गु

---

तस्यास्तु व्यक्तिव्यतिरिक्ताया जातेर्यदिगपेक्षसमीपवर्तिनीत्वं
तां जातिमपेक्षमाणस्य सनः परत्वं तदुभयं व्यक्तिद्वारकं वेदित
नकारव्यक्तिरिकः समीप इति तदाधारा हल्जातिरपि इकः स[5]
भकारव्यक्तेः परः सन्निति जातेरपि परः सन्निति। नलोप
'अनिदिताम्—' इति। धिप्सति। धीप्सतीति। भषभ
'खरि च' इति चर्त्वम्। शिश्रीषतीति। 'इको झल्—' इति कि
'अज्झन—' इति दीर्घः। सिस्वरिषतीति। द्वित्वम्। '
इत्यत्वम्। 'सन्यतः' इतीत्वम्। सुस्वूर्षतीति। पूर्ववद्
'उदोष्ठ्य—' इत्युत्वम्। रपरः। दीर्घः। यियविषतीति।
पुयण्ज्यपरे' इत्यभ्यासस्येत्वम्। ऊर्णुनुविषति। ऊर्णुनविष
अजादित्वाद् द्वितीयस्य नु इत्यस्य द्वित्वम्। रेफस्य तु 'न
इति निषेधात्न्न। इट्पक्षे 'विभाषोर्णोः' इति यदा ङित्त्वं तदा
अन्यदा गुणः। बुभूर्षतीति। पूर्ववद् दीर्घः। उत्वं च।
यिषतीति। ज्ञा अस्माण्णिच्। पुकि मित्त्वाद्ध्रस्वे सनि इटि
यादेशे च कृते रूपम्। इको झलित्यादि। 'इको झल्—' इ
हि[6] चिचीषतीत्यादौ कित्त्वाद्गुणनिषेधार्थम्। अन्यथा हि
निरवकाशं सत् दीर्घत्वं गुणं बाधते तथा णिलोपमपि[8]

---

१. लोपः D₂, D₃; नलोपः P, B₁, B₂; सनः कित्त्वं लोपः B₂
drops from सुस्वूर्षति…युयूषति।. ३. C has विभाषोर्णोः bef
४. इगिति कित्त्वा° D₃. ५. समीपेति Dc₃. ६. Dropped
७. चिक्रीर्षती° Dc₁. ८. बाधते Dc₁, Dc₃.

त्वाण्णिलोपेन दीर्घो बाध्यते । ज्ञीप्सति । ज्ञपिरत्र पुगन्तो [2]त्संज्ञः । पकारान्तश्चौरादिकश्च । [3]अन्यत्र जिज्ञापयिषतीत्येव । सनिषति । जनसनेत्यात्वम् । परिसिषासति ॥ तनिपति-रेद्रातिभ्यः सनो वा इड् [4]वाच्यः । तितनिषति ।

**तनोतेर्विभाषा ॥६।४।१७॥**

तनोते[5]रुपधाया दीर्घः [6]स्याद्वा झलादौ सनि ॥ तितांसति । तंसति । आशङ्कायां सन् [7]वक्तव्यः । श्वा मुमूर्षति ।

---

माद्दीर्घेण णिलोपबाधो मा भूदिति कित्त्वम् 'इको झल्–' इति ीयत इत्यर्थः । फलमाह- परत्वादित्यादि । ततश्च ज्ञीप्सतीत्यत्र ज्झनगमां सनि' इति प्राप्तो दीर्घो 'णेरनिटि' इति णिलोपेन त्वात् बाध्यत इत्यर्थः । अयमर्थोऽस्माभिः 'इको झल्' इति सूत्रे ृतः । एवं स्थिते ज्ञपेरिडभावे यद्रूपं स्यात् तद् दर्शयति-सतीति । 'आप्ज्ञप्–' इतीत्वम् । अभ्यासलोपः । ज्ञपिरत्रेति । ा 'सनीवन्त–' इति सूत्रे 'आप्ज्ञप्यृधामीत्' इति सूत्रे च ः पुगन्तो मित्संज्ञको ज्ञा अवबोधने इति क्र्यादिर्गृह्यते । ारान्तश्चौरादिको ज्ञप् मारणतोषणनिशामनेषु मिच्चेत्ययमपि ते । अविशेषादित्यर्थः । सिसनिषतीति । 'स्तौतिण्योः' इति मान्न षः । परिसिषासतीति । 'स्तौतिण्योः' इत्यत्र षभूते सनि धादत्र षत्वम् । तितनिषतीति । तनु विस्तारे । 'सन्यतः' त्वम् ।

तनोतेः । तितांसतीति । 'नश्चापदान्त–' इत्यनुस्वारः । शङ्कायामिति । आशङ्का संभावना । श्वा मुमूर्षतीति । [8] प्राणत्यागे । कित्त्वम् । दीर्घत्वम् । उत्वम् । रपरः । अत्र

---

. न बाध्यते $D_4$. २. मित्संज्ञः स्यात् $B_2$. ३. $D_2$, $D_3$, $D_4$, $B_2$ drop ग्रत्र ...°त्येव ।. ४. वक्तव्यः $N_1$. ५. °रुपधादीर्घो वा $B_2$. ६. वा स्यात् ; दीर्घो वा झलादौ $D_4$. ७. वाच्यः C. ८. °र्हीर्घं $Dc_1$. ९. इत्यत्र $Bc_2$.

कूलं पिपतिषति ।

**सनि मीमाघुरभलभशकपतपदामच इस् ॥७।४।५४॥**

मि मी मा मोङ् मेङ्[1] दा धा एषां रभादीनां चाचः[2] इस् स्यात् सादौ सनि । अभ्यासलोपः[3] । 'स्कोः संयोगाद्योः'[4] इति संयोगादिलोपः । पित्सति । दिदरिद्रिषति । दिदरिद्रासति[5] ।

---

चं जीवितस्य प्रियत्वात् शुनो मर्तुमिच्छा न संभवतीति सन् न प्राप्नोति । अतः शङ्के मरिष्यति श्वा इत्यत्रार्थो वेदितव्यः । कूलं पिपतिषतीति । पत्लृ पथे च गतौ । अत्र कूलस्याचेतनत्वादिच्छा न संभवतीति सन् न प्राप्नोति । अतः शङ्के पतिष्यति कूलमित्य-स्मिन्नर्थे एष प्रयोगः ।

**सनि मी** । मिमी इति डुमिञ् प्रक्षेपणे मीञ् हिंसायाम् । ननु च मीत्यस्मिन्नुचार्यमाणे मिनोतेर्ग्रहणं न लभ्यते । न । तस्यापि हि 'अज्झनगम–' इति सनि दीर्घत्वे कृते मी इति रूपं स्यात् । नन्वेवमपि लक्षणप्रतिपदोक्तपरिभाषयास्य ग्रहणं न स्यात् । तदपि न । अत्र हि घिसंज्ञत्वात् घु इत्येतस्य पूर्वनिपातमकुर्वतैतत् सूचितम् । यथा पूर्वनिपातलक्षणमिह नापेक्ष्यते तथान्यदपि किंचिच्छास्त्रीयं वचनं नापेक्ष्यते । अतो नेयं परिभाषात्र प्रवर्तते इति युक्तं मिनोतेरपि ग्रहणम् । **मा माङ् मेङ्** इति । गामादाग्रहणेष्वविशेष इत्यभिप्रायेण । मा माने । माङ् माने शब्दे च । मेङ् प्रणिदाने । इति च त्रयाणामपि ग्रहणमित्यर्थः । **दा धा** इति । दारूपा धारूपाश्च धातवः । रभ राभस्ये । डुलभष् प्राप्तौ । शक्लृ शक्तौ । पत्लृ गतौ । पद गतौ । **पित्सतीति**[6] । पत्लृ अस्मात् सनः 'तनिपति–' इति यदेडभावस्तदा रूपम् । **दिदरिद्रिषतीति**[7] । दरिद्रा दुर्गतौ ।

---

१. मा मेङ् $D_1$. २. चाचः स्थाने $N_1$, $D_3$. ३. °लोपश्च C. ४. स्कोरिति संयोगा° P, $D_2$, $D_3$, C; स्कोः संयोगा° N. ५. Before it—दरिद्रातेरार्ध-धातुके आलोपः C. ६. Dropped $Bc_2$, $Dc_3$. ७. इत्यस्य $Bc_2$, $Dc_3$.

यार्धधातुके इति सस्य तः । मित्सति । मित्सते । दित्सति ।
ाति । रिप्सते । लिप्सते । शिक्षति । पित्सते । ईप्सति ।[4]
राधो हिंसायां सनि इस् वाच्यः । प्रतिरित्सति । हिंसायां
। आरिरात्सति ।

**मुचोकर्मकस्य गुणो वा ॥७।४।५७॥**

अकर्मकस्य मुचो गुणो वा स्यात् सादौ सनि ॥
सलोपः । पक्षे हलन्ताच्चेति कित्त्वान्न गुणः । मोक्षते
ते वा वत्सः स्वयम् । अकर्मकस्य किम् । मुमुक्षति वत्सं कृष्णः ।

---

ट् । 'आतो लोप इटि च' इत्यालोपः । मित्सतीति ।
ा मा इति त्रयाणां रूपम् । मित्सते इति । माङ्मेङोः ।
त् सनः' इत्यात्मनेपदम् । दित्सति । धित्सतीति । डुदाञ्
डुधाञ् धारणपोषणयोः । रिप्सते लिप्सत इति । 'पूर्ववत्
इत्यात्मनेपदम् । 'स्कोः संयोग—' इति सलोपः । 'खरि च'
त्वम् । शिक्षतीति । सलोपः । 'इण्कोः—' इति षः ।
ति । आप्लृ व्याप्तौ । 'आप्ज्ञप्—' इतीत्वम् । अभ्यासलोपः ।
प्रतिरित्सतीति । हिंसितुमिच्छतीत्यर्थः । पूर्ववत् प्रक्रिया ।
त्सतीति । 'सन्यतः' इतीत्वम् ।

मुचः । मोक्षत इति । मुच्लृ मोक्षणे । 'चोः कुः' ।
:' इति षत्वम् । कर्मकर्तरि लट् । 'कर्मवत् कर्मणा' इत्यति-
त्मनेपदम् । कृगृश्रिञ्भूषार्थेभ्यः सनन्ताच्च यक्चिणौ नेति
धः । वत्सं मोक्तुमिच्छति । स मोक्तुमिष्यमाणो मुक्तिक्रियां
तुल्यं यदा प्राप्नोति तदा सुमोचत्वात् तस्मिन् कर्तृत्वेन

---

क्षते $D_3$. २. पित्सति $D_4$. ३. C drops it. ४. After it—
याप्तौ N. ५. वक्तव्यः $D_1$, $D_2$, P, $B_1$. ६. वा गुणः $N_1$.
ति C. ८. मा मी $Bc_2$; मा मीञ् $Dc_3$. ९. After it—राध एव ।

णौ कृतादेशस्य स्थानिवत्त्वम्। पुस्फारयिषति।[1] चुक्षावयिष
ओः पुयण्ज्यपरे।[3] पिपावयिषति। बिभावयिषति। यियावयिष
रिरावयिषति। लिलावयिषति। जु गतौ। जिजावयिष
ओः पुयण्जि इति किम्।[4] नुनावयिषति। अपरे कि

---

विवक्षिते मुचिरकर्मको भवति। ननु गुणग्रहणं किमर्थं
ओदित्येव किं नोच्यते। नन्वेवं सत्योकारोन्त्यस्य स्यात्। गुण
त्विक एव स्यात्। संज्ञया विधानात्। मैवम्। अच इति हि वर्त
तेनान्त्यस्य न स्यात्। एवं तर्ह्येतत् ज्ञापयति अत्र इति निवृत्ति
तेन 'अत्र लोपोभ्यासस्य' इत्यच एवाभ्यासस्य लोपो न।
स्वेधिकारे मा भूत् तस्यानुवृत्तिर्थेत्यच एव लोपो भवे
पुस्फारयिषतीति। स्फुर स्फुरणे। णिच्। गुणः। 'चिस्फुरो
इत्यात्वम्। सन्। द्वित्वे क्रियमाणे उवर्णादेशस्याकारस्य स्थानिवत्त्व
इड्गुणायादेशाः। चुक्षावयिषतीति। टुक्षु शब्दे। णिच्। स
वृद्ध्यावादेशौ। उवर्णादेशस्याचः स्थानिवत्त्वम्। ओः पुयणि
'ओः पुयण्ज्यपरे' इति सूत्रेण सनि पवर्गयण्जकारेष्ववर्ण
परतोभ्यासोकारस्येत्वमित्यर्थः। पिपावयिषतीति। पूङ् पव
अस्माण्ण्यन्ताद् वृद्ध्यावादेशौ। स्थानिवद्भावात् पू इत्यस्य द्वित्व
बिभावयिषतीति। भवतेर्ण्यन्तात् सन्। यियावयिषतीति।
मिश्रणे। अस्माण्ण्यन्तात् सन्। रिरावयिषतीति। लिलावयिषती
अत्रापि रु शब्दे लूञ् छेदने इति द्वाभ्यामपि ण्यन्ताभ्यामेव सन्
गताविति सौत्रो धातुः 'जुचङ्क्रमि—' इत्यादौ सूत्रे पठितत्वा
नुनावयिषतीति। णु स्तुतावस्मात् ण्यन्तात् सन्। पूर्ववत् प्रक्रिय

---

१. P has पुस्फोरयिषति after it. २. क्षु शब्दे before it i
३. ज्यपरे dropped $N_1$, $D_3$, $D_4$. ४. पुयण् ज्य इति किम् $N_1$; पुयण्
$D_3$. ५. नु dropped $Bc_2$. ६. °र्थ्येत्यभिप्रेत्याह। अच एव &c.
७. $Bc_3$, $Dc_3$; So; others स्थानिवत्त्वात्.

ुभूषति । स्रवतीति इत्वं वा । सिस्रावयिषति । सुस्राव-
यिषति । इत्यादि । अपर इत्येव । शुश्रूषते । रलो व्युपधाद्धलादेः
ंश्च । रुरोचिषते । रुरुचिषते । लिलेखिषति । लिलिखिषति ।
ुदाविदेति नित्यं कित्त्वम् । रुरुदिषति । विविदिषति । मुमुषिषति ।

**स्तौतिण्योरेव षण्यभ्यासात् ॥८।३।६१॥**

अभ्यासेणः परस्य स्तौतिण्यन्तयोरेव सस्य षः स्यात्
भूते सनि नान्यस्य ॥ तुष्टूषति । द्युतिस्वाप्योरित्युत्वम् ।

---

भूषतीति । भवतेः सन् । 'सनि ग्रहगुहोश्च' इतीडभावः । 'इको
ल्—' इति कित्त्वान्न गुणः । **स्रवतीति इत्वं वेति** । 'स्रवतिशृणोति
द्रवतिप्रवतिप्लवतिच्यवतीनां वा' इति । **सिस्रावयिषति । सुस्राव-
यिषतीति** । स्रवतेर्ण्यन्तात् सन् । आदिशब्दात् । शिश्रावयिषति ।
शुश्रावयिषति । दिद्रावयिषति । दुद्रावयिषति । पिप्रावयिषति ।
ुप्रावयिषति । पिप्लावयिषति । पुप्लावयिषति । चिच्यावयिषति ।
ुच्यावयिषतीति ज्ञेयम् । **शुश्रूषत इति** । श्रु श्रवणे । कित्त्वाद्
ुणाभावः । दीर्घः । 'ज्ञाश्रुस्मृ—' इति तङ् । **रुरोचिषत इति** ।
ुच दीप्तौ । **लिलेखिषतीति** । लिख लेखने । **रुरुदिषतीत्यादि** ।
ुदिर् अश्रुविमोचने । विद ज्ञाने । मुष स्तेये ।

**स्तौतिण्योः** । ष्टुञ् स्तुतौ । षभूते षत्वं प्राप्ते कृतषत्वे इत्यर्थः ।
सिद्धे सत्यारम्भो नियमार्थः । एवकारकरणमिष्टतोवधारणार्थमि-
त्याह- **स्तौतिण्यन्तयोरेवेति** । षण्येवेति हि विज्ञायमाने तुष्टावेत्यत्र न
स्यात् । इह च स्यादेव सिसिक्षतीति । षणिति सानुबन्धग्रहणं किम् ।
समात्रे नियमो मा भूत् । सुषुपिष इन्द्रम् । स्वपेर्लिट् । छान्दसत्वाद्
व्यत्ययेन थासः से । द्वित्वादि । **तुष्टूषतीति** । ष्टुञ् स्तुतौ । 'अज्झन-'

---

१. इत्युत्वम् $B_3$, $D_4$. २. $D_2$ drops this. ३. °रिति संप्रसारणम् P. ४. स्तौति । $Bc_2$. ५. °मिष्टता° $Bc_2$. ६. ण्योरेवेति $Dc_1$. ७. Dropped $Bc_2$, $Dc_3$.

सुष्वापयिषति । स्तौतिण्योः किम् । सिसिक्षति । उपसर्गात्
स्थादिष्वभ्यासेनेत्यभ्यासात् षः स्यादेव । परिषिषिक्षति । ष
किम् । सभूतेन्यस्य स्यादेव । तिष्ठासति । सुषुप्सति । अभ्यास
किम् । धात्विण्निमित्तः षोन्यस्य स्यादेव । इण् । प्रतीषिषति
इकु । अधीषिषति ।

## सः स्विदिस्वदिसहीनां च ॥८।३।६२॥

अभ्यासेणः परस्यैषां ण्यन्तानां सस्य स एव स्यान्न
षणि परे ॥[4] सिस्वेदयिषति ।[5] सिस्वादयिषति । सिसाहयिषति
स्थादिष्वभ्यासेन चाभ्यासस्येत्यत्र स्थादिष्वेवाभ्यासस्य
न सुनोत्यादिष्विति नियमात् अभिसुसूषति । परिसिषासति

---

इति दीर्घः । 'शर्पूर्वाः खयः' । ष्टुत्वम् । सुष्वापयिषतीति
ञिष्वप शये । ण्यन्तात् सन् । सिसिक्षतीति । षिच क्षर
'हलन्ताच्च' इति कित्त्वाद्गुणाभावः । तिष्ठासतीति । ष्ठा गतिनिवृ
'सन्यतः' इतीत्वम् ।

सः स्विदि । ञिष्विदा गात्रप्रक्षरणे । स्वद आस्वादने ।
मर्षणे । सकारस्य सकारवचनं मूर्धन्यानिवृत्त्यर्थम् । सिस्वेदयि
त्यादि । ण्यन्तेभ्यः सन् । अभिसुसूषतीति । षुञ् अभिषवे
'सुनोतेः स्यसनोः' इति न षत्वम् । परिसिषासतीति
षोन्तकर्मणि । 'आदेच—' इत्यात्वम् । 'इण्कोः—' इति षत्व

---

१. $D_4$. So; others सुस्वा.° २. °ष्वभ्यासस्येति षः $D_2$. ३. °न्न तु ष
४. Before it P has—स्विदि स्नेहमोक्षणे ।. ५. Before it—स्वद स्व

शैषिकान्मतुबर्थीयात् शैषिको मतुबर्थिकः ।
[1]सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ॥
स्वार्थसन्नन्तात् सन् स्यादेव । जुगुप्सिषते । मीमांसिषते ।
इति [2]सन्प्रक्रिया ।

---

शैषिकादित्यादि । अपत्यादिचतुरर्थान्तान्यः शेषः । तत्र भवः प्रत्ययः शैषिकः । अध्यात्मादित्वाट्ठञ् । तस्मात् शैषिकः सरूपप्रत्ययो नेष्टः । शालायां भवः । वृद्धाच्छः । शालीयः । शालीये भव इत्यर्थे पुनश्छो न । विरूपस्तु स्यादेव । अहिछत्रे भवः आहिछत्रः । प्राग्दीव्यतोण् । आहिछत्रे भवः आहिछत्रीयः । अणन्तात् छो भवति । मतुबर्थे भवः मतुबर्थीयः । गहादित्वात् छः । तस्मात् सरूपप्रत्ययो मतुबर्थो नेष्टः । मतुबर्थोस्यास्तीति मतुबर्थिकः । 'अत इनिठनौ' इति ठन् । दण्डोस्यास्तीति दण्डिकः । पूर्ववत् ठन् । सोस्यास्तीति पुनष्ठन् न स्यात् । विरूपस्तु स्यादेव । दण्डोस्त्येषां दण्डिनः । ते सन्त्यस्यां शालायां दण्डिमतीति । इन्नन्ताद् मतुब् भवति । सन्नन्तादिति । सरूप इति संबध्यते । तत्र सनो रूपसारूप्यव्यभिचारो नास्तीत्यर्थसारूप्यमाश्रीयते । विशेषणसामर्थ्यात् । जुगुप्सिषते । मीमांसिषते इति । गुप गोपने । मान विचारणे । आभ्यां 'गुप्तिज्किद्भ्यः—' 'मान्बध—' इति च स्वार्थसन्नन्ताभ्यामिच्छासन् । इट् । अतो लोपः ।

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विट्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय—
व्याख्यानेस्मिन् प्रसादे निरगमदमला प्रक्रियेयं सनन्ता ॥

---

१. सरूपप्रत्ययः $D_1$. २. सनन्त° $D_3$. ३. सरूपो मतुबर्थिकः प्रत्ययः $Dc_2$, $Dc_3$.

# अथ यङन्ताः ।

**धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ॥३।१।२२॥**

हलादिर्यो धातुरेकाच् तस्मात् पौनःपुन्ये भृशार्थे च यङ्प्रत्ययः[1] स्यात् ॥ सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वक्तव्यः । धातोरित्युक्तेः सोपसर्गान्न । प्राटति भृशम् । रुचिशुभ्योर्यङ् न ।

---

धातोः । समभिहरणं समभिहारः । विप्रकीर्णानां द्रव्याणां राशीभाव उच्यते । स च मूर्तस्यानेकस्यैककालस्य स्यात् । अतो धातुवाच्यानां क्रियाणां मुख्यः समभिहारो न स्यात् । अमूर्तत्वात् क्रमभावित्वेनायुगपत्कालत्वाच्चेत्यभिप्रेत्य गौणसमभिहारं दर्शयितुमाह पौनःपुन्ये भृशार्थेचेति । एतदुभयं समभिहारसादृश्यादव्यवधाना समभिहारव्यपदेशं लभते । तत्र प्रधानक्रियायाः पचनादिकायाः क्रियान्तरा व्यवधानेनावृत्तिः पौनःपुन्यम् । तथैकप्रधाने क्रियाया अधिश्रयणादिकायाः साकल्येन संपत्तिः फलातिरेको वा भृशार्थः । **सूचिसूत्रीत्यादि** सूच पैशून्ये । सूत्र अवमोचने । मूत्र प्रस्रवणे । अट गतौ । ऋ गतौ अश भोजने । ऊर्णुञ् आच्छादने । तत्राद्यानां त्रयाणां चुरादिण्यन्तानामनेकाजर्थे ग्रहणम् । मध्यानां त्वहलाद्यर्थे । ऊर्णोतेरुभयार्थं **धातोरित्युक्तेरि**ति । सोपसर्गस्य धातूपसर्गसमुदायत्वेनाधातुत्वादिभावः[2] । ततश्च प्रादेर्हलादित्वेपि यङ् न । एवं सर्वत्र सोपसर्गाद्यङ् न किं तु यङि जाते पश्चादर्थविशेषेणोपसर्गसंबन्धः उपपद्यत इत्यादि[4] **रुचिशुभ्योरि**ति[3] । रुच दीप्तौ । शुभ शोभने ।

---

१. C drops प्रत्ययः. २. After this—धातूपसर्गसमुदायित्वेन प्रपूर्वादेर्हलादित्वेपि यङ् $B_2$. ३. शुचिभ्यो C; न रुचिशुचिभ्यो यङ् । ४. °विशेषेणोपपनापिद्यत इत्यादि $Dc_3$.

**नित्यं कौटिल्ये गतौ ॥३।१।२३॥**

गत्यर्थात् कौटिल्ये एव यङ् स्यान्न क्रियासमभिहारे ॥[१]

**लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायाम् ॥३।१।२४॥**

एभ्यो धात्वर्थगर्हायामेव[२] यङ् स्यान्न क्रियासमभिहारे ॥ भृशाद्यर्थभावगर्हयोर्मिश्रणेपि लुपादेः[३] स्यादिति केचित् । सन्-यङोरिति द्वित्वम् ।

**गुणो यङ्लुकोः ॥७।४।८२॥**

अभ्यासस्य गुणः स्यात् यङि यङ्लुकि[४] च[५] परे ॥

---

**नित्यं कौटिल्ये** । नित्यग्रहणं विषयानियमार्थमित्याह- कौटिल्य एव यङ् स्यान्न क्रियासमभिहारे इति ।

**लुपसद** । लुप्ऌ छेदे । षद्ऌ विशरणगत्यवसादनेषु । चर गतौ । जप व्यक्तायां वाचि । जभ गात्रविनामे । दह भस्मीकरणे । दंश दशने । गॄ निगरणे । धात्वर्थगर्हायामित्यनेन भावगर्हायामित्यस्यार्थ- माह । भृशाद्यर्थे इति । तथोक्तं मुग्धबोधे । 'गत्यर्थाद्वक्रे प्रादेर्गर्हायां यङ् न पूर्वोक्ते तद्युते तु स्यात्' इति । सन्यङोरिति । सूचि- तस्माद्यङ् । ततो द्वित्वमिति ।

**गुणः** । अभ्यासस्यायं गुणो विधीयते । तेन यद्यपि लुक्शब्दः सामान्यवचनस्तथापि यङ्लुक्येव संप्रत्ययो भवति । न ह्यन्यत्र लुक्य- भ्यासः संभवतीति मत्वाह- **यङ्लुकि चेति** । 'न लुमताङ्गस्य' इति प्रत्ययलक्षणप्रतिषेधात् यङो लुकि कृते गुणो न प्राप्नोतीति लुक्ग्रहणम् ।

---

१. After this—नित्यग्रहणं विषयनियमार्थम् $N_1$. २. धात्वर्थे $D_2$. ३. लुपादेर्यङ् स्यादि° $N_1$. ४. लुकि च परे $B_2$. ५. $D_1$ drops च.

धातुत्वाद्दश लडादयः । ङित्त्वादात्मनेपदम् । [1]णिलोपः । पुनरतिशयेन वा सूचयति सोसूच्यते ।

**यस्य हलः ॥६।४।४९॥**

हलः परस्य यकारस्य लोपः स्यादार्धधातुके ।[2] असूचिष्ट । सोसूचांचक्रे । सोसूत्र्यते । मोमूत्र्यते । द्वितीद्वित्वम् । हलादिशेषः ।

---

धातुत्वादिति । 'सनाद्यन्ता—' इति धातुत्वादित्यभिप्रायः । ङिदिति । 'अनुदात्तङित—' इति । णिलोप इति । 'णेरनिटि' इ

यस्य । 'आदेः परस्य' इति यकारो लभ्यते इत्यभिप्रेत हलः परस्य यकारस्येति । केचित्तु हलन्तायाः प्रकृतेर्विहितस्य लोप इति वदन्ति । तन्मते सूच्यादीनां शेतेः कण्ड्वादेश्च न यलो। सोसूच्यितेत्यादि । संघातग्रहणं किम् । ईर्ष्यिता । हल इति कि लोलूयिता । असोसूचिष्टेति । लुङ् । सिच् । इट् । सोसूचां इति । प्रत्ययान्तत्वादाम् । यलोपः । 'आम्प्रत्ययवत्' इति आत्मनेपदम् । सोसूचिता । सोसूचिषीष्ट । सोसूचिष्यते । असोसूचि तेति यङन्ते सर्वत्र रूपाणि ज्ञेयानि । मोमूत्र्यत इति । मूत्रि अस्माद्यङ् । द्वित्वम् । गुणः । धातुत्वाल्लडादयः । आत्मनेपद णिलोपः । द्वितीयस्य द्वित्वमिति । अट अश आभ्यां यङि द्विती ट्य श्य इत्यस्य द्वित्वमित्यर्थः ।

---

१. दश dropped $D_3$. २. $D_2$, $D_4$, $B_2$ have बोभूयते before ३. °धातुके परे $D_2$. ४. Dropped N. ५. हलादिः शेषः $D_2$, $D_4$; हर शेषः dropped $D_3$. ६. यस्येति संघातग्रहणमेतत् । तत्र 'अलोऽन्त्य इत्यत्र 'अतो लोपः' इत्यनेनैव सिद्धत्वात् । अथवा हल इति पञ्चमी । आदेः परस्य' &c. $Dc_3$.

दीर्घोऽकितः ॥७।४।८३॥

अकितोऽभ्यासस्य दीर्घः स्याद्यङि यङ्लुकि च ॥
टाट्यते । अशाश्यते ।

याङि च ॥७।४।३०॥

अर्तेः संयोगादेश्च ऋतो गुणः स्याद्यङि । यकारपरस्य
ऱस्य न द्वित्वनिषेधः । अरार्यते । ऊर्णोनूयते । घुमास्थागापा-
हातिसां हलि । ततो द्वित्वम् । गुणः । देदीयते । अतो लोपः ।
देदीयिष्ट । देधीयते । मेमीयते । तेष्ठीयते । जेगीयते ।

---

दीर्घः । अकितः किम् । जङ्गम्यते । ननु चात्रापवादत्वात्
;गतोनुनासिकान्तस्य' इति नुकि कृतेन जन्तत्वादेवाभ्यासस्य दीर्घो न
ात् । अतोकित इति व्यर्थम् । एवं तर्हि अकित इत्यनेनैतत् ज्ञाप्यते ।
-यासविकारेषु बाधको न बाध्यान् विधीन् बाधते इति । किमेतस्य
पने प्रयोजनम् । डोढौक्यत इत्यत्र 'दीर्घोकितः' इत्यनेन संध्य-
:स्य ह्रस्वो न बाध्यते । अचीकरदित्यत्र 'दीर्घो लघोः' इत्यनेन
वादित्वं न बाध्यते । मीमांसत इत्यत्र दीर्घेणेत्वम् । अजीगणदित्यत्रे-
न हलादिशेष इति । अटाट्यत इति । दीर्घविधानसामर्थ्यात्
स्त्रः' इति ह्रस्वो न ।

ऊर्णोनूयत इति । नुशब्दस्य द्विस्वम् । रेफस्य न द्वित्वम् ।
न्द्राः—' इति निषेधात् । देदीयते इति । डुदाञ् दाने ।
् दाने । दोवखण्डने । देङ् पालने । एतेषां रूपम् ।
मयोरात्वम् । 'धातोरेकाचः—' इति यङ् । ईत्वम् । द्वित्वम् ।
णो यङ्लुकोः' इति गुणः । दाप्दैपोरघुत्वात् दादायते इत्येव
म् । देधीयत इति । डुधाञ् धारणपोषणयोः । मेमीयत इति ।
माने । माङ् शब्दे । मेङ् प्रणिदाने । इत्येतेषां रूपम् । तेष्ठीयत
। ष्ठा गतिनिवृत्तौ । जेगीयत इति । गाङ् गतौ । गै गाने ।

पेपीयते[1]। जेहीयते। सेषीयते। विभाषा श्वेः। शोशूयते। शेश्वीय
सास्मर्यते। रीङ् ऋतः। चेक्रीयते। सुटो बहिरङ्गत्व
संयोगादित्वेन गुणः। संचेस्क्रीयते।[2]

**सिचो यङि ॥८।३।११२॥**

सिचः सस्य षो न स्याद्यङि ॥ उपसर्गाभ्यासनिमि
षत्वापवादः। निसेसिच्यते। वक्रं व्रजति वाव्रज्यते।

**ग्रो यङि ॥८।२।२०॥**

गॄ इत्यस्य रेफस्य लः स्याद्यङि ॥ गर्हितं गिल

---

**पेपीयत** इति। पा पाने। पातेस्तु पापायते। **जेहीयत** इति। ओहा
त्यागे। हाङस्तु जाहायते[3]। **सेषीयत** इति। षोऽन्तकर्मणि। स
देदीयत इतिवत् प्रक्रिया। **शोशूयत** इति। टुओश्वि गतिवृद्ध्यो
यङ्। संप्रसारणं च। द्वित्वम्। गुणः। 'अकृत्सार्वधातुकयोः'
दीर्घः। **सास्मर्यत** इति। स्मृ आध्याने। 'यङि च' इति गुण
दीर्घोऽकितः' इति दीर्घः। **चेक्रीयत** इति। डुकृञ् करणे। रीङ्
पश्चात् द्वित्वम्। गुणः।[4] **संचेस्क्रीयत** इति। 'संपरि—' इति सु

**सिचः**। षिच क्षरणे। **उपसर्गेति**। 'उपसर्गात् सुनोति—
इति 'स्थादिष्वभ्यासेन च' इति प्राप्तषत्वनिषेध इत्यर्थः। **वाव्र**
इति। व्रज गतौ। 'नित्यं कौटिल्ये गतौ' इति यङ्। 'दीर्घोऽकि
इति दीर्घः।

**ग्रो**। केचित्तु गॄ निगरणे गॄ शब्दे इति द्वयोस्तुदादिक्र्या
सामान्येन ग्रहणमिच्छन्ति। अपरे गिरतेरेव ग्रहणं गृणातेर्हि य

---

१. Before it $D_2$, $D_4$, $B_2$ have लिङ्यङोश्चेति प्यायः पीभावः।
has in addition पेपीयते. २. After it $D_1$ has—परिचेस्क्रीय
उपचेस्क्रीयते।. ३. जाहायते $Dc_3$. ४. 'ऋतश्च—' इति द्वित्वम् I
५. After it—चुत्वम् $Dc_3$.

यते । लोलुप्यते । सासद्यते ।

न कवतेर्यङि ॥७।४।६३॥

वतेर्भौवादिकस्याभ्यासस्य चुत्वं न स्याद्यङि ॥
। कवतेर्निर्देशात् कौतिकुवत्योश्चुत्वमेव । चोकूयते ।

नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम्
४॥

ामभ्यासस्य नीगागमः स्याद्यङ्यङ्लुकोः ॥
इत्युक्तेर्न दीर्घः । न्लोपः । वनीवच्यते । सनीस्रस्यते ।

---

भिधानादित्याच्छन्ति । निजेगिल्यते इति । 'लुपसद—'
'ॠत इत्—' इतीत्वम् । रपरः । द्वित्वम् । चर्त्वम् ।
लुप्यत इति । लुप्लृ छेदने । पूर्ववत् यङ् । गर्हायाम् ।
इति । षद्लृ विशरणगत्यवसादनेषु । दीर्घोऽभ्यासस्य ।
कवतेः । कुङ् शब्दे । कवतेरित्यादि । कवतेरिति शपू-
र्देशाददादितुदाद्योर्ग्रहणं नेत्यभिप्रायः । सर्वे शब्दार्था एव ।

वञ्चु । वञ्चु गतौ । स्रंसुध्वंसुभ्रंसु अवस्रंसने । कस गतौ ।
। पद गतौ । स्कन्दिर् गतिशोषणयोः । न्लोप इति ।
म्—' इति । अथ नीकि कृते ह्रस्वत्वं गुणश्च कस्मान्न
दीर्घोच्चारणसामर्थ्यात् । आदिशब्दात् दनीध्वस्यते ।
। चनीकस्यते । पनीपत्यते । पनीपद्यते । चनीस्कद्यते इति

---

: this $D_1$ has—कवतिरव्यक्ते शब्दे । कुवतिरार्तस्वरे । कौति
ते व्यवस्था । २. Dropped $D_4$. ३. 'ॠत—' इति इत् $Dc_3$.
३.
प्र. कौ. ]

## नुगतोनुनासिकान्तस्य ॥७।४।८५॥

अनुनासिकान्तस्यादन्ताभ्यासस्य नुगागमः स्याद्यङ्यङ्-
ोः । नुंक् पदान्तवद्वाच्यः । अझल्यप्यनुस्वारः । वा पदान्त-
ति वा परसवर्णः । यंयम्यते । यय्ँयम्यते । वंवम्यते ।
म्यते । तंतन्यते । तन्तन्यते । अत इति तपरत्वान्नेह । भाम
धे । बाभाम्यते । ये विभाषेत्यात्वम् । जाजायते ।
न्यते । एवं सनखन । कुत्वम् । जङ्घन्यते ।
तोर्हिंसायां यङि घ्नीभावो वक्तव्यः ॥* जेघ्नीयते ।

---

नुग । अझल्यप्यनुस्वार इति । नुगित्येतदनुस्वारोपलक्षणार्थम् ।
निना ह्यादेशो लक्ष्यते । तेनाझल्यप्यनुस्वारो भवतीत्यर्थः ।
म्यत इत्यादि । यमु उपरमे । टुवमु उद्गिरणे । तनु विस्तारे ।
षेतेषां रूपाणि क्रमात् । अत इति । तपरत्वं हि भूतपूर्वेपि दीर्घे मा
देत्येवमर्थम् । अन्यथा सर्वस्याभ्यासस्य ह्रस्वत्वात् तपरत्वं व्यर्थं
ात् । जाजायत इति । जन जनने । एवं सनखनेति । षणु दाने ।
नु अवदारणे । एतयोरपि जनेरिव रूपाणि ज्ञेयानीत्यर्थः । सासायते
सन्यते । चाखायते । चङ्खन्यते इति । कुत्वमिति । ‘अभ्यासाच्च’
ते । जङ्घन्यत इति । हन हिंसागत्योः ।

---

१. Before it $D_1$ has—आदेशिना आदेशो लक्ष्यते । अनुस्वारो नुका लक्ष्यते ।
र अञ्झल्यप्यनुस्वारः ।. २. C has—नुक् अनुस्वारोपलक्षणत्वेन before it;
₂, $N_1$ have तेन before it. ३. यँय्यम्यते । यंयम्यते । वँव्वम्यते । वंवम्यते ।
न्यते । तन्तन्यते $N_1$, $D_4$. ४. °त्यात्वं वा $N_1$; $D_3$; °त्यात्वं च $D_4$.

**जपजभदहदशभञ्जपशां च ॥७।४।८६॥**

एषामभ्यासस्य नुक् स्यात् यङ्यङ्लुकोः ॥ गर्हितं
ति जञ्जप्यते । पशतिस्तालव्यान्तः सौत्रो गत्यर्थः । कुटिलं
ति पंपश्यते । इत्यादि । लवयान्ताभ्यासस्य नुग्वेति केचित् ।
ल्यते । मंमव्यते । चाचल्यते । मामव्यते । दंदय्यते । दादय्यते ।

**चरफलोश्च ॥७।४।८७॥**

अनयोरभ्यासस्यातो नुक् स्याद्यङ्यङ्लुकोः ॥

---

जप । जप व्यक्तायां वाचि । जभ गात्रविनामे । दह
करणे । दंश दंशने । भञ्ज आमर्दने । पश इति सौत्रो
ः । चतुर्षु 'लुपसदचर—' इति यङ् । भञ्जेः 'धातोरेकाचः—'
। पशेः 'नित्यं कौटिल्ये' इति यङ् । जञ्जप्यत इति ।
जपतीति विग्रहः । आदिशब्दात् जञ्जभ्यते । दन्दह्यते ।
ते । बम्भज्यते । पम्पश्यते । इति ज्ञेयम् । लवयान्तस्येति ।
के मुग्धबोधे । 'लवयस्तु वा' इति । चञ्चल्यत इति । चल
। मव बन्धने । दय रक्षणे ।

चर । चर गत्यर्थः । ञिफला विशरणे । फल निष्पत्तौ ।
पि ग्रहणम् । ननु निष्पत्त्यर्थस्याकार उच्चारणार्थ एव । अनुबन्ध-
नाभावात् । ततश्च निरनुबन्धकग्रहणे न सानुबन्धकस्येति तस्यैव
स्यात् । नैष दोषः । चकारोऽत्र कृतो विशरणार्थस्य समुच्चयार्थः ।

---

गर्हितं जपति dropped $D_3$. २. $D_2$, $D_3$ $D_4$, $B_2$ drop from
°...... पंपश्यते. ३. लवयान्तस्या° $N_1$, $D_3$. ४. चाचल्यते before
ते $D_3$, $D_4$. ६. It is given before चाचल्यते in $N_1$.
ङ्लुकोः $N_1$.

**उत्परस्यातः ॥७।४।८८॥**

चेरफलोः प्रकृतेरकारस्य उत् स्याद्यङ्लुकोः[1] ॥ चञ्चूर्यं
पम्फुल्यते ।

**रीगृदुपधस्य च ॥७।४।९०॥**

धातोर्ऋदुपधस्याभ्यासस्य रीगागमः स्याद्यङि यङ्लुकि

---

उत्पर । अभ्यासाधिकारादभ्यासात्परस्याकारस्योत्वम् । 
प्रकृतेरकारादन्योभ्यासात्परोकारोस्तीति चेतसि कृत्वा परस
सूत्रावयवं प्रकृतेरकारस्येत्यनेन व्याचष्टे । **चञ्चूर्यते** इति
'लुपसद—' इति यङ् । उत्वे कृते 'हलि च' इति दीर्घ
**पम्फुल्यत** इति । 'अभ्यासे चर्च' । ननु च 'अतः' इति किमर्थं
'अलोन्त्यस्य' इति मा भूदिति । 'अतः' इति तर्हि तप
किमर्थम् । इह मा भूदित्येवमर्थम् । फलन्तं प्रयुङ्क्ते फालय
तस्मात् क्विप् । ततः क्विब्वा इत्येके इति पुनः क्विप् । तदन्ताद्य
पाफाल्यते । पाफालीतीति । कथमत्र स्यात् । एकदेशविकृत
नन्यत्वात् । अथ 'उत्' इति तपरत्वं किम् । यावतान्तरत
मात्रिकस्य मात्रिक एव स्यात् । उच्यते । चञ्चूर्यत इत्यत्र लघू
गुणो मा भूदित्येवमर्थम् । न च वाच्यं दीर्घेणैव गुणनिवृत्तिः स्यादि
गुणं प्रति दीर्घस्यासिद्धत्वात् । यदि लक्षणान्तरेण प्राप्नुवन्
निवर्त्स्यते तपरत्वेन तर्हि गुणवद्दीर्घो न स्यात् । नैवम् । तपरत्व
दीर्घत्वमसिद्धम् । अतो नान्यस्य निवृत्तिरस्त्यनेन शक्या कर्तुम् ।
च 'अत उत् सार्वधातुके' इति तपरत्वेन दीर्घनिवृत्तिर्नेति मन्य
'न भकुर्छुराम्' इति करोतेर्दीर्घनिषेधमारभते ।

**रीगृदुपधस्येति** । तपरत्वमुकारे परे यणादेशनिवृत्त्यर्थम् ।
तस्मिन् संदेहः स्यात् किं ऋकारोपधस्य रेफोपधस्येति ।

---

१. चर् फल् एतयोः C. २. यङ्लुकोः $N_1$, $D_2$, $D_3$, $D_4$, P; यङ्यङ
C, $B_2$.

क्षुभ्नादिषु च ॥८।४।३९॥

क्षुभ्नादावाकृतिगणे णत्वं न स्यात् ॥ नरीनृत्यते ।
यते । कृपो रोल इति उभयत्र लत्वम् । चलीक्लृप्यते ।
त इति संयोगार्थं वाच्यम् । वरीवृश्च्यते । परीपृच्छ्यते ।

---

भ्ना । क्षुभ्नादाविति । 'पूर्वपदात् संज्ञायाम्—'
दवग्रहात्' इति वा प्राप्तस्य णत्वस्य प्रतिषेधः । नन्दि नन्दन
येतान्युत्तरपदानि संज्ञायां प्रयोजयन्ति । हरिनन्दी । हरिनन्दनः ।
रम् । नृतेर्यङि । नरीनृत्यते । तृप्नु । तृप्नोति । नर्तन
विशन निवासन अग्नि अनूप एतान्युत्तरपदानि । परिनर्तनः ।
: । 'पूर्वपदात्—' इति प्राप्तिः । परिनन्दनमिति ।
दिसमासेपि' इति । शरनिवेशः । शरनिवासः । शराग्निः ।
। एताः संज्ञाः । आचार्यभोगीनः । आचार्यानी । अविहित-
त्वप्रतिषेधः क्षुभ्नादौ द्रष्टव्यः । अत एवाह—आकृतिगण
आकृत्या गणः आकृतिगणः । क्षुभ्नाद्याकार इत्यर्थः ।
त्रं पाठः । क्षुभ्ना । तृप्नु । नृनमन । नरनगर । नरनृती ।
। गहन । मदन । निवेश । निवास । अग्नि । अनूप ।
गीन । चतुर्हायन । इरिकादीनि वनोत्तरसंज्ञायाम् ।
तिमिर । समीर । कुबेर । हरि । कर्मार । नरीनृत्यत
नृती गात्रविक्षेपे । जरीगृह्यत इति । ग्रह उपादाने ।
—' इति संप्रसारणम् । ऋत्वत इति । ऋदस्यास्तीति
। ऋकारवानित्यर्थः । वरीवृश्च्यते परीपृच्छ्यत इति ।
दने । प्रच्छ ज्ञीप्सायाम् । पूर्ववत् संप्रसारणम् ।[2]

---

ञकानि Dc3. २. After this—सोक्षुभ्यते इति Dc3.

स्वपिस्यमिव्येञां यङि ॥६।१।१९॥

एषां यङि संप्रसारणं स्यात् ॥ सोषुप्यते । सेसि
वेवीयते ।

न वशः ॥६।१।२०॥

वष्टेर्यङि संप्रसारणं न स्यात् ॥ वावश्यते ।

चायः की ॥६।१।२१॥

चायतेः की स्याद्यङि ॥ चेकीयते ।

ई घ्राध्मोः ॥७।४।३१॥

एतयोरी[1] अन्तादेशः स्याद्यङि ॥ जेघ्रीयते । देध्म

अयङ्यि क्ङिति ॥७।४।२२॥

शीङोयङादेशः स्याद्यादौ क्ङिति[2] । ङित्वादन्त
शाशय्यते । अभ्यासस्य ह्रस्वः । ततो गुणः । डोढौक्य

इति यङन्तप्रक्रिया ।

---

स्वपि । ञिष्वप् शये । स्यम शब्दे । व्येञ् संवरणे । व
इत्यादि । संप्रसारणे कृते पश्चात् द्विर्त्वगुणादि ।

न वशः । वावश्यत इति । वश कान्तौ । 'दीर्घ
इति दीर्घः ।

चायः । चायृ पूजानिशामनयोः । दीर्घोच्चारणं यङ्
दीर्घोच्चारणसामर्थ्यादेव 'न लुमता—' इति प्रत्ययलक्षणप्रतिषे

ई घ्रा । जेघ्रीयते । देध्मीयत इति । घ्रा गन्धोपादा
शब्दाग्निसंयोगयोः ।

अयङ् । ङित्वादन्त्यस्येति । 'ङिच्च' इत्यनेन । य
इति । शीङ् स्वप्ने । 'दीर्घोकितः' । डोढौक्यत इति । ढौकृ

---

१. रीदन्तादेशः $D_2$, $D_3$, $B_2$; री आदेशः C. २. क्ङिति परे C, $N_1$
३. °दन्तस्य $D_1$, $D_2$, $D_4$, P, C, $B_1$, $B_2$. ४. Dropped $Dc_3$. ५
गुणादिः । $Dc_3$.

# अथ यङ्लुगन्ताः ।

## यङोचि च ॥२।४।७४॥

यङोचि प्रत्यये लुक् स्यात् । चकारादन्यत्रापि बहुलं

---

यङः । 'अचि' इति प्रत्याहारग्रहणं न भवति । किं तु
त्ययग्रहणमित्यभिप्रेत्याह—**अचि प्रत्यये** इति । यदि प्रत्याहार-
हणमिष्टं स्यात् तर्ह्यणीति वदेत् । न हि यङन्तादन्येचः संभवन्ति ।
दमेवाच्ग्रहणं ज्ञापकं सर्वे धातवः पचाद्यन्तःपातिन इति । ननु
'हुश्नुवोः सार्वधातुके' इत्यत्र **वार्तिककारो** हुश्नुग्रहण-
नर्थकमन्यत्राभावात् । यङ्लुगर्थमिति चेदार्धधातुकत्वात् सिद्धमिति
ङ्लुकं छान्दसमभ्युपगम्य हुश्नुग्रहणं प्रत्याख्यातवान् । स मन्यते
यङोचि च' इत्यत्र 'छन्दसि' इत्यनुवर्तते । तथा **भाष्यकारोपि**
वोक्तवान् । एवं तर्ह्येतत् ज्ञापयति भाषायामपि यङ्लुगस्तीति ।
भेदीति चेच्छिदीति बोभवीतीत्यादि सिद्धं भवतीति । अतस्तन्मते-
त्र 'छन्दसि' इत्यनुवर्तते । तथा चिरन्तनाः कवयः प्रायो यङ्लुकं
प्रयुक्तवन्तः । एवं स्थितेत्रापि 'छन्दसि' इत्याचार्यैः किमिति नानु-
र्तितम् । उच्यते । **काशिकाकारस्तु** 'छन्दसि' इति नानुवर्तत इत्युक्त-
न् । तदभिप्रायेण नानुवर्तितम् । तस्य चाभिप्रायः **पदमञ्जर्यामुक्तः** ।
**तकारस्तु** मन्यते यदि ज्ञापकेनापि तावद् भाषायामपि यङ्लुक्-
ोगो भवति हन्तैवमत्रैव छन्दोग्रहणं मानुवृतत् । प्रयोगस्तु स्वाभिधानं
व्यवस्थास्यत इतीति । अत एतत् निश्चितं प्रयोगानुसारेणैव यङ्लुक्
ाज्यः । अत एवाग्रे वक्ष्यति—इत्यादि प्रयोगानुसारात् ज्ञेयमिति ।
एवास्माभिरपि आचार्यैः प्रयुक्ता एव प्रयोगा व्याख्या-
नान्ये कल्प्यन्त इति ज्ञेयम् । ननु च यङ्लुकि सति 'सन्यङोः'

---

. °च्प्रत्यये C, P, N. २. For नहि यदि Dc$_1$, Dc$_4$. ३. तथा
Dc$_3$. ४. For न यत् Dc$_1$, Dc$_4$ ५. अत एव तस्मिन्निश्चितं Dc$_3$.

लुक् स्यात्। अनङ्गकार्यत्वान्न लुमतेति द्वित्वनिषेधः। यङ् सत्यन्तरङ्गत्वात् द्वित्वेऽभ्यासकार्ये च कृते धातुत्वात् तिबा ततस्तिङाश्रितं कार्यं ज्ञेयम्।

**चर्करीतं च॥**

चर्करीतमिति यङ्लुगन्तं तत् परस्मैपादि अदा ज्ञेयम्। शपो लुक्।

**यङो वा॥७।३।९४॥**

यङ्लुगन्तात् परस्य हलादेः पितः सार्वधातु ईडागमो वा स्यात्॥ भूसुवोरिति गुणाप्राप्तौ बोभूतु तेतिक्त

---

इति द्वित्वं न स्यात्। प्रत्ययलक्षणत्वस्य 'न लुमता—' निषिद्धत्वादित्याशङ्क्याह—**अनङ्गे**ति। द्वित्वं ह्यङ्गस्येत्यधि नोक्तम्। अतः 'न लुमता—' इति निषेधो न भवति। अङ्गव स्यैव तत्र निषिद्धत्वादित्यभिप्रायः। **यङ्लुकि सती**त्यादि। अ बहिरङ्गमन्तरङ्गे इति परिभाषया।

'चर्करीतं परस्मैपदम्' इत्यदादौ धातुसूत्रं तदेकदेशेन पठ **चर्करीतं चे**ति। तद् व्याकरोति—**चर्करीतमिति यङ्लुग** मित्यनेन। पूर्वाचार्यसंज्ञेयमिति निदर्शितम्। **शपो लुगि** अदादित्वात्।

**यङः**। यङन्तात् परतः शपो विहितत्वात् हलादेः पितः स धातुकस्यासंभवाद् यङ्लुगन्त एव भवतीत्यभिप्रेत्याह—**यङ्लुग** दिति। **बोभूतु** इति। 'बोभूतु तेतिक्तेलर्षि—' इत्यादि सूत्रे ब

---

१. लुक् स्यात् dropped N. २. द्वित्वादेर्न निषेधः $B_2$. ३. $D_1$ d कृते. ४. तिबादि N, $D_4$; तिबादयः $D_3$. ५. अत° $B_2$. ६. Dro $D_3$. ७. परस्मैपदमदा° C. ८. तेन शपो लुक् $D_4$.

छन्दसि निपाताद्[1] भाषायां यङ्लुकि गुणः ॥ बोभवीति । बोभोति । बोभूतः । बोभुवति । बोभूयात् । बोभूहि । अबोभोत् । अबोभूताम् । अबोभवुः ।[2] अबोभूत् । अबोभूताम् । अबोभवुः । बोभवांचकार । कैश्चिदाम् नेष्यते । धातुनिर्देशे[4]

---

इति गुणरहितस्य छन्दसि निपाताद् भाषायां गुण इत्यर्थः । बोभवीति । भू सत्तायामस्माद्धातोः 'एकाचः—' इति यङ् । यङो लुक् । 'सन्यङोः' इति द्वित्वम् । ह्रस्वः । 'अभ्यासे चर्च' । 'गुणो यङ्लुकोः' । इति । 'सनाद्यन्ता धातवः' इति धातुसंज्ञा । तिबादि । शप् । शपो लुक् । ईट् । गुणावादेशौ । बोभोतीति । ईडभावे रूपम् । बोभूत इति । 'सार्वधातुकमपित्' । इति ङित्त्वाद्गुणाभावः । बोभुवतीति । 'अदभ्यस्तात्' इत्यदादेशः । 'अचि श्नुधातु—' इत्युवङ् । बोभूयादिति । लिङ् । यासुट् । बोभूहीति । 'सेर्ह्यपिच्च' । इत्यपित्त्वान्न गुणः । अबोभवुरिति । लङ् । 'सिजभ्यस्त—' इति जुस् । 'जुसि च' इति गुणः । अबोभूदिति । लुङ् । 'गातिस्था—' इति सिचो लुक् । 'भूसुवोः—' इति गुणनिषेधः । ननु ज्ञापकाद् गुणः स्यात् । मैवम् । ज्ञापकं तु चतुर्ष्वेव लकारेषु लुग्विकरणवत्सु सजातीयेषु नान्यत्र । अबोभूतामिति । तसस्ताम् । अबोभवुरिति । जुस्गुणौ । बोभवांचकारेति । यङो लुक् । द्वित्वादि । धातुत्वम् । लिट् । प्रत्ययान्तत्वादाम् । गुणः । ननु चात्र 'न धातु—' इति गुणनिषेधेन भाव्यम् । मैवं वोचः । धात्वंशलोपनिमित्ते आर्धधातुके गुणनिषेधः । न चायं यङ्लुक् आर्धधातुकं निमित्तीकृत्य । किं तर्हि । अनिमित्तकः । तस्माद् गुणो भवत्येव । कैश्चिदामिति । तथा च न्यासकृता पदमञ्जरीकृता च बोभाव बोभूवतुरित्या-

---

१. निपातनाद् $D_3$. २. अबोभवीत् । अबोभोत् in place of it in $D_2$, $D_4$ $B_2$. ३. After this $D_2$ and $B_2$ $D_4$, have—लुङि अबोभूत् । सार्वधातुक एव गुणाभावश्छन्दसि निपातितस्तेन (आर्धधातुके तु उभयथापि गुणाभावः वे भाषायां च तेनात्र न गुणः $B_2$) नात्र (अत्र न $D_4$) गुणः । आर्धधातुकस्य सिचो लुक्त्वेऽपि तद्विषयत्वस्य सत्त्वात् ।; P has अबोभवुः । अबोभोत् fo अबोभूत्···अबोभवुः. ४. C drops from धातु°··· लुक्. ५. 'नेड्गुणौ $Dc$; ६. Dropped $Dc_3$.

यङ्लुगन्तस्यापि ग्रहणात् भुवो वुगिति वुक् । बोभूव । बे
धातुग्रहणोक्तं यङ्लुकि वेति केचित् । बोभाव । बो
वनीवञ्चीति । वनीवङ्क्ति । वनीवक्तः ।[३] जङ्गमीति । ज
जङ्गतः । उपधालोपः ।[४] जङ्गमाति । जङ्गमति ॥

---

द्युदाहृतम् । बोभूवेति । वार्तिककारमते नित्यत्वाद्वुक्
बाधते । तन्मतमाश्रित्यैतदुदाहृतम् । न्यासकारादिमते तु
बोभूवतुः । बोभूवुः । बोभूविथेति भाष्यम् । धातुग्रहणोक्त
तथोक्तं मुग्धबोधे । 'धुंग्रहणोक्तं तु वा स्यात्' इति । बोभ
'अचो ञ्णिति' इति वृद्धिः । ननु चात्र 'इन्धिभवतिभ्यां च
कित्त्वं स्यात् । ततश्च वृद्धिर्न स्यात् । मैवम् । श्तिपा निर्देशा
यङ्लुकि प्राप्तिरेव नास्ति । तथोक्तम् ।

श्तिपा शपानुबन्धेन निर्दिष्टं यद् गणेन च ।

यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥ इति ।

वनीवञ्चीतीति । वञ्चु गतौ । 'नित्यं कौटिल्ये' इति
'नीग्वञ्चु—' इति नीक् । 'यङो वा' इतीट् । व
इति । 'अनिदिताम्—' इति न्लोपः । 'चोः कुः' । वनीव
वनीवच्यात् । वनीवञ्चीतु । वनीवक्तु । अवनीवञ्चीत् ।
वन् । अवनीवञ्चीत् । अवनीवञ्चिष्टाम् । वनीवञ्चांच
वनीवञ्चिता । वनीवञ्च्यात् । वनीवञ्चिष्यति । अवनीवञ्चि
एवं सर्वत्र रूपाणि ज्ञेयानि । विशेषो वक्ष्यति । गम्लृ
पूर्ववद्यङ् । यङो लुक् । 'नुगतोनुनासिकान्तस्य' इति
ईट् । जङ्गत इति । 'अनुदात्तोपदेश—' इत्यनुनासिकलो
उपधालोप इति । 'गमहन—' इति । जङ्गमती

---

१. C drops बोभाव । बोभूवतुः २. बोभुवतुः. $D_3$ ; बोभुवतुः । ब
$D_4$. ३. After it—अवभ्यस्तादिति । वनीवचाति $B_2$, $D_4$. ४. उपधाया
$D_1$ ; उपधालोपश्च C. ५. After it—जङ्गमाति $D_2$, P ; धातुग्रहणोक्त
लुकि विकल्पतः । जङ्गमाति । जङ्गमाति $B_2$. ६. बाधेत $Dc_3$. ७
dropped $Dc_3$. ८. भूधातुग्रहणो° $Dc_3$.

**म्वोश्च ॥८।२।६५॥**

मान्तस्य धातोर्नः स्यान्मवयोः परतः ॥ जङ्गन्मि जङ्गन्वः । जङ्घनीति । जङ्घन्ति । जङ्घतः ।[२] जङ्घ्नति जङ्घनति । 'नाभ्यस्तस्याचि' इति न गुणः । चञ्चुरीति 'उत्परस्यातः' इति तपरत्वान्न गुणः । दीर्घत्वं स्यादेव चञ्चूर्ति । चञ्चूर्तः । धातुग्रहणोक्तं यङ्लुकि वेति केचित्[३] चङ्खन्ति[४] । चङ्खनीति । चङ्खातः । चङ्खन्तः । चङ्ख्नति चङ्खनति । जञ्जन्ति । जञ्जनीति । जञ्जातः । जञ्जन्तः । जञ्जनति

---

धातुग्रहणोक्तस्य यङ्लुकि विकल्पात् । जङ्घन्तीति । ह हिंसागत्योः । 'धातोरेकाचः—' इति यङ् । लुक् । नुक् पूर्ववत् 'अभ्यासाच्च' इति कुत्वम् । अनुस्वारपरसवर्णौ । जङ्घत इति अनुनासिकलोपः । जङ्घ्नति । जङ्घनतीति । 'अदभ्यस्तात्' 'गमहन—' इत्युपधालोपः । धातुग्रहणोक्तं वेति केचित् । 'हन्तेर्जः' इत्यत्र श्तिपा निर्देशात् जादेशो न । जङ्घहि । चञ्चुरीति । चर गतिभक्षणयोः । 'चरफलोश्च' इति नुक् । 'उत्परस्यातः' इत्युत् तपरत्वादिति । एतच्च 'उत्परस्यातः' इत्यस्मिन्नेव सूत्रे विवृतम् चङ्खातः । चङ्खन्त इति । खनु अवदारणे । नुक् 'जनसनखनाम्' इत्याकारः । स च वा केषांचिन्मते । चङ्ख्नतीति 'गमहन—' इत्युपधालोपः । जञ्जात इति । जन जनने । पूर्ववदात्वम्

---

१. धातोर्मस्य नः $B_2$. २. After it—जङ्घतः $B_1$, $B_2$, ( ३. धातु°...केचित् dropped $D_3$. ४. $B_2$ drops all from चङ्खनि to वोद्योति and has only देद्योति after केचित्; चङ्खातः । चङ्खन्तः चङ्ख्नति । चङ्खानाति । जञ्जातः । जञ्जन्तः । जञ्जति । जञ्जनीति यङ्लुकि &c. $D_3$; चङ्खातः । चङ्खन्तः । चङ्ख्नन्ति । चङ्खनाति । जञ्जात जञ्जन्तः । जञ्जति । जञ्जनाति । यङ्लुकि झलि च्छ्वोः शूठौ वकारे च वे केचित् । वोद्योति $D_4$.

जञ्ज्ञति । यङ्लुकि झलि वे च च्छ्वोः शूठौ वेति केचित् । देद्यो
'लोपो व्योर्वलि' । देदेति । देदिवीति । देद्यूतः । देदित
देद्यूथः । देदिथः । मिपोनुनासिकत्वाद् ऊठ् । गुणः । देद्यो
देद्यूवः । देदिवः । विच्छ । वेविच्छीति । वेवेष्टि । वेविश्वः[4] । वेविद्व
'नाभ्यस्तस्य' इत्यनुवृत्तेरुतो वृद्धिर्न । योयोति । योयवी
नोनोति । नोनवीति[6] । जाहाति[7] । जाहेति । जहात्यभ्यास

---

जञ्ज्ञतीति । उपधालोपः । चुत्वम् । जञ्ज्ञोर्ज्ञः । यङ्लुकीत्या
छकारवकारयोः शकारोठौ वा भवतो यङ्लुकि झलि वकारे च प
भवत इति केचिन्मन्वते । तथोक्तं मुग्धबोधे । 'च्छ्वोः शूटाव
असुकौ यङ्लुक् वोस्तु वा' इति । देद्योतीति । दिवु क्रीडायाम्
'गुणो यङ्लुकोः' । देदेतीति । वलोपः । गुणः । देद्यूत इति । 'च
शूड्—' इत्यूठ् । यण् । देदित इति । 'लोपो व्योर्व
इति वलोपः । गुणः । 'सार्वधातुक—' इति । देद्यूवः । देदिव
केषांचिन्मते वोठ् । विच्छेति । विच्छ गतौ । वेविच्छीतीति । तुव
वेवेष्टीति । 'व्रश्च—' इति षः । ष्टुत्वम् । गुणः । वेवेश्मीति । पूर्व
'च्छ्वोः शूठ्—' इति शः । वेविश्व इति । वकारे चेति श
नाभ्यस्तस्येत्यादि । 'उतो वृद्धिः—' इत्यत्रानुवर्तितत्वेनेत्यर्थः । योयं
तीति । यु मिश्रणे । नोनोतीति । णु स्तुतौ । जाहेतीति । ओहा
त्यागे । 'दीर्घोकितः' इति दीर्घः । ईट् । आद्गुणः । जहात्यभ्या
स्येति । ओहाङिति किच्चादकित इत्युच्यमानो दीर्घो नेति तेषामभिप्राय

---

१. देद्यूतः $D_2$ ; before it—देद्योति $D_3$. २. देद्यूथः $D_1$, $B_2$ ;
and $D_4$ drop देद्यूथः and देदिथः and देद्योमि and has मिपो° aft
देदिवः. ३. देद्योमि । देद्यूवः $D_2$, $D_4$ ; देद्योमि । देदिवीमि । देद्यूवः ]
(also देदिवीमि $D_4$). ४. Before it—वेवेश्मि $D_4$. ५. $D_1$, $D_3$ drop
६. नोनवीति dropped $D_1$, $D_3$, $D_4$, $B_2$. ७. $D_3$ drops it and
and C have 'घुमास्था—' इति पक्षे जाहेति before it ; इट्पक्षे जाहेति । अन्य
जाहाति । जहात्यभ्यास° $B_2$, $D_4$ ; $D_2$ has 'यङो वा' इति ईट्पक्षे जाहे
अन्यत्र जाहति for जाहाति । जाहेति. ८. जञ्ज्ञतीति $Dc_3$. ९. न्मन्यन्ते D

र्घ इति केचित्। जेहाति। जहेति। जाहीतः। जाहितः।
जभदहदश—' इति नलोपिनो ग्रहणाद् यङ्लुकि नलोपः।[4]
ोति। लोपो वेति केचित्। दंदंशीति। दंदंष्टि। दंदंष्टि।[5]
स्यमीत्युत्वपक्षे सोषोप्ति।[7] अन्यत्र सास्वप्ति।[8]

**न धातुलोप आर्धधातुके ॥१।१।४॥**

धात्वंशलोपनिमित्ते आर्धधातुके परे तन्निमित्ते गुणवृद्धी

---

तु ककारो 'हश्च व्रीहिकालयोः' इत्यत्र हाङ्हाकोः सामान्य-
र्थः। **जाहीत** इति। 'ई हल्यघोः' इति ईः। **जाहित** इति।
तेश्च' इति इत्। **दंदशीतीति**। दंश दशने। 'जपजभ—'
ुक्। **न्लोप** इति। तथोक्तं मुग्धबोधे। 'दंशो न्लोपो वा'
**दंदष्टीति**। ईडभावे 'व्रश्च—' इति षः। **स्वपिस्यमीति**।
क्षे इति। धातुग्रहणोक्तं केषांचिन्मते विकल्पेनेति उत्वपक्षे
त्मम्। **सोषोप्तीति**। ञिष्वप् शये। संप्रसारणम्। द्वित्वगुणौ।
**प्तीति**। 'दीर्घोकितः' इति दीर्घः।

**न धातुलोप** इति। सर्वस्य धातोर्लोपे कृते यत्र
द्धी स्तः तदार्धधातुकं न संभवत्येव। तत्र किं
न। तस्मान्निषेधसामर्थ्याद् धात्वेकदेशे धातुशब्दो वर्तते इति
ह—**धात्वंशेति**। धात्वंशस्य लोपो यस्तस्य निमित्तं
धातुकं तस्मिन् परे तन्निमित्ते आर्धधातुकनिमित्ते गुणवृद्धी

---

D$_1$ has जहेति before it. २. Dropped D$_4$. ३. Dropped
४. न्लो° D$_3$, D$_4$. ५. न्लोपः B$_2$, D$_3$, D$_4$. ६. दंदंशीति
D$_4$. ७. After it—सोषोपीति B$_2$. ८. After it—सास्वपीति B$_2$.
कल्पोनेति Dc$_1$.

इको न स्तः ॥ बेभिदिता । मरीमृजिता ॥ आर्धधातुके किम् । बेभेत्ति । मरीमार्ष्टि ।

**रुग्रिकौ च लुकि ॥७।४।९१॥**

ऋदुपधस्य च धातोरभ्यासस्य रुक् रिक् रीक् एते आगमाः स्युः यङ्लुकि ॥ वर्वृतीति । वरिवृतीति । वरीवृतीति वर्वर्ति । वरिवर्ति । वरीवर्ति ।

---

न स्त इत्यर्थः । **बेभिदितेति** । भिदृ विदारणे । यङ् । द्वित्वम् । गुणोऽभ्यासस्य । लुट् । तासिः । तासिं निमित्तीकृत्य 'यस्य हलः' इति यकारस्य लोपः । तमेव निमित्तीकृत्य प्राप्तो गुणो निषिध्यते । **मरीमृजितेति** मृजूष् शुद्धौ । 'रीगृदुपधस्य' इति रीक् । 'मृजेर्वृद्धिः' इति प्राप्त वृद्धिर्न । **आर्धधातुके किमित्यादि** । ननु बेभेत्ति मरीमार्ष्टीत्येते ह्यचङ्गविकले प्रत्युदाहरणे । तथा हि यथार्धधातुकनिमित्ते गुणवृद्धी न एवं लोपोपि नेति । मैवम् । सत्यार्धधातुकग्रहे अन्यपदार्थत्वेन तस्य ग्रहणात् धातुलोप इति बहुव्रीहिः स्यात् । असति तु ह्यार्धधातुकग्रहणे अविशेषितत्वात् लोपस्य लोपमात्रे प्रतिषेधः स्यात् एव । **काशिकाकारैस्तु न्यासकारमतेनैतत् प्रत्युदाहृतम्** । **पदमञ्जरीकारमते** ह् असत्यप्यार्धधातुकग्रहणे धातोर्लोपो यस्मिन्निति बहुव्रीहिः । तन्मते तुर्वी मूर्च्छा । तोतोर्ति मोमोर्ति 'राल्लोपः' इति च्छ्वोर्लोपस्य गुणस्य चैकनिमित्तत्वान्निषेधः स्यादिति प्रत्युदाहरणे । धातुग्रहणं किम् । लूञ् लविता । प्रागेव धातुसंज्ञाया भवन्ननुबन्धलोपो धातुलोपो न । इक इति किम् । अभाजि । रागः ।

**रुग्रिकौ** । रुगागमे उकार उच्चारणार्थः । **वर्वृतीतीत्यादि** वृतु वर्तने । 'यङो वा' इतीट् वा । मर्मृज्यते मर्मृज्यमाना स ईश् चोपसंख्यानम् ।

---

१. D₁ drops it. २. D₁ drops it. ३. Dropped B₂. ४. यस्य D

ऋतश्च ॥७।४।९२॥

ऋदन्तस्य धातोरपि तथा ॥ चर्करीति[1] । चरिकरीति ।
ति । चर्कर्ति । चरिकर्ति[2] । चरीकर्ति ॥ ऋतश्चेति
ऋदन्तस्य न । कॄ[4] । चाकर्ति । चाकरीति[5] । गुणवद्
निषेधो ज्ञेयः । मर्मृजीति । ग्रह । जर्गृहीति[6] । ढत्वधत्व-

---

नः । तथेति । अभ्यासस्य रुक्रिक्रीगागमा यङ्लुकि
ः । चर्करीतीत्यादि । डुकृञ् करणे । 'ऋतश्च' इति
दन्तस्य नेति । 'ऋतश्च' इत्यत्र हि द्वयं प्रकृतम् ।
सश्च । ऋत इति विशेषणं चोपात्तम् । तथापि तदङ्गस्यैव
। कुतः । तपरत्वसामर्थ्यात् । अभ्यासस्य हि सर्वत्र ह्रस्वो
अत एव ऋदन्तस्य धातोरिति व्याख्यातवान् । तस्मात्
ाद्दृदन्तस्य नेत्यभिप्रायः । तथोक्तं वार्तिककृता ।

'किरतिं चर्करीतान्तं पचतीत्यत्र यो नयेत् ।
प्राप्तिज्ञं तमहं मन्ये प्रारब्धस्तेन संग्रहः' ॥ इति ।

किरतिं पचतीत्यत्र यो नयेत् पचतिना तुल्यरूपाणि
् पचतिवत् रुगादिकमकृत्वेत्यर्थः । तमहं प्राप्तिज्ञं रुगादीनां
मन्ये । तेन साधुशब्दराशेः संग्रहः प्रारब्ध इति वार्तिकार्थः ।
कॄ विक्षेपे । चाकर्तीति । द्वित्वम् । 'उरत्' । 'दीर्घोकितः' ।
द्वेरिति । एतच्च यङ्लुकश्छान्दसत्वात् छन्दसि च सर्वे
ाभिचरन्तीति हेतोर्लभ्यते । मर्मृजीतीति । मृजूष् शुद्धौ ।
ति । ग्रह उपादाने । द्वित्वम् । 'दीर्घोकितः' । चुत्वम् ।
। ग्रह अस्माद्यङ्लुकि द्वित्वादौ कृते ईडभावे जग्रह् ति

---

तधातो° D₂; ऋदन्ताद्धातो° C. २. This and the next two
opped $D_4$. ३. This and the next form dropped $D_3$.
ed $D_3$. ५. $D_1$, $D_3$ drop it; after it $D_2$, $D_4$, $B_2$ have
। चाक्रिरति. ६. जाग्रहीति $D_2$.

ष्टुत्वढलोपाः । जर्गृढि । केचिद्यङ्निमित्तं संप्रसार
नेच्छन्ति । जाग्रहीति । ढत्वधत्वष्टुत्वढलोपदीर्घाः जाग्रादि
बलीयस्त्वादादौ संप्रसारणे कृते रुग्रिगादि । जर्गृढः
जरिगृढः । जरीगृढः । जर्गृहीति । गृधु । जर्गृधीति
जर्गर्धि । अजर्गृधीत् । गुणः । हल्ङ्यादिलोपः

---

इति स्थिते 'हो ढः' इति ढत्वम् । 'झषस्तथोः—' इति धत्व
'ष्टुना ष्टुः' इति ष्टुत्वम् । 'ढो ढे लोपः' इति ढलोपः । 'ढ्रलोपे—
इति दीर्घ इत्यर्थः । बलीयस्त्वादित्यादि । ग्रह तस् इति सि
'सार्वधातुकमपित्' इति ङित्त्वात् 'ग्रहिज्या—' इति संप्रसा
प्राप्नोति । 'सन्यङोः' इति द्वित्वं च । तत्र संप्रसारणं तदाश्रयं
कार्यं बलवदित्यादौ संप्रसारणमित्यर्थः । ततो द्वित्वम् । 'उरत्
चुत्वम् । रुग्रिगादीति । जगृह इति स्थिते ऋदुपधत्वाद्रुग्रिग्रीक
ततोढत्वधत्वष्टुत्वढलोपाः । जर्गृहतीति । 'अदभ्यस्तात्' ।
पूर्ववत् ढत्वादिवर्जम् । गृधु इति । गृधु अभिकाङ्क्षायाम्
अजर्गृधीदिति । लङ् । ईट् । गुण इत्यादि । इडभावे अजर्गृध्
इति स्थिते 'पुगन्त—' इति गुणः । रपरः । 'हल्ङ्याब्—' इति लो

---

१. °ढलोपदीर्घाः D1, P. २. जाग्राढि D, P, जर्गढि B2, N1, D3, D4; drops from केचित्...जाग्राढि. ३. जरिगृहति D3. after this D2 —षढोः कः सि इति कस्यासिद्धत्वात् भष्भावः । जर्घेक्षि । ४. Before i ढत्वधत्वष्टुत्वढलोपदीर्घाः B2. ५. बलीयस्त्वादादौ संप्रसारणं ततो द्वित्वं रिगादि P, N1; संप्रसारणस्य बलीयस्त्वादादौ संप्रसारणे कृते ततो द्वित्व रुक्रिगादयः B2. ६. जर्गृहीते । षढोः कः सीत्यस्यासिद्धत्वात् भष्भाव जर्घक्षि । लङ् स्तिप्सिपोः । अजर्घट् । B2, D4. ७. गृधु अभिकाङ्क्षायाम् ८. जर्गृधाति N1. ९. अजर्गृधात् N1 ; अजर्गर्धीत् । D3. १०. सलोपः I

भावः । जश्त्वचर्त्वे । अजर्घत् । अजर्गृद्धाम् । अजर्गृधुः ।
ति वा रुत्वम् । रो रि । ढ्रलोपे दीर्घः । अजर्घाः ।
र्घत् । अजर्गृद्धम् । इत्यादिप्रयोगानुसारात् ज्ञेयम् ।

इति यँङ्लुक्प्रक्रिया ॥

---

क्रात्तो बशः—' इति भष्भावः । 'झलां जशोऽन्ते' इति
त्वम् । 'वावसाने' । चर्त्वमित्यर्थः । दश्चेत्यादि । सिपि जर्घत् स्
स्थिते रुत्वम् । 'रो रि' इति पूर्वरलोपः । दीर्घः । विसर्गः ।
र्घत् इति । रुत्वाभावे ।

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बा जनयदतुलं विठ्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेऽस्मिन् प्रसादे निरगमदमला प्रक्रियेयं यङन्ता ॥

इति यङ्लुगन्तप्रक्रिया ॥

---

भष् C. २. अजर्घर्त् $N_1$, $D_4$. ३. ढ्रलोपे पूर्वस्य दीर्घोऽणः C. ४. अजर्घर्त् $D_4$, $N_1$; dropped $D_3$. ६. अजर्घृद्धम् $N_1$ ; dropped $D_3$.
योगवशात् $D_3$. ७. यङ्लुकि प्रक्रिया $D_3$, $D_4$.

# अथ सुब्धातुप्रक्रिया ।

## सुप आत्मनः क्यच् ॥३।१।८॥

एषितुरात्मसंबन्धिनः इषिकर्मणः सुबन्तादिच्छायां प्रत्ययो वा स्यात् ॥ सुपो धातुप्रातिपदिकयोरिति सुपो लुक् ।

## क्यचि च ॥७।४।३३॥

क्यचि च परे अवर्णस्य ई आदेशः स्यात् ॥ घ लुडादयः । आत्मनः पुत्रमिच्छति पुत्रीयति ॥

---

अथ सुब्धातुप्रक्रिया । सुपः । एषितुरित्यादि । आ परप्रतियोगिवचनः । एषितुरेवात्मसंबन्धितया इषिकर्मभूतं यत् तस्मादिच्छायामर्थे क्यच्प्रत्ययो भवतीत्यर्थः । सुप्ग्रहणं वाक्यान्मा भूत् । महान्तं पुत्रमिच्छति । न धातुप्रातिपदिकव्या धातोर्हि सन् बाधकः । प्रातिपदिकात् सुबन्ताच्च जाते भावाच्च । कथं च सुब्ग्रहणाद्वाक्यनिवृत्तिः । उच्यते । सुब् विहितस्तस्माद्भवति । न च सुब् वाक्याद्विहितः तु तदवयवात् । आत्मनः किम् । राज्ञः पुत्रमिच्छति । क्यचः 'नः क्ये' इति सामान्यग्रहणार्थः । चकारस्तदविघ अन्यथैकेद्ग्रहणे अनेकेतौ क्यङ्क्यषौ न गृह्येयाताम् ।

क्यचि । 'अकृत्सार्वधातुकयोः' इति दीर्घत्वस्य धातुत्वादिति । 'सनाद्यन्ताः—' इति । पुत्रीयतीति । 'वर्त शप् । तिबादि । पुत्रीयेत् । पुत्रीयतु । अपुत्रीयीत् । पुत्र पुत्रीयिता । पुत्रीय्यात् । पुत्रीयिष्यति । अपुत्री

---

१. $D_1$ drops it. २. धातुप्रातिपदिकयोरिति $D_3$. ३. ईदादे स्यात् $D_3$. ४. °योगित्व° $Dc_3$. ५. वा $Dc_3$. ६. °द्वाधकानि

वान्तो यि प्रत्यये। गव्यति नाव्यति। त्वद्यति। मद्यति।
ते। अस्मद्यति। हलि च। गीर्यति। दीव्यति।
ति। रीङ् ऋतः। कर्त्रीयति। क्यच्व्योश्च।[1] गार्गीयति।

---

त्र सुब्धातुषु रूपाणि ज्ञेयानि। विशेषो वक्ष्यते।
व्यतीति। गामात्मन इच्छतीति। नाव्यतीति।
छति। त्वद्यति। मद्यतीति। त्वामिच्छति।
ति। 'प्रत्ययोत्तरपदयोश्च' इतित्वन्मदादेशौ। युष्मद्यति।
तीति। युवां युष्मान् वेच्छति। आवामस्मान् वेच्छति।
ति। गिरमिच्छति दिवमिच्छतीत्यत्रार्थे गिर् य दिव्
स्थिते 'हलि च' इति सूत्रेण दीर्घ इत्यर्थः। ननु च तत्र
इत्यनुवर्तते। तत् कथमत्र दीर्घः। उच्यते। गॄ निगरणे।
क्विप्। क्विबन्तस्य च धातुत्वापरित्यागाद्गिर्शब्दो धातुरेव।
दिक्विपि कृते दिव्शब्दोपि धातुरेव। एवं चेत् कथं
यां वृत्तौ 'हलि च' इत्यत्रोक्तं धातोरित्येव दिवमिच्छ-
षोप्यदोषः। उणादीनामव्युत्पत्तिपक्षमाश्रित्योक्तं वृत्तिकृतेति
आचार्यवर्यैस्तु व्युत्पत्तिपक्षमाश्रित्योक्तमिति ज्ञेयम्।
ति। अमुमात्मन इच्छति। सान्तत्वात् 'अदसोसेः' इति
न। कर्त्रीयति। आत्मनः कर्तारमिच्छति। गार्गीयति।
ोत्रापत्यं गार्ग्यः। 'गर्गादिभ्यो यञ्'। ततः आत्मनो
छतीत्यर्थे क्यच्। 'क्यच्व्योश्च' इत्यपत्ययकारलोपः।
च' इतीकारः।

---

ले च' इति दीर्घः। D2. २. After it—इति तद्धितलोपः N1.

**नः क्ये ॥१।४।१५॥**

क्यचि क्यङि क्यषि परे नान्तमेव पदसंज्ञं स्यात् नान्यत् । नलोपः । राजीयति । नान्तमेवेति नियमान्नेह वाच्यति । अकृतसार्वधातुकेति दीर्घः । कवीयति ।

**क्यस्य विभाषा ॥६।४।५०॥**

हलः परेषां क्यच् क्यङ् क्यषां लोपो वा स्या आर्धधातुके ॥ समिधिता । समिध्यिता । मान्ताव्ययेभ्यः क नेष्टः । किमिच्छति । उच्चैरिच्छति ।

---

नः क्ये । ननु च सुबन्तादेव क्यजादयो विधीयन्ते । प्रत्ययलक्षणेन सुबन्तं पदमित्येव सिद्धम् । सत्यम् । किं तु नियमा सिद्धे सत्यारम्भो नियमार्थः नान्तमेवेति । ननु नान्तं क्य विपरीतनियमः किं न स्यात् । उच्यते । 'न ङिसम्बुद्ध्योः' निषेधात् । विपरीतनियमे हि ङिसम्बुद्ध्योः पदसंज्ञाया अभा नलोपो न स्यात् तत् किं निषेधेनेत्येतत् सर्वं मनसि कृ **नान्तमेव पदसंज्ञं स्यादिति** । **नलोप** इति । 'नलोपः प्रातिपा न्तस्य' इति । **राजीयतीति** । राजानमिच्छति । 'क्यचि च' इती **वाच्यति** । वाचमिच्छति । अपदत्वान्न कुत्वम् । **कवीय** कविमिच्छति ।

**क्यस्य** । **समिधितेति** । समिधमात्मन इच्छति । **य्येति** । मान्ताश्चाव्ययानि च तेभ्यः क्यच् नेष्ट इत्यर्थः ।

---

१. च परे D3. २. °धातुके परे । कवीयति D2 ; °कयोर्दीर्घः । D3. लोपो D3.

अशनायोदन्यधनायाबुभुक्षापिपासागर्धेषु ॥
४।३४॥

अशनायादयः क्रमात् बुभुक्षाद्यर्थेषु[1] निपात्यन्ते क्यचि ॥
नायति । उदन्यति । धनायति । बुभुक्षादौ किम् ।
नीयति ।

अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि ॥
१।८१॥

एषां क्यचि परेसुगागमः[2] स्यादात्मप्रीतौ ॥ अश्व-
योर्मैथुनेच्छायामिष्यते । अश्वस्यति वडवा । वृषस्यति गौः ।
रलवणयोर्लालसायाम् । क्षीरस्यति बालः । लवणस्यति
: । सर्वप्रातिपदिकानां क्यचि लालसायां सुगसुग्वागम
त्यपरे[3] । आदेशप्रत्ययेतरत्वान्न षः । दधिस्यति । दध्यस्यति ।[4]

---

अश । भोक्तुमिच्छा बुभुक्षा । पातुमिच्छा पिपासा । गर्धनं
: । अभिकाङ्क्षेत्यर्थः । अशनीयतीति । अन्नाशनेच्छामात्रं न
ुक्षा । 'क्यचि च' इतीत्वम् । उदकीयतीति धनीयतीति ज्ञेयम् ।

अश्व । आत्मप्रीताविति । विषयसप्तमीयम् । अश्वस्यतीति ।
अमात्मन इच्छति । क्यच् । असुकि अतो गुणे पररूपम् ।
स्यतीति । वृषमात्मन इच्छति । लालसायामिति । अभिलाषा-
ेको लालसा । मैथुनेच्छायां किम् । अश्वीयति । वृषीयति ।
ऽसायां किम् । क्षीरीयति । लवणीयतीति । सर्वेति । तथोक्तं
बोधे । 'धनोदकाशनवृषाश्वलेर्ग्रहपानान्न जाभाथ ङन ङनङ्ङ ।
् सनसनौ 'क्ये न षः' इति । दधिस्यतीति । दध्यात्मन
छतीत्यभिलाषातिरेकेण सुक् । दध्यस्यतीति असुक् । यणादेशः ।

---

१. बुभुक्षाद्यर्थे $D_1$. २. सुगागमः असुग्वा $N_1$; सुगसुगागमो $D_1$; सुगसुग्वागमो P. ३. इष्यते for इत्यपरे $D_3$. ४. After it—दधीयति $D_4$; दध्यस्यति dropped $D_3$.

**काम्यच्च ॥३।१।९॥**

इषिकर्मणः सुबन्तादात्मेच्छायां काम्यच् स्यात् । काम्यचोधातुविहितत्वेनार्धधातुकत्वाभावादे किंत्वप्रयोजनाभावात् ककारस्य नेत्वम् । पुत्रकाम्यति

सोपदादौ । यशस्काम्यति । इणः षः । सर्पि किंकाम्यति । अव्ययत्वान्न सः । स्वः काम्यति ।

**उपमानादाचारे ॥३।१।१०॥**

उपमानात् कर्मणः सुबन्तादाचारेर्थे क्यच् आचारक्रियायाः प्रत्ययार्थत्वात् तदपेक्षैवोपमानस्य पुत्रमिवाचरति पुत्रीयति छात्रम् । विष्णूयति अधिकरणाच्च ॥* प्रासादीयति कुट्याम् ।

---

**काम्यच्च** । अथ काम्यचः ककारस्येत्संज्ञ स्यादित्याशङ्क्याह- **काम्यच्च** इति । इह शब्दस्योपदेशः भवति श्रवणार्थो वा । अत्र तु कार्याभावात नेत्संज्ञेत्यभिप्रायः । **पुत्रकाम्यतीति** । आत्मनः पुत्रमिच्छ

**यशस्काम्यतीति** । 'सोपदादौ' इति सः । किं मान्ताव्ययेभ्योपि भवतीति प्रदर्शनार्थम् ।

**उपमानात्** । उपमीयतेनेनेत्युपमानम् । आचरणमा घञ् । आचारक्रियायाः प्रत्ययार्थत्वात् तदपेक्षयैवोपमानस् **पुत्रीयतीति** । 'क्यचि च' इतीत्वम् । **विष्णूयतीति** । चरतीति । 'अकृत्सार्वधातुकयोः' इति दीर्घः । **प्रास** प्रासाद इवाचरति ।

---

१. प्रत्ययः स्याद्वा $D_1$; स्याद्वा (प्रत्ययः dropped) $D_3$
३. क्यच्प्रत्ययः $D_1$. ४. स्यात् स्वार्थे $D_2$. ५. $D_2$ drops ...to कर्मता ।

## कर्तुः क्यङ् सलोपश्च ॥३।१।११॥

उपमानात् कर्तुः सुप आचारेर्थे क्यङ् स्यात् सान्ते सलोपश्च । अकृत्सार्वधातुकेति दीर्घः[1] । कृष्ण इवाचरतीति कृष्णायते । राजायते । क्यङ्मानिनोश्चेति पुंवत् । कुमारायते वृद्धा ।

ओजसोप्सरसो नित्यं पयसस्तु विभाषया ।[2] सलोपः । ओजायते । अप्सरायते । पयायते । पयस्यते ।[4] सुपूर्वस्य मनसो नित्यम् । सुमनायते ॥ आचारे गल्भहोडक्लीबेभ्यः क्विब्वा ॥*

---

कर्तुः । ननु चेदेकमेव वाक्यम् । तत्र चेनेत्थं समुच्चीयते क्यङ् सलोपश्चेति । तेनेदमुक्तं स्यात् । क्यङ्सलोपौ स्त इति । तथा च युगपद्विधानात् सलोपाभावे क्यङा न भवितव्यम् कृष्णायत इत्यादौ । पयायत इत्यादावेव भवितव्यम् । युगपद्विधाने हि नान्यतराभावे कार्यं स्यात् । यथा 'स्थाघ्वोरिच' इतीति शङ्कानिराकरणार्थमाह- **क्यङ् स्यात् सान्ते सलोपश्चेति** । अयमभिसंधिः । चकारोऽन्वाचये न समुच्चये । तेन द्वे वाक्ये भवतः । क्यङ् स्यात् सर्वत्रेत्येकम् । सान्ते सलोपश्चेति द्वितीयम् । तेन प्राधान्येन विधीयमानः क्यङ् सलोपाभावेपि स्यात् । **राजायत** इति । 'नः क्ये' । पदत्वान्नलोपः । ततो दीर्घः । ङित्त्वादात्मनेपदम् । **कुमारायत** इति । कुमारीवाचरति । पुंवत्त्वे सति दीर्घः ।

सलोपविधौ वाग्रहणं संबध्यते । व्यवस्थितविभाषा चेत्यभिप्रेत्याह—**ओजस** इति । सलोपविधौ च स्थानषष्ठी संबध्यते । विभक्तिविपरिणामात् । तेन 'अलोन्त्यस्य' इत्यन्त्यस्यैव स्यात् । अत एतत् सिध्यति । अप्सरायत इत्यादि । अप्सरस इवाचरति ।

---

१. °सार्वेति दीर्घः $D_1$; °सार्वधातुके दीर्घः $D_2$ °कयोर्दीर्घः $D_3$. २. P and [illegible], $D_3$ have after it—मनसस्तु सुपूर्वस्य नित्यं लोपो विधीयते ॥ इति [illegible]. ओजायते दुर्बलः । $D_3$. ४. तक्रम् after it in P ; नीरम् after it in $N_1$.

क्विपः सर्वस्य लोपः । गल्भादेः क्वावपि तङानौ ॥ गल्भाय
गल्भते । इत्यादि ॥ सर्वप्रातिपदिकेभ्यः क्विब् वाचार इत्येके
कृष्णाति । स्वति । स्वामास । स्वांचकार ।

---

क्विपः सर्वस्य लोप इति । ककारो 'लशक्वतद्धित' इतीत्सं
इकारः 'उपदेशे—' इति । पकारो 'हलन्त्यम्' इति । '
लोपः' । 'वेरपृक्तस्य' इति वलोपः । अथ किमर्थं ककारप
क्विप्यासज्येते यतः ककारस्य गुणनिषेधः कार्यम् । न चेह गुणः प्राप्त
अधातुविहितत्वेनार्धधातुकत्वाभावात् । पकारस्यानुदात्तत्वं कार्य
तच्च क्विपो न संभवति । अनच्कत्वात् सर्वलोपित्वाच्च । न च वे
सामान्यग्रहणार्थः ककारः । तदविघातार्थः पकार इति वाच्य
अन्यतरेणैव सामान्यग्रहणस्य सिद्धत्वात् । अन्यथा विड्विचे
द्वितीयानुबन्धः कर्तव्यः स्यात् । सत्यम् । क्वि इत्येव पठितव्यमित्ये
पकारानुबन्धकरणसामर्थ्यात् प्रकृतेरेव स्वर इत्यपरे । ननु च
सर्वप्रातिपदिकेभ्यः इत्येव गल्भादेः सिद्धः किमर्थं पृथगुच्यत
शङ्कयाह- **गल्भादेरिति** । अयं भावः । आत्मनेपदार्थानुदात्त
नुषञ्जनार्थं पुनर्वचनम् । तथोक्तं **महाभाष्ये** । 'कर्त्तव्यं च
प्रयोजनम् । आत्मनेपदार्थमनुबन्धानासङ्क्ष्यामीति । 'गल्भ क्लीब
इति । **इत्यादीति** । आदिशब्दात् । क्लीबायते । क्लीबते । होढा
होढते । **सर्वप्रातिपदिकेभ्य इति** । तथोक्तं **महाभाष्ये** । '
आह । सर्वप्रातिपदिकेभ्य आचारे क्विप् वक्तव्यः' इ
**कृष्णतीति** । कृष्ण इवाचरति । क्विपो लोपः । कर्तरि लट् । तिप् ।
प्रातिपदिकादेवायं क्विप् विधीयते । तेन पदत्वाभावात् 'अतो
इति पररूपं स्यात् । एतच्च सर्वेभ्य इति वक्तव्ये सर्वप्रातिपदि
इति वचनाल्लभ्यते । **स्वामासेति** । प्रत्ययान्तत्वादाम् ।

---

१. Dropped C, $B_2$. २. तथा च for तथोक्तं $Dc_3$.

भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ॥३।१।१२॥

भृशादिभ्यश्च्व्यर्थे भवत्यर्थे क्यङ् स्यात् न तु च्व्यन्तेभ्यः ।
हल्लोपश्च ॥ अभृशो भृशो भवति भृशायते । उन्मनायते ।
त् । शश्वायते । क्विबप्यत्रेति केचित् । भृशति । पक्षे
: । भृशीभवति ।

लोहितादिडाज्भ्यः क्यष् ॥३।१।१३॥

लोहितादेर्डाजन्ताच्चोक्तेऽर्थे क्यष् स्यात् । पक्षे च्विः ।
वेत्येके ।

---

भृशादि । च्व्यर्थः अभूततद्भावः । अच्वेरिति प्रत्येकमभिसंबध्यत
ह न तु च्व्यन्तेभ्य इति बहुवचनेन । किमर्थं पुनरिदमुच्यते ।
रा भवतियोगे च्विर्विधीयते तेनोक्तत्वात् च्व्यन्तेभ्यः क्यङ् न
( उक्तार्थानामप्रयोग इति कृत्वा । तत्सदृशप्रतिपत्त्यर्थं तर्हि
ातिषेधः । सादृश्यं चार्थद्वारकम् । अभूततद्भावार्थेभ्यो भृशादिभ्यः
ः स्यादिति । अत एवोक्तं च्व्यर्थ इति । उन्मनायत इति ।
न्मना उन्मना भवति । सलोपः । 'अकृत्सार्वधातुक—' इति
। क्विबप्यत्रेति । तथा च बोपदेवपण्डितैर्मुग्धबोधे उक्तम् ।
ृादिभ्यश्च्व्यर्थे ङ्यक्की वा स्तः ' इति । भृश । शीघ्र । चपल ।
त । उत्सुक । उन्मनस् । अभिमनस् । सुमनस् । दुर्मनस् ।
। रेहत् । रेहत् । संश्वत् । प्रमत् । वहत् । शश्वत् । तृषत् ।
ावर्चस् । ओजस् । अरजस् ।[६]

लोहितादि । उक्तेऽर्थे च्व्यर्थे भवत्यर्थे लोहितादिभ्यः डाजन्ताच्च
। लोहितीस्यादिति । अभूततद्भावे इति च्विः । 'अस्य च्वौ'

---

भवत्यर्थे dropped D3. २. अन्त्य° D4. ३. क्विब् वाप्यत्रेति D2; वात्रेति C. ४. चेत्येके C. ५. भृशादेश्च्व्यर्थे मुग्ध. ६. After it—स् Dc3.

## वा क्यषः ॥१।३।९०॥

क्यषन्तात् परस्मैपदं वा स्यात् ॥ लोहितायते । लोहि
याति । लोहितति । लोहितीस्यात् । चर्मायति । चर्माय
चर्मति । चर्मीस्यात् । पटपटायाति । पटपटायते । पटपटा
पटपटास्यात् ।

---

इतीत्वम् । एतच्च क्यष्विधानं लोहितशब्दात् डाजन्ताचेति ज्ञातव्य
ननु च लोहितादिगणे नीलमधुपेनरहितमंदेति पठ्यन्ते तेभ्योपि व
भाव्यम् । न । तानि भृशादिषु द्रष्टव्यानि । इह तु प्रमादपाठस्तेषा
एवं चेदादिशब्दोनर्थकः । मैवम् । अपठितेभ्यश्चर्मादिभ्यः क्यष् भव
अत एव चर्मायत इत्येवोदाहृतं न नीलादीन्युदाहृतानि । चर्मायत इ
'नः क्ये' इति पदत्वान्नलोपः । ततः 'अकृत्सार्वधातुक—' इति दी
आकृतिगणोयम् । तथा च 'नः क्ये' इति सामान्यग्रहणार्थं
ककारोनुबध्यते । न हि पठितानां मध्ये नकारान्तः शब्दो
चर्मतीत्येतत्त्वन्यमतेनोक्तम् । स्वमते त्वेतदनभिमतमेव । क्ये
एवेष्टत्वात् । क्वौ नलोपस्यानिष्टत्वाच्च । पटपटायति पटपटायत
डाजन्तस्य उदाहरणम् । पटत्शब्दात् 'अव्यक्तानुकरणाद्—
डाचि विवक्षिते डाचि बहुलं द्वे भवत इति द्वित्वम् ।
डाचि टिलोपः । तत्र कृते पटत्शब्दे योत्शब्दः तदवयवस्य तक
नित्यमाम्रेडित इति पररूपं पकारः । 'वा क्यषः' इत्यात्मनेपदं
ननु च क्यष्योगे डाच् नास्ति कृभ्वस्तियोगे एव विहित
सत्यम् । अस्मादेव ज्ञापकात् क्यष्योगे भवति । पटपटास्य
च्वेरुदाहरणम् । अव्ययस्य ईत्वं दीर्घो नेति केचिदितीत्वाभावः ।

---

१. स्याद्वा D2, D3. २. लोहितायाति । लोहितायते N1, D3.
N1 drop it. ४. So N1. ५. पटपटास्यादिति केचित् after this
६. मन्दे° Dc3. ७. न क्यषः Dc3. ८. क्यषि चकारोनुबध्यते
९. क्यषा Dc3.

**कष्टाय क्रमणे ॥३।१।१४॥**

चेतुर्थ्यन्तात् कष्टशब्दादनार्जवेर्थे[2] क्यङ् स्यात् ॥ कष्टाय कर्मणे क्रामति कष्टायते । छद्मायते इत्येके ।

सत्रकक्षकष्टगहनेभ्यः[4] पापचिकीर्षायाम् ॥* सत्रायते । इत्यादि ।[6]

**कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ॥३।१।१५॥**

रोमन्थतपोभ्यां कर्मभ्यां क्यङ् स्यात् क्रमेण वर्तिचरोरर्थयोः ॥ रोमन्थं वर्तयति रोमन्थायते गौः ।

---

**कष्टाय** । कष्टायेति निर्देशात् चतुर्थीसमर्थात् प्रत्ययो विज्ञायत इत्याह- चतुर्थ्यन्तादिति । क्रमशब्दोस्ति पादविहरणे । अस्त्यनार्जवे । तत्र कस्येह ग्रहणमिति शङ्कानिरासार्थमनार्जवे इति व्याकरोति । जिह्मं पापमनार्जवमिति पर्यायाः । एतच्च 'धातोः कर्मणः—' इति सूत्राद्वाशब्दानुवृत्तेर्लभ्यते । व्यवस्थितविभाषात्वात् । कष्टाय कर्मण इति तादर्थ्यचतुर्थी । अनार्जवे किम् । अजः कष्टं क्रामति । पादविहरणं करोतीत्यर्थः । **छद्मायत इति** । तथोक्तं **मुग्धबोधे** । छद्मायत इति ।

**सत्रेत्यादि** । अस्मिन्न्यासान्तरे समर्थविभक्तिर्नास्ति । अनुवधिकारात् संबद्धयोग्या विभक्तिरध्याहार्या । सत्रायत इति । सत्रं कर्तुमिच्छति । पापं कर्तुमिच्छतीत्यर्थः ।

**कर्मणो** । **वर्तिचरोरिति** । वर्तनं वर्तिः । ण्यन्तात् क्तिन् । ननु न भाव्यं क्तिना युचा बाधितत्वात् । एतस्मादेव ज्ञापकात् क्तिन्नपि भवतीत्यदोषः । **रोमन्थायत इति** । अभ्यवहृतं पुनराकृष्य चर्वतीत्यर्थः ।

---

१. Before this—क्रमणं प्रवर्तनं न पादविहरणम् $N_1$; before this—क्यङनुवर्तते न क्यष् । क्रमणं प्रवर्तनं न पादविहरणम् C. २. °दनार्जवेत्यर्थे $D_2$. ३. कच्छ $D_3$. ४. कृच्छ्रगहने $D_3$, $D_4$. ५. Before it—एभ्यो धर्मकाङ्क्षायां क्यप् स्यात् । पापं कर्तुमिच्छति $D_2$. ६. After it—पापचिकीर्षायां किम् । कष्टाय तपसे क्रामति C, $N_1$. ७. तादर्थ्ये चतुर्थी $Dc_3$. ८. So $Dc_3$.

हनुचलन एव ।* तपसः परस्मैपदं च । तपश्चरति तपस्य

बाष्पोष्मभ्यामुद्वमने ॥३।१।१६॥

आभ्यां क्यङ् स्यादुद्वमने ॥ बाष्पमुद्वमति बाष्पा उष्मायते । फेनाच्च ॥* फेनायते । धूमाच्चेति केचित् । धूम

शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे॥३।

एभ्यः कर्मभ्यः कृञर्थे क्यङ् स्यात् ॥ शब्दं शब्दायते । इत्यादि ॥ सुदिनदुर्दिननीहारेभ्यश्च ॥* सुदि

---

हनुचलन एवेति । अभ्यवहृत्य पुनरुद्गीर्य चर्वणं हनुचलनम् कीटो रोमन्थं वर्तयति । उद्गीर्णं बहिर्निरस्तमवगीर्णं वा पृष्ठं रोमन्थाख्यं द्रव्यं वर्तयति पुटिकां करोतीत्यर्थः ।

बाष्पो । उष्मायत इति । ऊष्माणमुद्वर्तयति । 'उ इति दीर्घः । फेनायत इति । फेनमुद्वमति । धूमादिति । तथो बोधे । बाष्पोष्मफेनधूमादुद्वान्तौ' इति ।

शब्दवैर । क्रियां विनात्र शब्दादेः कर्मत्वं नेति करणं न साधकतममित्यभिप्रेत्याह— कृञर्थे इति । शब्दात् । वैरायते । कलहायते । अभ्रायते । क मेघायते । तत्करोतीति णिचि प्राप्तेस्यारम्भः । 'भृश इत्यतश्चकारानुवृत्तेर्णिजपि । शब्दयति । अटाट्टाशीकाकोटा सृष्टापुष्टादिभ्योपि करोत्यर्थे क्यङ् । अटायते । शीकायते । कोटायते । पोटायते । सोटायते । सृष्टायते ।

---

१. After हनुचलन एव—अभ्यवहृतं पुनराकृष्य चर्वयतीत्य रोमन्थं वर्तयति । अत्र मा भूत् । तपसः &c. $N_1$. २. After it पुनराकृष्य चर्वयतीत्यर्थः C; कीटो रोमन्थं वर्तयाति $D_2$, $D_4$; रोमन्थं वर्तयाति $D_3$. ३. P and $D_2$, $D_4$ drop it; C ha इत्येके।. ४. क्यङ् स्यात् कृञर्थे $D_1$. ५. करोतीति $D_3$. ६. ७. पृष्ठायते $Dc_3$

## सुखादिभ्यः कर्तृवेदनायाम् ॥३।१।१८॥

एभ्यः कर्मभ्यः क्यङ् स्यात् वेदयितुरनुभवेर्थे[1] ॥ सुखं
[वेद]यति सुखायते । दुःखायते ।[2]

## नमोवरिवश्चित्रङः क्यच् ॥३।१।१९॥

एभ्यः क्यच् स्यात्[3] क्रमेण पूजायां परिचर्यायामाश्चर्य-
[प्रव]र्तनयोः ॥ नमस्यति । वरिवस्यति । ङित्त्वात् तङ् । चित्रीयते ।

---

सुखादिभ्यः । वेदयितुरनुभवेर्थे इति । वेदयितुः ज्ञातुः स्व-
[सम]वेतानां सुखादीनां प्रत्यक्षोपलब्धावित्यर्थः । वेदयितुरनुभवे किम् ।
[सु]खं वेदयते प्रसाधको राज्ञः । अनुमानेन निश्चिनोतीत्यर्थः । सुख ।
[दुः]ख । तृप्र । अस्र । आस्र । अलीक । करण[4] । कृपण । सोढ । प्रतीप ।

नमः । पूजायामित्यादि[5] । यद्यपि करणे इति सामान्यमनुवर्तते
[तथ]ाप्यभिधानशक्तिस्वाभाव्याल्लभ्यते पूजादि विनापि वचनम् ।
[नम]स्यति । पूजयतीत्यर्थः । अथ नमस्यति गुरूनित्यत्र कथं द्वितीया ।
[यो]गे 'नमः स्वस्ति—' इति चतुर्थी विहिता नमोयोगे । नैवम् ।
[अ]प्रधानत्वान्नमःशब्दस्यात्रत्यस्य । प्रधाने हि संप्रत्यय इति प्रधान-
[यो]गे चतुर्थी । अथवोपपदविभक्तेः कारकविभक्तिर्बलीयसीति द्वितीया ।
[व]रिवस्यति । परिचरति । शुश्रूषत इत्यर्थः । चित्रीयते । विस्मयत
[इत्य]र्थः । 'क्यचि च' इतीत्वम् ।

---

१. वेदनायात्वनुभवेर्थे $D_2$. २. After it—कर्तृवेदनायां किम् । सुखं वेदयते
[प्रस]ाधको राज्ञः । $D_3$. ३. एभ्यः क्यच् स्यात् dropped $N_1$. ४. करुण
[D]$c_3$. ५. मानपूजाया॰ $Dc_3$.

पुच्छभाण्डचीवराण्णिङ् ॥३।१।२०॥

एभ्यो णिङ् स्यात् कृञर्थे । पुच्छादुदसने पर्यसने वा । उत्पुच्छयते ।[1] भाण्डात् समाचयने ॥* संभाण्डयते चीवरादर्जने परिधाने च ॥* संचीवरयते भिक्षुः ।

मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यं णिच् ॥३।१।२१॥

एभ्यः कृञर्थे णिच् स्यात् ॥ मुण्डयति । व्रताद् भोजन तन्निवृत्त्योः ॥* पयः शूद्रान्नं वा व्रतयति ॥ वस्त्रादाच्छादाने[2] ॥

---

पुच्छ । उदसनमुत्क्षेपणम् । पर्यसनं परितः क्षेपणम् यदोदसने प्रत्ययस्तदा तद्द्योतनायोच्छब्दः प्रयुज्यते । यदा पर्यसने तद परिशब्दः । उत्पुच्छयत इति । णाविष्ठवदिति टिलोपः । भाण्डादिति समाचयनं राशीकरणम् । अर्जनमलब्धस्य लाभः । णिङो ङका आत्मनेपदार्थः । णकारो 'णेरनिटि' इति सामान्यग्रहणार्थः ।

मुण्ड । यद्यपि प्रातिपदिकाद्धात्वर्थे इति गणसूत्रेणैव मुण्डादिभ्य णिच् विहितः तत्करोतीत्यादिना च प्रपञ्चितस्तथापीह मन्दधियामनु ग्रहार्थं पुनरुच्यते । मुण्डयतीति । मुण्डं करोतीत्यर्थः । मिश्रयति श्लक्ष्णयति । लवणयति । व्रतादिति । तन्निवृत्तिर्भोजननिवृत्तिः पयो व्रतयति । भुङ्क्ते इत्यर्थः । शूद्रान्नं व्रतयति । न भुङ्क्त इत्यर्थ

---

१. After it—परिपुच्छयते $D_1$, $D_2$, $D_3$, $D_4$, $N_1$. २. After it परिधाने च $D_2$, $D_4$, $B_2$, $N_1$.

संवस्त्रयति । णाविष्ठवत् प्रातिपदिकस्य ॥ इष्ठे यथा
तिपदिकस्य पुंवद्भावरभावटिलोपविन्मतुब्लोपयणादिलोपप्रस्थ-
ाद्यादेशाः स्युस्तद्वत् णावपीत्यर्थः । टिलोपः । हलिं कलिं
क्षाति । अत्र णिचिपरत्वाद्वृद्धौ सत्यां टिलोपः । हलयति ।
द्धलं हलिः । कलयति । चङि अग्लोपित्वाभावात्
न्वद्भावे प्राप्ते हलकलेत्यदन्तत्वनिर्देशान्न[४] । अचकलत् ।

---

**संवस्त्रयतीति** । समाच्छादयतीत्यर्थः । **णाविष्ठवदिति** ।
सिलादिष्वाकृत्वसुचः' इतीष्ठनि पुंवद्भाव उक्तः । 'र ऋतः' इति
ावः । 'टेः' इति टिलोपः । 'विन्मतोर्लुक्' इति विन्मतोर्लोपः ।
लदूरेति यणादिपरलोपः । प्रियस्थिरेत्यादिना प्रियादीनां प्रस्थस्फाद्या-
ाः । एतानि कार्याणि यथेष्ठनि परतो भवन्ति तथा णावपि परतः
तेपदिकस्य भवन्तीति वक्तव्यमित्यर्थः । ननु च प्रातिपदिकाद्धात्वर्थे
लमिष्ठवच्चेति गण एव पठ्यते । तत् कस्मात् पुनरिहोच्यते । तस्यैव
ञ्चार्थम् । अत्र णिचीति । हलि कलि अनयोर्णिचि कृते
ाचोञ्णिति' इति वृद्धिः प्राप्नोति इष्ठवद्भावेन टिलोपश्च । तत्र
ातिषेधे परं कार्यमिति परत्वादादौ वृद्धिः । तस्यां च सत्यां पश्चात्
ोप इत्यर्थः । **हलयतीति** । हलिशब्दं व्याकरोति- महदिति ।
डीत्यादि । हलि कलि अनयोर्णिचि चङि च सति परत्वाद्वृद्धौ
ायामैकारे जाते पश्चाट्टिलोपः । ततश्च नाग्लोप्यङ्गं तस्मादग्लोपित्वा-
ात् 'सन्वत्' इति सन्वद्भावे प्राप्ते 'हलकल' इति सूत्रेदन्तत्व-
ातनादग्लोपित्वात् सन्वद्भावो न स्यादित्यर्थः । **अचकलदिति** ।

---

१. $D_1$ drops it. २. Dropped $N_1$. ३. सुब्धातुत्वात् वा सन्वद्भावे for
ङ.. प्राप्ते $D_2$, $D_4$; before it—सुब्धातोरनेकाच्श्च सन्वद्भावो वेति केचित् ।
न $N_1$. ४. After it—न च $D_2$ ; °दन्तानिर्देशान्न $D_3$, $D_4$.

सत्यापपाशेति णिच् । अर्थवेदसत्यानामापुग्वाच्यः ॥* सत्यमाच[3]
सत्यापयति । अर्थापयति । वेदापयति । पाशाद्विमोचने[4] ॥
विपाशयति । रूपं[5] पश्यति रूपयति । वीणयोपगायति उप
वीणयति । तूलैरनुकुष्णाति[6] अनुतूलयति । श्लोकैरुपस्तौ
उपश्लोकयति । सेनया अभियाति अभिषेणयति । अभ्यषेणयत्
अषोपदेशत्वेपि स्थादिष्वभ्यासेति[7] नियमादभ्यासव्यवाये
षत्वम् । अभिषिषेणयिषति । लोमान्यनुमार्ष्टि अनुलोमयति
त्वचं गृह्णाति त्वचयति । वर्मणा संनह्यति संवर्मयति । व
गृह्णाति वर्णयति । चूर्णैरवध्वंसते अवचूर्णयति । हस्तिनातिक्राम[8]

---

'णिश्रि—' इति चङ् । 'चङि' इति द्वित्वम् । कृतयतीति
कृतं गृह्णाति । अचकृतादिति । अग्लोपित्वान्न दीर्घसन्वद्भावौ
वितूस्तयतीति । जटीभूतकेशादिस्तूस्तशब्दार्थः । सत्यापयतीति
आपुग्विधिसामर्थ्यान्न टिलोपः । अर्थापयतीति । अर्थमाचष्टे
वेदापयति । वेदमाचष्टे । विपाशयतीति । पाशं विमोचयतीत्यर्थः
उपवीणयतीति । वीणया समीपे गायतीत्यर्थः । त्वचयतीति
अकारान्तस्त्वचशब्दोयम् । त्वचेति सूत्रेदन्तग्रहणात् । अवचूर्णयतीति
अदन्तेषु सत्यापयतीत्यादिषूदाहरणेष्विष्ठवद्भावाट्टिलोपः । ननु
सत्यापयतीत्यस्मिन् सूत्रे आख्यानमोचनादयोर्था अनुक्ताः कथं लभ्यन्ते
उच्यते । शब्दानामर्थाभिधानं स्वाभाविकं न वाचनिकम् । अ
शक्तिस्वाभाव्यादयमर्थः स[10] तस्येति निर्दिष्टः । हस्तिनातिक्राम

---

१. Dropped $N_1$. २. विनिहन्ति $D_2$, $D_3$, $D_4$, $B_2$. ३. सत्य°—सत्या
याति after वेदापयाति $D_3$. ४. पाशाद् विमोचने । संयतने च । संपाशया
विपाशयति । $N_1$. ५. Before it—रूपादर्शने $N_1$. ६. रनुतूलयाति ]
७. स्थादिष्विति $D_2$, P, $N_1$. ८. Before it—तेनातिक्रामयतीत्यर्थे णि
$N_1$. ९. °क्रामयाति $N_1$. १०. So $Dc_3$.

अतिहस्तयति । हस्तौ निरस्यति हस्तयति इति केचित् तत्करोति तदाचष्टे इति चुरादित्वात् सुबन्ताण्णिच् । षं करोति आचष्टे वा षष्ठयति । सुब्धातुत्वात् षस्य न सः

---

अतिहस्तयतीति 'तेनातिक्रामति' इति णिच् । टेर्लोपः । हस्तौ निरस्यति हस्तयतीति । 'तत्करोति—' इत्यनेन सूत्रावयवेन चुरादिगणोक्तं सूत्रत्रयं लक्ष्यते । 'प्रातिपदिकाद् धात्वर्थे बहुलमिष्ठवच्च' । 'तत्करोति तदाचष्टे' 'तेनातिक्रामति' 'धातुरूपं च' कर्तृकरणार्थे इत्येतेषामर्थः । प्रातिपदिकाद्यथादर्शनं णिच्प्रत्ययः स्यात् क्रियाविशेषे कूलमुल्लङ्घयति उत्कूलयतीत्यादि । तस्यैव निदर्शनार्थे द्वितीय-तृतीयसूत्रे । तदिति द्वितीयासमर्थात् प्रातिपदिकात् करोतीत्यर्थे च तथा तेनेति तृतीयासमर्थात् अतिक्रामतीत्यर्थे णिच् भवति । तीक्ष्णं करोति तीक्ष्णयति । वाक्यमाचष्टे वाक्ययति । हस्तिना अति-क्रामति अतिहस्तयतीत्यादि । 'धातुरूपं च' इत्यनेन कात्यायनोक्तमा-ख्यानादित्याशङ्कां स्मारयति । तृतीयस्यार्थः कर्तृकरणयोरर्थे च यथादर्शनं णिच् स्यात् । आलानेन बध्नाति आलानयति हस्तिनः । दात्रेण लुनाति दात्रयति व्रीहीनित्यादि । सुब्धातुत्वादिति । सुब्धातुष्ठिवु-ष्वष्कतीनां सत्वनिषेध इति । अथ देवदत्तस्य दण्डं करोति दण्डयति देवदत्तमित्यादिषु वृत्तौ कथं द्वितीया । वाक्ये हि षष्ठी दृश्यते । उच्यते । वृत्तौ प्रत्ययार्थः प्रधानमप्रधानं प्रकृत्यर्थः । तत्राप्रधानं प्रधानानुयायीति प्रकृत्यर्थे दण्डादौ प्रत्ययार्थमनुयाति सति तत्संबन्धो देवदत्तोपि प्रत्ययार्थमनुगच्छति । तदनुगमाच्च कर्म संपद्यत इति । यत्र च संबन्धिना वृत्तिस्तत्र कर्मणोन्तर्भूतत्वात् तस्याकर्मतैव । यथा

---

१. अङ्गान्निरस्यतीत्यर्थे णिच् । २. अतिहस्त° $D_4$. ३. Dropped $N_1$. ४. So $B_2$, $N_1$, $D_3$, $D_4$. ५. न सस्य षः $D_2$. ६. हस्तौ निरस्यति तथोक्तं मुग्धबोधे हस्तौ निरस्यति हस्तयति इति । $Dc_3$. ७. After it—आचष्ट इत्यर्थे च । $Dc_3$. ८. हास्तिनम् । $Dc_3$.

कविं पटुं वाचष्टे । वृद्धौ सत्यां टिलोपः । कवयति । पटय
चङि अनग्लोपित्वात् सन्वद्भावः । अचीकवत् । अपीप
आख्यानात् कृतस्तदाचष्ट इति कृल्लुक् । प्रकृतिप्रत्याप
प्रकृतिवच्च कारकम् । कंसवधाख्यानमाचष्टे कंसं घात

---

तपः करोतीति तपस्यति । मुण्डयति छात्रमित्यादौ तु सा
कर्मान्तर्भूतं विशेषकर्मणा तु सकर्मकत्वम् । एवं चेत् पुत्री
विशेषकर्मणा सकर्मकत्वं स्यात् । पुत्रीयते छात्रमिति । सत्यम्
त्वाचारक्यचा बुद्धेरपहृतत्वात् सदपीच्छाक्यचः कर्म न यु
तथा हि पुत्रीयति छात्रमित्यत्र पुत्रमिवाचरतीति प्रतीयते
पुत्रमिच्छतीति । तदुक्तं हरिणा—

'सदपीच्छाक्यचः कर्म तदाचारक्यचाहृतम्' । इति ।

वृद्धौ सत्यां टिलोप इति । कविपटुशब्दयोर्णिचि जाते परत
'अचो ञ्णिति' इति वृद्धिः । तत इष्ठवद्भावेन टिलोप इ
कवयति । पटयतीति । शपि गुणायादेशौ । चङि इति । ऐकारौ
ष्टिलोपेन लोपादनग्लोपित्वमित्यर्थः । अचीकवदिति । 'स
इतीत्वम् । 'दीर्घो लघोः' इति दीर्घः । आख्यानादिति । आ
इत्याख्यानं कंसवधादि । तद्वाचकः शब्दोऽप्युपचारादाख्य
तस्मात् कृदन्तात् 'तदाचष्टे' इत्यर्थे णिच् कृतो लुक् ।
प्रत्यापत्तिर्या प्रत्ययमुत्पादितवती तस्याः प्रकृतेः पूर्ववदविकृतेन
वस्थानम् । प्रकृतिवच्चेति । चकारो भिन्नक्रमः कारकमित्यस
द्रष्टव्यः । कार्यशब्दश्चाध्याहार्यः । ततोयमर्थः । कृतो या प्रकृ
यथा कार्यमडादि तथा ण्यन्ताया अपि स्यात् ।
प्रकृतिवत् कारकमपि स्यादित्यर्थः । कंसं घातयतीति । हन्तेर्भा
वध' इत्यप्प्रत्ययो वधादेशश्च । ततः कंसस्य वध इति षष्ठी

---

१. Dropped $N_1$. २. C drops सन्वद्भावः. ३. Dropped in
$D_2$, $B_2$ have णिच् after it. ४. Before it—स्वरूपाद्विप्रच्युत
स्याप्तिः प्रत्यापत्तिः C; प्रकृतिप्रत्यापत्तिः $D_4$. ५. °कर्मणां तु स

बोलिं बन्धयति । ऊढिमाचष्टे ऊढयति । चङि द्वित्वं प्रति ढत्वादीनामसिद्धत्वात् सणिच्कस्य इति[3] इत्यस्य द्वित्वम् । [4]हलादिशेषः औजिढत् । ढीत्यस्य द्वित्वमिति दुर्गगुप्तादयः । औडिढत्

---

कंसवधाण्णिच् । तत्र कृते अप्प्रत्ययस्य कृतो लुक् । प्रकृतेर्हन् अस्या प्रत्यापत्तिः । हन् इति स्थिते 'अत उपधायाः' इति वृद्धिः । 'हो हन्तेः—' इति कुत्वम् । हकारस्य घकारः । 'हनस्तः' इति तकारोन्तादेशः । शप् । गुणायादेशौ । कारकं च प्रकृतिवत् । प्रकृतेश्च कंस कर्मासीत् । अत्र द्वितीया कंसमित्यत्र । बलीं बन्धयतीति । बलिबन्धाख्यानमाचष्टे । ऊढयतीति । वह प्रापणे । अस्मात् स्त्रियां क्तिन् । 'हो ढः' इति ढत्वम् । 'झषस्तथोः—' इति धत्वम् । 'ष्टुना ष्टुः' इति ष्टुत्वम् । 'ढो ढे लोपः' इति । 'वचिस्वपि—' इति संप्रसारणम् । 'ढ्लोपे—' इति दीर्घः । ततो णिच् । टिलोपः । शप् । गुणायादेशौ । चङीत्यादि । ऊढि अस्माण्णिचि लुङि 'णिश्रि—' इति चङि च सति टिलोपे च ऊढि अत् इति स्थिते 'चङि' इति द्वित्वं प्राप्नोति । तत् प्रति पूर्वत्रासिद्धन्यायेन ढत्वधत्वष्टुत्वढलोपानामसिद्धत्वात् इति अस्य सणिच्कस्य द्वित्वम् । येषां णौ कृत उवर्णादेश आकार आत्वादेश एव स्थानिवदिति मतं तेषां मतेनेत्यर्थः । अन्येषां हि काशिकाकारादीनां मते णौकृतस्य सर्वस्यापि स्थानिवत्त्वमिति टिलोपस्य स्थानिवत्त्वादिकारसहितस्य चङ्परे णौ द्वित्वम् । औजिढदिति । 'कुहोश्चुः' इति महाप्राणस्य हकारस्य महाप्राणो झकारः । 'अभ्यासे चर्च' इति झकारस्य जकारः । 'णेरनिटि' इति णिलोपः । ढीत्यस्येत्यादि । तेषां हि मते पूर्वत्रा-

---

१. Before it—बलिमाचष्टे । $D_3$. २. Before it—क्रियान्वाख्यानाच $N_1$. ३. ही इत्यस्य द्वित्वम् $D_2$. ४. हलादिः $D_1$, $D_3$, $D_4$, $N_1$. ५. इह हन् इति $Dc_3$.

ऊढमाचष्टे ऊढयति । औजिढत् । अल्लोपस्य णौ
वत्त्वमाश्रित्य हृतशब्दस्य द्वित्वादौजढदिति काशि
औडढत् इत्यन्ये । प्रकृत्यैकाच् । वृद्धिपुगागमौ । स
ईष्ठवत्त्वात् पुंवद्भावः । एनीमाचष्टे एतयति । र ऋत इ
प्रथयति । स्थूलदूरेति यणादिलोपः । स्थवयति । ि

---

सिद्धन्यायः । ऊढमाचष्ट इति । निष्ठान्तम् । पूर्ववत्
औजिढदिति । अत्रापि येषां मते णौ कृत उकारादे
आवादेश एव स्थानिवत् तेषां मते लोपस्य स्थानि
'अजादेः—' इति सणिच्कस्य ढत्वादीनामसिद्धत्वाच्च ह
द्वित्वम् । अल्लोपस्येत्यादि । काशिकाकारस्य हि मते
स्थानिवद् भवतीति अल्लोपस्य स्थानिवत्त्वमाश्रित्य
द्वित्वादग्लोपित्वात् सन्वद्भावाद्यप्राप्तेरौजढदिति सिध्येदि
तथा च काशिकायामाह वामनः । औजढदिति ऊढमाख्य
तदन्ताल्लुङ् । 'चाङि' इति द्विर्वचने कर्तव्ये ढत्वधत्व
नामसिद्धत्वाण्णौ च यष्टिलोपस्तस्य स्थानिवद्भावात् ह
द्विरुच्यते इति । औडढदित्यन्य इति । दुर्गगुप्तादयः ।
'अचो ञ्णिति' इति वृद्धिः । 'अर्तिह्री—' इ
स्वापयतीति । स्वमाचष्टे अस्माण्णिचि सतीष्ठवद्भावेन
'प्रकृत्यैकाच्' इति प्रकृतिभावः । ततो वृद्धिपुकौ ।
'वर्णादनुदात्त—' इति ङीप् तस्य च नः । एतयती
त्वादिषु—' इति पुंवद्भावात् ङीप्नयोरभावः । ।
पृथुमाचष्टे । स्थवयतीति । स्थूलमाचष्टे । यणादिलोपः पूर्व

---

१. C drops it. २. C. drops it. ३. औडढत्
$D_2$ ; C drops औडढत् इत्यन्ये ।. ४. इष्टवत्त्वात् $D_3$ ; इ
५. After it—स्वयति $D_3$: ६. स्वापमा° $D_{c3}$.

प्रादयः । प्रियमाचष्टे प्रापयति । [1]स्थापयति । साधयति । संज्ञापूर्वको विधिरनित्य इति नोपधावृद्धिः । कनयति । विन्मतोर्लुक् । [2]स्रग्विन्—स्रजयति । [3]ईश्मन्—ईशयति । त्वचयति । श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च । श्वेतयति । अश्वयति । गालोडयति । आह्वरयति ।

**कण्ड्वादिभ्यो यक् ॥३।१।२७॥**

कण्डूञ्[4] इत्यादिभ्यो यक्प्रत्ययः स्यात् कृञर्थे[5] । धातवः

---

ततोव् । **प्रापयतीति** । 'प्रकृत्यैकाच्' इति प्रकृतिभावः । वृद्धिपुकौ । **स्थापयतीति** । स्थिरमाचष्टे । **साधयतीति** । बाढमाचष्टे । 'अन्तिकबाढ—' इति साधादेशः । कनयतीति । युवानमल्पं वाचष्टे । 'युवाल्पयोः' इति कनादेशः । **स्रग्विन्निति** । स्रजो विद्यन्तेस्य । 'अस्माया—' इति विनि । तमाचष्टे । अत्र विनो लुक् । **ईश्मनिति** । ईडस्यास्ति ईश्मान् । तमाचष्टे । करोति वा । अत्र मतुपो लुक् । **त्वचयतीति** । त्वग्वन्तमाचष्टे । पूर्ववत् । **श्वेतेति** । श्वेताश्वशब्दस्याश्वेत्यस्य लोपः । अश्वतरस्य तरइत्यस्य लोपः । गालोडितेत्यस्य इतस्यलोपः । आह्वरकेत्यस्य कलोप इत्यर्थः ।

**कण्ड्वा** । **धातव इति** । तत्र धात्वधिकारात् धातुभ्य एव प्रत्ययो विधीयते । तथा च गुणप्रतिषेधार्थः ककारोनुबध्यते । तथा चोक्तम् ।

'धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि ।
आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः' ॥ इति ।

---

१. स्फापयति $D_2$; साधयति । स्थापयति । प्रशस्यमाचष्टे श्रापयति । ज्यापयति । संज्ञापूर्वको &c. $N_1$. २. स्रग्विणमाचष्टे स्रजयति $B_2$. ३. इश्मनमाचष्टे इशयति $B_2$. ४. इत्येवमादिभ्यः $D_3$. ५. इतशब्दस्य $Dc_3$.

प्रातिपदिकानि चेति कण्ड्वादयो द्विविधाः।[3] कण्डूं करो
यति । [3]कण्डूयते। हृणीङ्—हृणीयते । [4]महीङ्—म
इत्यादि । क्यजन्तात् सन् । नामधातोर्यथेष्टं द्वित्वं व
पुपुत्रीयिषति। पुतित्रीयिषति। पुत्रीयियिषति। पुपुतित्रीयि
अजादेराद्येतरस्य द्वित्वम् । अशिश्वीयिषति । अश्वीयि
[6]अशिश्वीयियिषति । यत्र संयोगे नदराः सन्ति तत्र
न द्वित्वम्। इन्दिद्रीयिषति । चन्दिद्रीयिषति। कण्ड्वा

---

कण्डूमित्यादि। कण्डूयतीत्यस्यार्थः । ञित्त्वादुभयपदम्।
ङित्त्वादात्मनेपदम्। आदिशब्दात्। मन्तु। वल्गु। असूञ्
वेट्। लोञ्। तिरस्। इरस्। उरस्। उषस् । मागध
नडस्। मघस्। दुःख। सुख। वरण। चामर। अधर ।
भिष्णुक्। इषुध। इषुह। गद्गद। एला । केला । लेट्
स्वरूपग्रहणम्। लेट्यूति । लोट्यूति । चरण । तुरण
कण्ड्वादिः। पुपुत्रीयिषतीति। पुत्रमिच्छति क्यच्। पुत्रीयितु
सन्। 'सन्यङोः' इति प्रथमस्य द्वित्वे प्राप्ते नामधातोर्य
स्यात्। प्रथमस्य वा द्वितीयस्य वा तृतीयस्य वा त्रयाणा
अशिश्वीयिषतीति। अश्वमिच्छति क्यच्। अश्वीयितुमिच्छा
**यत्र संयोग** इत्यादि । णयन्ते विवृतम् । इन्दिद्रीयि
इन्द्रमिच्छति। इन्द्रीयितुमिच्छति। क्यजन्तात् सन् । च
षतीति । चन्द्रमिच्छति । चन्द्रीयितुमिच्छति । चिकामयि
कमेर्णिङ्। कामयितुमिच्छति । सन् । द्वित्वम् । पूर्वव

---

१. After it—तत्र धात्वधिकारे धातुभ्यः प्रत्ययो विधीयते
पदिकेभ्यः। तथा च ककारः गुणप्रतिषेधार्थः। कण्डूं &c. $B_2$;
$B_2$, but has धात्वधिकारात् and तथा गुणप्रतिषेधार्थः ककारः।.
ped N. ३. हृणीङ् लज्जारोषणयोः $B_2$. ४. महीङ् वृद्धिपु
५. Dropped $D_1$. ६. Dropped $D_2$, $D_3$, P, C.

व । कण्डूयियिषति । णिङः सन् । चिकामयिषते ।
यादित्वाद्वा । चिकमिषते । यङ् सन् ण्यन्तात् सन् ।
भूयिषयिषति । इत्यादि ॥[2]

इति नामधातुप्रक्रिया ॥

---

कमिषत इति । णिङभावे रूपम् । बोभूयिषयिषतीति । भू
तायाम् । अस्मात् अतिशयेन भवतीत्यस्मिन्नर्थे 'धातोः—' इति
ए । द्वित्वम् । 'गुणो यङ्लुकोः' । ततो बोभूयितुमिच्छतीत्य-
न्नर्थे सन् । इट् । णिच् । पुनः सन् । पुनरिट् । शबादि ।
यादि प्रयोगानुसारात् ज्ञेयम् ।

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा—
चार्यो यं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन् प्रसादे निरगमदमला प्रक्रिया नामधातोः ॥

---

१. यङः C. २. After it—ज्ञेयम् P, $D_3$; N drops इत्यादि.

## अथ पदव्यवस्था ।

### अनुपराभ्यां कृञः ॥१।३।७९॥

आभ्यां[1] कृञः परस्मैपदं स्यात् कर्तृगेपि फले[2] । ग
नादावपि ॥ अनुकरोति । पराकरोति ।

### अभिप्रत्यतिभ्यः क्षिपः ॥१।३।८०॥

कर्तृगेपि फले[3] परस्मैपदम् ।[4] अभिक्षिपति ।
प्रति[5] अति ।

### प्राद्वहः ॥१।३।८१॥

प्रवहति ।

---

अथ पदव्यवस्था । तत्र प्राधान्यादल्पत्वाच्च सूचीकटाह
परस्मैपदं तावदाह—

अनु । कर्त्रभिप्राये क्रियाफले गन्धनादिषु च करोतेरा
विहितं तदपवादः परस्मैपदं विधीयते ।

अभि । क्षिप प्रेरणे । स्वरितेत् । अस्मात् कर्तृगे फले आ
प्राप्ते परस्मैपदं विधीयते । अभिक्षिपतीति । 'तुदादिभ्यः श
अभिप्रत्यतिभ्यः किम् । आक्षिपते । कर्तृग्रहणमनुवर्तते । तेन
अभिक्षिप्यते ।

प्राद्वहः । वह प्रापणे । स्वरितेत् । अस्मात् परस्मैपदं
स्यात् । प्रवहतीति । शप् ।

---

१. After it—परस्य C. २. कर्तृगे फलेपि C, D2, D3, N1; कर्तृ
फले D1; कर्तृगे फले B2. ३. कर्तृगामिफले D1; कर्तृगे फलेपि D3. ४.
it—स्यात् D2 ; क्षिपः परस्मैपदं स्यात् D3. ५. प्रतिक्षिपति । एवमति

**परेर्मृषः ॥१।३।८२॥**

परिमृष्यति ॥ वहेरपि । परिवहति ।

**व्याङ्परिभ्यो रमः ॥१।३।८३॥**

विरमति । आरमति । परिरमति ।

**उपाच्च ॥१।३।८४॥**

उपपूर्वाद्रमतेरन्तर्भूतण्यर्थात् परस्मैपदं स्यात् ॥ यज्ञदत्तमुपरमति । उपरमयतीत्यर्थः ।

**विभाषाकर्मकात् ॥१।३।८५॥**

उपाद्रमोऽकर्मकाद्वा परस्मैपदं स्यात् ॥ उपरमति । उपरमते । निवर्तत इत्यर्थः ।

---

**परेः** । मृष तितिक्षायाम् । स्वरितेत् । अस्मात् परस्मैपदं स्यात् परिपूर्वात् । **परिमृष्यतीति** । 'दिवादिभ्यः श्यन्' । **वहेरपीति** । परेरिति योगविभागाद्वहेरपि परिपूर्वात् परस्मैपदं स्यादित्यर्थः ।

**व्याङ्** । रमु क्रीडायाम् । अनुदात्तेत्त्वादात्मनेपदे प्राप्ते व्याङ्परिपूर्वात् परस्मैपदम् ।

**उपात्** । 'विभाषाकर्मकात्' इत्यनेनोपपूर्वाद्रमेरकर्मकादेव आत्मनेपदं वक्ष्यति । तस्मादत्र सकर्मकादेवात्मनेपदं स्यात् । सकर्मकत्वं चोपपूर्वस्य रमेर्ण्यर्थं विना न घटत इत्यभिप्रेत्याह—अन्तर्भूतण्यर्थादिति । बुद्ध्यादावनुप्रविष्टण्यर्थादित्यर्थः । पृथग्योगकरणमुत्तरार्थम् ।

**विभाषा** । पूर्वेण नित्ये प्राप्ते विकल्पः ।

---

१. Before it—परस्मैपदं स्यात् $N_1$. २. Before it—परस्मैपदं स्यात् $N_1$. ३. Before it—यावद्बुक्तम् $N_1$.

## बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः ॥१।३।८६॥

एभ्यो णेः पूर्वमचित्तवत्कर्तृकेभ्योचलनार्थेभ्योपि ण्यन्तेभ्य परस्मैपदं स्यात् ॥ बोधयति पद्मम् । योधयति काष्ठम् विन्[१]ाशयति । [२]जनयति । [३]अध्यापयति । प्रावयति । द्रावयति स्रावयति ।

## निगरणचलनार्थेभ्यश्च ॥१।३।८७॥

अणौ सकर्मकेभ्योचित्तवत्कर्तृकेभ्योपि [४]अदनकम्पन थेभ्यो ण्यन्तेभ्यः कर्तुः फलेपि परस्मैपदं स्यात् ॥ भोजयति

---

बुध । 'णिचश्च' इत्यात्मनेपदे प्राप्ते परस्मैपदं विधीयते । बु अवगमने । युध संप्रहारे । णश अदर्शने । जनी प्रादुर्भावे । इ अध्ययने । प्रुङ् गतौ । द्रु गतौ । स्रु गतौ ।[५] ये चात्राकर्मकाः बुधयुधन जनास्तेषाम् 'अणावकर्मकात्—' इत्येव सिद्धे वचनमचित्तवत्कर्तृका मित्याह—अचित्तवत्कर्तृकेभ्य इति । प्रुङ्द्रुस्रुवः चलनार्था अपि । ते 'निगरण—' इत्येव सिद्धे यदा अचलनार्थास्तदर्थं वचनमित्याह- अचलनार्थेभ्य इति । बोधयतीति । विकासयतीत्यर्थः । विनाशयतील्य दुःखमिति ज्ञेयम् । जनयतीत्यत्र सुखं ज्ञेयम् । जनीजृष इति मित्त्व ह्रस्वः । अध्यापयतीति । 'क्रीङ्—' इत्यात्वम् । पुक् । प्रावयतीति प्रापयतीत्यर्थः । द्रावयतीति । विलापयतीत्यर्थः । स्रावयतीि स्यन्दयतीत्यर्थः । स्यन्दनं चलनमिति न प्रसिद्धं लोके ।[६]

निगरण । अयमपि योगः सकर्मकार्थोचित्तवत्कर्तृकार्थ त्याह—अणौ सकर्मकेभ्य इत्यादि । 'णिचश्च' इति कर्तृयोगे प प्राप्तस्यात्मनेपदस्यापवादोयमित्याह—कर्तुः फलेपीत्यादि । भोजयती

---

१. नाशयति पापम् । $N_1$. २ दुःखं जनयति $B_2$. ३. सुखमध्यापयति
४. निगरणार्थेभ्यः कम्पार्थेभ्यो C. ५. After it—श्रु श्रवणे $Dc_3$. ६. च प्रसिद्धं लोके $Dc_3$.

चेलयति ॥ अत्तेर्निषेधः ॥* आदयते ।

अणावकर्मकाच्चित्तवत्कर्तृकात् ॥१।३।८८॥

णेः पूर्वमकर्मकात् चित्तवत्कर्तृकात् ण्यन्तात् परस्मैपदं स्यात् ॥ शेते कृष्णः । शाययति कृष्णं गोपी । अकर्मकात् किम् । भक्तिं कारयते । प्राणिकर्तृकात् किम् । शोषयते शालिं वायुः । अणौ किम् । रूपयन्तं प्रयोजयति । रूपयते हरिः ।

---

भुज पालनाभ्यवहारयोः । चलयतीति । चल कम्पने । घटादित्वान्मित्त्वम् । ततो ह्रस्वः । आदयत इति । अद भक्षणे ।

अणौ । शाययतीति । शीङ् स्वप्ने । शोषयत इति । शुष शोषणे । रूपयत इति । रूप रूपकरणे । चुरादिः । णावकर्मकः । काशिकाकारमते हेतुमण्णिच्येव योऽकर्मकस्तस्यैव पुनर्हेतुमण्णिचि कृते प्रत्युदाहरणत्वम् । तथा ह्याह जयादित्यः काशिकायाम् । 'चेतयमानं प्रयोजयति चेतयते इति केचित् प्रत्युदाहरन्ति । तदयुक्तम् । हेतुमण्णिचो विधिः । प्रतिषेधोपि प्रत्यासत्तेस्तस्यैव न्याय्यः । तस्मादिह चेतयतीति परस्मैपदेनैव भवितव्यम् । इदं तु प्रत्युदाहरणम् । आरोहयमाणं प्रयोजयति आरोहयते' इति । आरोहयमाणमित्यस्य स्वयमेवारोहत इत्यर्थः । आचार्यवर्यैस्तु भेदस्याविवक्षया णिग्रहणं णिजातेराश्रयणादिति मन्वानैः प्रत्युदाहृतम् । तथा 'णेरणौ—' इत्यस्मिन् सूत्रे अनेनैव प्रत्युदाहृतम् । अणाविति किम् । गणयति गोपालको गणम् । गणयति गणः स्वयमिति । न्यासकारेण च णिजात्याश्रयणादेव समर्थितम् ।

---

१. चालयति मरुत्पर्णम् ; $B_2$, $D_4$; चलयति मरुत्पर्णम् N, (marginal note—घटादित्वान्मित्व ततो ह्रस्वः); चलयति Com. २. C drops it.
३. Before it—कर्तुःफलेपि $D_2$, $D_4$, $B_2$ ; कर्तुः फले $N_1$.

न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः ॥१।३।८९॥

सूत्रद्वयोक्तलक्षणवद्भ्योऽपि पादिभ्यो ण्यन्तेभ्यः कर्तृगे फले परस्मैपदं न स्यात् ॥[1] पाययते । दमयते । आयामयते आयासयते । परिमोहयते । रोचयते । नर्तयते । वादयते । वासयते धेटोऽपि निषेधः ॥* धापयते । अकर्तृः फले परस्मैपदं स्यादेव सोमं पाययति याज्ञिकः ।[5]

---

न पा । पा इति लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणमिति पा पाने इत्ययं गृह्यते । न पा रक्षणे । दमु उपशमे । यम उपरमे । यसु प्रयत्ने । एतावाङ्पूर्वौ । मुह वैचित्त्ये । परिपूर्वः । रुच दीप्तौ । नृती गात्रविक्षेपे । वद व्यक्तायां वाचि । वस निवासे भौवादिकः । न वस आच्छादने । अदादिकः । पूर्वोक्ताद्धेतोः सूत्रद्वयोक्तेति । ' निगरणचलनार्थेभ्यश्च ' ' अणावकर्मकाच्चित्तवत्कर्तृकात् ' इति सूत्रद्वयोक्तलक्षणवद्भ्य इत्यर्थः । तत्र पिबतिर्निगरणार्थः दमप्रभृतयश्चित्तवत्कर्तृकाः । नृतिश्चलनार्थः । पाययत इति । 'शाच्छासा— इति युक् । दमयत इति । अमन्तत्वान्मित्त्वम् । ततो ह्रस्वः आयामयत इति । यमोऽपरिवेषणे इति मित्संज्ञानिषेधः । ङित्त्विशिष्टस्याकारस्योपादानमुपसर्गप्रतिपत्त्यर्थम् । धापयत इति । धेट् पाने आत्वम् । ' अर्तिह्री—' इति पुक् । अकर्तुरित्यादि । कर्त्रभिप्रायात्मनेपदापवादः परस्मैपदं तस्यैव निषेधात् ॥

इति परस्मैपदम् ॥

---

१. After this—पिबतिश्चलनार्थः । दमिप्रभृतयः चित्तवत्कर्तृकाः । नृतिश्चलनार्थः $B_2$, $D_4$ (चलनार्थोऽपि $D_4$.) २. पाययते सकृत् पयः । दमयते । दाम्यति देवदत्तः । तमन्यः । दमु उपशमे । $N_1$. ३. Before it—यमोऽपरिवेषणे मित्संज्ञा प्रतिषिध्यते ।. ४. याजकः N, $D_2$, $D_4$, $B_2$. ५. After it—इति परस्मैपदम् $N_1$, $D_4$.

कर्तरि कर्मव्यतिहारे ॥१।३।१४॥

धातोः कर्तर्यप्यात्मनेपदं स्यात् क्रियाया विनिमये ॥
यतिभवते ।[1] श्नसोरल्लोपः । व्यतिस्ते । व्यतिषाते ।[2]व्यतिषते ।
।सस्त्योरिति सलोपः । व्यतिसे । धि च । व्यतिध्वे । ह एति ।
यतिहे । व्यतिषीत । [3]व्यत्यसै । व्यत्यास्त ।[4] व्यतिराते ।

---

अथात्मनेपदम् । कर्तरीति । कर्मशब्दः क्रियावाची न पारि-
षिककर्मवाचीत्याह—क्रियाविनिमय इति । अन्येन कर्तुमिष्टां
यामन्यः करोति इतरसंबन्धिनीं चेतरः । स व्यतिहारस्तद्विशिष्ट-
यावचनाद्धातोरात्मनेपदं स्यादित्यर्थः । व्यतिस्ते इति । अस
वि । अकारे लुप्ते 'सात्पदाद्योः' इति षत्वनिषेधः । व्यतिषत
ते । 'आत्मनेपदेष्वनतः' इत्यत् । 'उपसर्गप्रादुर्भ्याम्' इति षः ।
तिसे इति । अकारसकारयोर्लुप्तयोः स इति प्रत्ययमात्रं पदमिति
त्वनिषेधः । व्यतिस्वहे । व्यतिस्महे । व्यतिषीतेति । 'लिङः
युट्' । अल्लोपः । षत्वम् । व्यतिषीयाताम् । व्यतिषीरन् ।
यादि । व्यतिस्ताम् । व्यतिषाताम् । व्यतिस्व । व्यतिषाथाम् ।
तिध्वम् । व्यत्यसै इति । लोडुत्तमैकवचनम् । इट् ।
वम् । 'एत ऐ' । 'आडुत्तमस्य' इत्याट् । वृद्धिः ।
त्वादल्लोपाभावः । यण् । व्यत्यसावहै । व्यत्यसामहै ।
त्यास्तेति । लङ् । आट् । व्यत्यासाताम् । इत्यादि । लुङादौ
स्तेर्भूः । व्यत्यभविष्ट । व्यतिबभूवे । व्यतिभवितासे । व्यति-
वेषीष्ट । व्यतिभविष्यते । व्यत्यभविष्यत । व्यतिरात इति ।

---

१. कर्तर्यात्मने° P; $D_2$, $B_2$. २. क्रियाविनिमये $B_2$, N, Com. ३. After
—चन्द्रार्कौ । अर्केण चिकीर्षितं चन्द्रः करोतीत्यर्थः । $N_1$. ४. $D_2$ drops it.
लोपः C. ६. व्यत्यतिस्ताम् C. ७. After it—व्यत्यासाताम् । व्यत्या-
। व्यतिसते । व्यतिससे । व्यतिरासे । व्यतिरै । आलोपपक्षे । व्यतिरे $B_2$.

येतिरासे । व्यतिरै । आलोपपक्षे । व्यतिरे ।

**ईडजनोर्ध्वे च ॥७।२।७८॥**

ह्रादित्वाज्जनेर्द्वित्वम् ॥ व्यतिजज्ञिषे । व्यतिजज्ञिध्वे ।[3] यतिजज्ञिष्व ।

**न गतिहिंसार्थेभ्यः ॥१।३।१५॥**

[4] एभ्यः क्रियाविनिमयेपि नात्मनेपदं स्यात् ॥ [5] व्यतिसर्पन्ति । यतिघ्नन्ति ॥ हसादीनां [6] च ॥* व्यतिहसन्ति । एवं जल्पपठी [7] ।

---

ा आदाने । अदादित्वाच्छपो लुक् । व्यतिराते प्रथमपुरुषैकवचनम् यति रा आते । सवर्णदीर्घे कृते द्विवचनमपि तथैव । 'आत्मने- ादेष्वनतः' इत्यत् । सवर्णदीर्घे कृते बहुवचनमपि तथा । जनेरिति नन जनने । अस्य व्यतिजजाते । व्यतिजज्ञाते । व्यतिजज्ञाथे यतिजज्ञे । [8] व्यतिजजन्महे । व्यतिजज्ञीत । व्यतिजजाताम् । व्यति- जज्ञाताम् । व्यतिजज्ञताम् ।

व्यतिजज्ञिष्वेति । 'ईडजनोर्ध्वे च' इतीट् । व्यत्यजजात व्यत्यजज्ञाताम् । व्यत्यजज्ञत । व्यत्यजनिष्ट । व्यतिजज्ञे । व्यतिजनिता व्यतिजनिषीष्ट । व्यतिजनिष्यते । व्यत्यजनिष्यत । कर्मव्यतिहा किम् । लुनन्ति । कर्तृग्रहणमुत्तरार्थम् । शेषात् कर्तरि परस्मैपदम्

न गति । पूर्वेण प्राप्तमात्मनेपदं निषिध्यते । व्यतिसर्पन्तीति सृप्लृ गतौ । व्यतिघ्नन्तीति । हन हिंसागत्योः । 'गमहन— इत्युपधालोपः । हसादीनामिति । हसप्रकाराणां शब्दार्थानामित्यर्थः अत एवाह —एवं जल्पपठी इति । जल्प व्यक्तायां वाचि । पठ पठने

---

१. Before it—उपसर्गप्रादुर्भ्यामस्तिर्यच्परः । $D_3$. २. Before it—व्यति जजाते । व्यतिजज्ञते । N. ३. After it—व्यतिजजन्वहे । व्यतिजज्ञिष्व व्यतिजज्ञिध्वम् । व्यतिजजने । व्यतिजजनावहे N; व्यतिजज्ञिष्व । व्यति जज्ञिध्वम् । $D_4$, Com. ४. Dropped $N_1$. ५. अन्योन्यं व्यतिगच्छन्ति ६. च न $B_2$, $N_1$ ७. पठ C. ८. Before it—व्यतिजजन्वहे $Dc_3$.

हरतेर्न निषेधः । संप्रहरते । वहेर्न निषेध इति केचित् । व्यतिवहते ।

इतरेतरान्योन्योपपदाच्च ॥१।३।१६॥

आभ्यां युक्तात् क्रियाविनिमयेपि नात्मनेपदं स्यात् ॥ इतरेतरस्य अन्योन्यस्य वा व्यतिलुनन्ति । परस्परस्येष्टिः । परस्परस्य व्यतिलुनन्ति ।

नेर्विशः ॥१।३।१७॥

निपूर्वाद्विश आत्मनेपदं स्यात् ॥ निविशते ।

---

व्यतिजल्पन्ति । व्यतिपठन्ति । संप्रहरत इति । हिंसार्थत्वान्निषेधः प्राप्तो नेति भावः ।

इतरेतर । उपोच्चारितपदमुपपदम् । इतरेतरान्योन्ययुक्ताच्छब्दादित्यर्थः । व्यतिलुनन्तीति । लूञ् छेदने । 'श्नाभ्यस्तयोरातः' ।

नेः । निविशत इति । विश प्रवेशने । तुदादित्वाच्छः । न्यविशत । अत्राटा व्यवधानं नास्ति । तदागमास्तद्ग्रहणेन गृह्यन्त इति । नेरुपसर्गस्य ग्रहणम् । अर्थवद्ग्रहणे नानर्थकस्येति । तेनेह न । मधुनि विशन्ति भ्रमराः ।

---

१. व्यतिसंप्रहरते C; संप्रहरन्ते $N_1$, $D_4$. २. व्यतिवहन्ते $D_4$. ३. इतरेतरान्योन्योपपदात् $D_1$. ४. आत्मनेपदं न स्यात् $D_1$. ५. After it—यदागमास्तद्ग्रहणेन गृह्यन्ते । तेनाटा नास्ति व्यवधानम् । न्यविशत $N_1$, C and $D_1$, C has additional matter after न्यविशत—नेरुपसर्गस्य ग्रहणम् । अर्थवद्ग्रहणेनानर्थकस्य ग्रहणमिति । तस्मादिह न भवति मधुनि विशन्ति भ्रमराः ।

## परिव्यवेभ्यः क्रियः ॥१।३।१८॥

एभ्यः क्रीणातेस्तङानौ स्तः ॥ इहोभयपदिनामात्म पदमकर्त्रभिप्रायार्थम् । परिक्रीणीते । एवं वि अव ।

## विपराभ्यां जेः ॥१।३।१९॥

विजयते । पराजयते ।[2]

## आङो दोनास्यविहरणे ॥१।३।२०॥

आङ्पूर्वाद्दात्र आत्मनेपदं स्यात् न तु मुखप्रसारणेर्थे आदत्ते । मुखप्रसारणे तु व्याददाति मुखं कृष्णः

---

परि । डुक्रीञ् द्रव्यविनिमये । परिक्रीणीत इति । ' ई हल्यघो पर्यादय उपसर्गा गृह्यन्ते । कथम् । ' क्रियः ' इति संबन्धे षष्ठी । क्रियः संबन्धिनो ये पर्यादयः। संबन्धश्चार्थद्वारको विशेषणविशेष्यभा स च उपसर्गैरेव क्रियः संभवति । अत उपसर्गा एव । तेनेह बहवो वयो यस्मिन् धने तत् बहुवि क्रीणाति धनमिति ।

विपराभ्याम् । ' शेषात्—' इत्यस्यापवादः । विजयत इ जि जये । अत्राप्युपसर्गावेव । तेनेह न । बहुवि जयति धन परा जयति सेना ।

आङः । अकर्त्रभिप्रायार्थमारम्भः । ददातेरेवास्यवि वृत्तिर्नान्येषां दारूपाणाम् । तस्मादास्यविहरणप्रतिषेधेन तस्यैव विज्ञायत इत्याह—दात्र इति । आदत्ते इति । ' आभ्यस्त

---

१. परिव्यवेभ्यः परस्मात् क्रीणातेरात्मनेपदं स्यात् । परिक्रीणीते । विक्री अवक्रीणीते । $N_1$. २. Before it—विपराभ्यां जयतेरात्मनेपदं स्यात् ३. After this—विपराशब्दौ उपसर्गौ गृह्येते साहचर्यात् तेनेह न स्य बहु विजयति वनम् । पराजयति सेनेति ।

मुखप्रसारणसादृशादपि न । विपादिकां व्याददाति । स्वाङ्गकर्मका-
देव निषेधः । नेह । व्याददते पिपीलिकाः पतङ्गस्य मुखम् ।

क्रीडोनुसंपरिभ्यश्च ॥१।३।२१॥

एभ्यः क्रीडस्तङानौ स्तः ॥ अनुक्रीडते । एवं संपरि ।
चकारादाङोपि । आक्रीडते । अवादपि केचित् । अवक्रीडते ॥
समोकूजने ॥* संक्रीडते । कूजने तु संक्रीडति चक्रम् । आगमेः
क्षमायाम् ॥* आगमयते कालम् ॥ आशिषि नाथः ॥*

---

व्याकारलोपः । चर्वम् । व्याददाति । प्रसारयतीत्यर्थः । विपादिका
ादस्फोटः । स्वाङ्गकर्मकादिति । नात्राद्रवादिकं स्वाङ्गं विवक्षितम् ।
किं तर्हि । स्वमङ्गं स्वाङ्गं तत् कर्म यस्य स स्वाङ्गकर्मकः । तेन
रसंबन्धिना मुखेन यदा सकर्मको भवति तदात्मनेपदं स्यात् ।
यादद्ते पिपीलिकाः पतङ्गस्य मुखमिति ।

क्रीडः । क्रीड व्यवहारे । यद्यन्वादिरुपसर्गत्वं व्यभिचरति
शब्दस्तु न व्यभिचरति । अतस्तत्साहचर्यादन्वादिरप्युपसर्गः । तेन
र्मप्रवचनीयप्रयोगे न स्यात् । माणवकमनु क्रीडतीति । माणवकेन
ह क्रीडतीत्यर्थः । 'तृतीयार्थे' इति कर्मप्रवचनीयसंज्ञा । अवादिति ।
थोक्तं मुग्धबोधे 'पर्यन्ववाङः क्रीडः' इति । आगमेरिति ।
मेराङ्पूर्वाण्ण्यन्तादात्मनेपदं स्यात् । क्षमा उपेक्षा । कालहरणं
रीक्षणमित्यर्थः । आगमयत इति । परीक्षत इत्यर्थः । अमन्त-
शान्मित्संज्ञायां ततो ह्रस्वः । लट् । अन्यत्र विद्यामागमयति ।
नन्तस्य शकेर्जिज्ञासायामिति च वक्तव्यम् । विद्यासु शिक्षते ।
द्या जिज्ञासितुं घटत इत्यर्थः । 'सनिमी—' इति इस् । अभ्यास-
ोपः । आशिषीति । नाथ याच्ञोपतापैश्वर्याशीःषु इत्यनुदात्तेत् ।

---

१. °सदृशेपि न $D_2$, $D_4$. २. पिपिलिकयः C. ३. पतङ्गमुखम् C, P.
°दिति $N_1$, $D_4$. ५. $D_2$, $D_4$, $N_1$, $B_2$ drop it and have after
—क्षमायां किम् । विद्यामागमयति । ; P drops it. ६. विद्या $Dc_1$.

सर्पिषो नाथते ।[1] हरतेर्गत्यनुकारे ॥*[2] पैतृकमनुहरते अश्वः । किरतेर्हर्षजीविकाकुलायकरणेषु आत्मनेपदम् ॥*

अपाच्चतुष्पाच्छकुनिष्वालेखने ॥६।१।१४२॥

अपात् किरतेः सुट् स्याच्चतुष्पाच्छकुनिकर्तृके आलेखनेर्थे[3] अपस्किरते वृषो हृष्टः ।[4] कुक्कुटो भक्षार्थी[5] ।[6] श्वा आश्रयार्थी[7] । अन्यमल्लोपाकिराति । गजोपाकिरत्यम्भः । आङि नुमच्छोरिष्टिः ॥

---

तत्रानुदात्तत्वादेवात्मनेपदे सिद्धे आशिष्येव नाथतेरात्मनेपदं न याच्ञादिष्विति[8] नियमार्थमेतत् । सर्पिष इति । 'आशिषि नाथः' इति षष्ठी । पैतृकमिति । पितृवद्गमनस्वभावामित्यर्थः । पितुरागतम् 'ऋतष्ठञ्' । 'इसुसुक्तान्तात्कः' । गतीति किम् । स्वरूपानुकरणे मा भूत् । पैतृकमनुहरतीति । पदमञ्जरीकारमते गतिशब्दः प्रकारवाची । प्रकारस्ताच्छील्यमित्यर्थः । किरतेरिति । कॄ विक्षेपे । अस्य विक्षेप एवार्थः । हर्षादयस्तु विषयाः । तत्र हर्षो विक्षेपहेतुः जीविका कुलायकरणं च फलम् ।

अपात् । हर्षजीविकाकुलायकरणेष्विति वाच्यम् । अपस्किरत इति । तुदादित्वाच्छः । 'ऋत इत्' । रपरः मल्लोपकिरतीति[9] । अत्र चतुष्पात्त्वं हर्षादयोपि न सन्ति गजोपकिरतीति । अत्र हर्षाद्यभावः । चतुष्पात्त्वमस्त्येव

---

१. After it—आशिषि किम् । नाथति । याचते इत्यर्थः । इह याच्ञा मा भूत् । N₁, D₂, D₄, B₂. २. After it—गत्यनुकार इति किम् हरतीति स्वरूपानुकरणे मा भूत् । D₂, D₄, B₂ (अनुहरतीति B₂, D₄ अनु सादृश्येपि । तुर्गतिमनुकरोतीत्यर्थः । गत्यनुकार इति किम् । अनुहरतीति स्वरूपानुकारे मा भूत् N₁. ३. °कर्तृकेर्थे (आलिखनेर्थे dropped) D ४. Before it—जीविकायाम् C. ५. भक्ष्यार्थी C; भिक्षार्थी D ६. Before it—कुलायकरणे C. ७. आश्रयार्थी वा । D₃, N ८. याच्ञा° Dc₁. ९. मल्लोपः किर° Dc₃.

ओनुते । आपृच्छते । शप उपालम्भे ॥* विप्राय शपते ।[2]

**समवप्रविभ्यः स्थः ॥१।३।२२॥**

एभ्यस्तिष्ठतेस्तङानौ स्तः ॥ संतिष्ठते । समस्थित । एवं अव प्र वि । आङः प्रतिज्ञाने ॥* नित्यं शब्दमातिष्ठते ।[5]

**प्रकाशनस्थेयाख्ययोश्च ॥१।३।२३॥**

स्वाभिप्रायाविष्करणे निर्णेत्राख्यायां च स्थस्तङानौ स्तः ॥ कृष्णाय तिष्ठते गोपी । त्वयि तिष्ठते विवादः ।

---

आनुत इति । उत्कण्ठापूर्वकं शब्दं करोतीत्यर्थः । शप इति । वाचा शरीरस्य स्पर्शनमुपालम्भः शपथविशेषः । तथा हि । विप्रस्य शरीरं स्पृशामीति शपथं कुर्वाणो विप्राय शपत इति प्रयुज्यते । 'श्लाघह्नुङ्स्था—' इति संप्रदानसंज्ञायां विप्रायेति चतुर्थी । अन्यत्र शपत्याक्रोशतीत्यर्थः ।

**समव** । **संतिष्ठत** इति । 'पाघ्रा—' इति तिष्ठादेशः । समस्थितेति । लुङ् । 'स्थाघ्वोरिच' इतीदन्तादेशः । सिच्च कित् । 'ह्रस्वादङ्गात्' इति सिचो लोपः । **नित्यमिति** । मीमांसको नित्यशब्दं प्रतिजानीत इत्यर्थः ।

**प्रकाशन** । स्वाभिप्रायकथनं प्रकाशनम् । तिष्ठत्यस्मिन्निति स्थेयः । विवादपदनिर्णेता लोके रूढः । तस्य प्रतिपत्त्यर्थमाख्याग्रहणमिति प्रकाशनस्थेयाख्याशब्दार्थमभिप्रेत्याह—**स्वाभिप्रायेति** । कृष्णाय तिष्ठत इति । स्वाभिप्रायाविष्करणं करोतीत्यर्थ । 'श्लाघ—' इति संप्रदानसंज्ञा चतुर्थी । त्वयीत्यादि । अस्माद्विवादस्य त्वमेव निर्णेतेत्यर्थः ।

---

१. आनुते शृगालः । शब्दं करोतीत्यर्थः $N_1$. २. After it—अन्यत्र शपति ; उपालम्भ इति किम् । शपति इत्याक्रोशो मा भूत् $D_2$, $B_2$; उपालम्भने इति किम् । शपतीत्याक्रोशो मा भूत् । $N_1$, $D_4$. ३. प्र अव वि $D_1$. ४. आङः स्थः प्रति° $D_3$. ५. After it—मीमांसकः $B_2$.

**उदोनूर्ध्वकर्मणि ॥१।३।२४॥**

उदस्तिष्ठतेस्तङानौ स्तः अनूर्ध्वक्रियायाम् ॥ उ
ईहायामिष्टिः ॥* मुक्तावुत्तिष्ठते । ईहायां किम् । ग्रामाच्छत
मुत्तिष्ठति । अनूर्ध्वक्रियायां किम् । आसनादुत्तिष्ठति ।

**उपान्मन्त्रकरणे ॥१।३।२५॥**

उपात् स्थस्तङानौ स्तः मन्त्रकरणे । गायत्र्योप
तिष्ठतेर्कम् । मन्त्रकरणे किम् । यौवनेनोपतिष्ठति पतिम् ।

उपाद्देवपूजासंङ्गमैत्रीकरणपथिष्विति वक्तव्यम् ॥* विष्णु
मुपतिष्ठते । यमुना गङ्गामुपतिष्ठते । सन्तमुपतिष्ठते । गङ्गामुपतिष्ठ
पन्थाः ॥ लिप्सायां वा ॥* भिक्षुर्धार्मिकमुपतिष्ठते उपतिष्ठति वा

---

उदः इति । उत्पूर्वात्तिष्ठतेरीहायां परिस्पन्दे वर्तमानादात्मने
पदस्येष्टिरित्यर्थः । ईहाग्रहणमनूर्ध्वक्रियाविशेषणम् । ईहात्मिकायामनूर्ध्व
क्रियायामिति । **मुक्तावुत्तिष्ठत** इति । तदर्थे घटते इत्यर्थः
**ग्रामादित्यादि** । उत्पद्यत इत्यर्थः ।

**उपात्** । मन्त्रः करणं साधकतमं यस्य धात्वर्थस्य स तथा
मन्त्रकरणे किम् । यौवनेनोपतिष्ठति ।

**उपादिति** । देवस्य पूजा देवपूजा । सङ्ग उपश्लेषः । मित्रस्य
कर्म मैत्रम् । पन्था मार्गः । स कर्ता भाव्यः । **विष्णुमित्यादि**
पूजयतीत्यर्थः । **यमुनेत्यादि** । संगता भवतीत्यर्थः । **सन्तमिति**
मैत्रं करोतीत्यर्थः । **गङ्गामिति** । प्राप्नोतीत्यर्थः । **लिप्सायामिति**
लब्धुमिच्छा लिप्सा । तस्यां गम्यमानायां वात्मनेपदमित्यर्थः । **भिक्षु**
**रित्यादि** । लिप्सायां जातायां धार्मिकमुपसंक्रामतीत्यर्थः ।

---

१. अनूर्ध्वे क्रियायां $D_2$. २. तिष्ठते° $D_1$. ३. After it—सति I
४. $D_1$ drops from मन्त्र°…पतिम्. ५. पतिमुपतिष्ठति यौवनेन C, I
यौवनेनोपतिष्ठति कृष्णं गोपी P. ६. सङ्गतिमित्रकरण° $N_1$. ७. महामात्रानु
तिष्ठते । मैत्रीकरणेन महामात्रानाराधयतीत्यर्थः । $N_1$.

अकर्मकाच्च ॥१।३।२६॥

उपपूर्वात् तिष्ठतेरकर्मकात्तङानौ स्तः ॥ ज्ञानमुपतिष्ठते ।[2]

उद्विभ्यां तपः ॥१।३।२७॥

आभ्यामकर्मकात्तपः प्राग्वत् ॥ उत्तपते । वितपते ।[4]
त्माङ्गकर्मकाच्चेष्टिः ॥* उत्तपते वितपते पाणिम् । अकर्मकात्
ाङ्गकर्मकात् किम् । महीं वितपत्यर्कः ।

आङो यमहनः ॥१।३।२८॥

आङः पराभ्यामकर्मकाभ्यामाभ्यां तङानौ स्तः ॥
यच्छते । आहते । आघ्नते ।[6] आत्माङ्गकर्मकाभ्यां च ॥*

---

अकर्मकात् । अकर्मकादकर्मकक्रियावचनादित्यर्थः । ज्ञान-
तिष्ठत इति । संनिधीयत इत्यर्थः । अकर्मकात् किम् ।
मुपतिष्ठति ।

उद्विभ्याम् । उद् वि एताभ्यां परादकर्मकक्रियावचनात् तप
ाप इत्यस्माद्धातोरात्मनेपदं स्यादित्यर्थः । उत्तपते । वितपते
। दीप्यत इत्यर्थः । उद्विभ्यां किम् । निष्टपति । 'निसस्तपता-
ासेवने ' इति षः ।

आङः । आयच्छत इति । यम उपरमे । 'इषुगमि—'
छः । आहत इति । 'अनुदात्तोपदेश—' इत्यनुनासिकलोपः ।
घ्नत इति । 'आत्मनेपदेषु—' इति झस्यादादेशः ।

---

१. यावद्भुक्तमुपतिष्ठते । अकर्मकादिति किम् राजानमुपतिष्ठति । $N_1$.
After it—अकर्मकादिति किम् । राजानमुपतिष्ठति $D_2$, $D_4$, $B_2$. २. पूर्व-
$D_2$. ४. After it—दीप्यत इत्यर्थः C. ५. °कर्मकाच $D_4$. ६. वितपति
: $D_1$. ७. आघ्नाते । आघ्नते । $D_3$, $D_4$. ८. After it अकर्मकादिति
् । आयच्छाति कूपाद्रज्जुम् $B_2$; अकर्मकात् किम् । आयच्छाति
द्रज्जुम् । $N_1$, $D_4$ (अकर्मकादिति $D_4$.)

आयच्छते पाणिम् । आहते शिरः ॥

**हनः सिच् ॥१।२।१४॥**

हन्तेः परः सिच् कित् स्यात् ॥ कित्त्वादनुनासिकलं ह्रस्वादङ्गात् । आहत । आहसाताम् ।

**आत्मनेपदेष्वन्यतरस्याम् ॥२।४।४४॥**

हन्तेर्वधादेशो वा स्यादात्मनेपदे लुङि ॥ अवधिष्ट ।

**यमो गन्धने ॥१।२।१५॥**

सूचनार्थाद्यमः सिच् कित् स्यादात्मनेपदेषु ॥ उद अकर्मकाभ्यामात्माङ्गकर्मकाभ्यां किम् । शत्रुमाहन्ति । आयच्छति ।

---

'गमहन—' इत्युपधालोपः । 'हो हन्तेः—' इति कुः

आत्मेति । आत्मनः स्वस्याङ्गं तत् कर्म ययोस्ताभ्यामि आहतेति । लुङ् ।

**यमः** । सूचनं परदोषाविष्करणम् । उदायत इति । प्रकटितवानित्यर्थः । **समः** । समो गम्यृच्छिभ्याम् इत्येव अन्यद्वार्तिकम् । अत्र समुच्चयेनोक्तिस्तु सूत्रकारवार्तिक साम्यद्योतनाय । गम्लृ गतौ । ऋच्छ गतीन्द्रियप्रलयमूर्तिभ प्रच्छ ज्ञीप्सायाम् । स्वृ शब्दोपतापयोः । ऋ गतिप्राण भ्वादिजुहोत्याद्योर्ग्रहणम् । श्रु श्रवणे । विद ज्ञाने । ग परस्मैपदिभिः साहचर्यान्न लाभार्थः । **संगच्छत** इति । 'इषु इति छः ।

---

१. °देशः स्याद्वा $D_1$. २. आवधिष्ट $N_1$. ३. उदायत । गन्धन इ आयंस्त कूपाद्रज्जुम् । $N_1$; उदायत $D_3$. ४. °काभ्यामिति $N_1$. ५. प्रकटितवानित्यर्थः । उपरायतेति आहतेतिवत् प्रक्रिया । समः गम्यृच्छिभ्यामित्येव सूत्रम् । ऋ गतौ° &c. $Dc_3$.

**समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः ॥ ॥१।३।२९॥**

एभ्यः संपूर्वेभ्योऽकर्मकेभ्यस्तङानौ स्तः ॥ संगच्छते ।

**वा गमः ॥१।२।१३॥**

गमः परौ लिङ्सिचौ कितौ वा स्त आत्मनेपदेषु ॥ अनुदात्तोपदेशेति मलोपः। समगत। समगंस्त। संगसीष्ट। संगंसीष्ट। समृच्छते । संपृच्छते । संस्वरते । समियृते । सर्तीत्यङ् । समारत । समारेताम् । संशृणुते । संवित्ते ।

**वेत्तेर्विभाषा ॥७।१।७॥**

वेत्तेः परस्य झादेशस्यातो रुडागमो वा स्यात् ॥ संविद्रते । संविदते ॥ दृशेर्वाच्यम् ॥* संपश्यते । अकर्मकेभ्यः किम् । गङ्गां संगच्छति ।

**निसमुपविभ्यो ह्वः ॥१।३।३०॥**

अकर्मकादिति निवृत्तम् । एभ्यो ह्वेञः प्राग्वत् ॥

---

**समगतेति** । लुङ् । 'ह्रस्वादङ्गात्' इति सिचो लुक् ।

**संगसीष्टेति** । आशीर्लिङ् । अनुनासिकलोपः । **संपृच्छत** इति । संप्रसारणम् । **समियृत** इति । 'जुहोत्यादिभ्यः श्लुः' । 'श्लौ' इति द्वित्वम् । 'अर्तिपिपर्त्योः' इतीत्वम् । 'अभ्यासस्यासवर्णे' इतीय् । **समारतेति** । 'ऋदृशोऽङि गुणः' ।

**संविद्रत** इति । 'आत्मनेपदेषु—' इत्यत् । **संपश्यत** इति दृशिर् प्रेक्षणे । 'पाघ्रा —' इति पश्यः ।

**निसमु** । अकर्त्रभिप्रायार्थ आरम्भः । ह्वेञ् स्पर्धायां शब्दे च

---

१. गमृ° N. २. N. Drops कितौ. ३. Before it—समृच्छते N ४. रुडागमः स्याद्वा $D_1$. ५. Dropped $N_1$. ६. संयच्छति $D_3$ ७. $D_1$ $D_3$, P drop इति.

निह्वयते । एवं सम् उप वि ॥ उपसर्गादस्यत्यूह्योर्वा व
निरस्यति । निरस्यते । समूहति । समूहते ।

**उपसर्गाद्ध्रस्व ऊहतेः ॥७।४।२३॥**

उपसर्गात् परस्य ऊहतेरणो ह्रस्वः स्यात् यादौ
ब्रह्म समुह्यात् ।

**स्पर्धायामाङः ॥१।३।३१॥**

आङो ह्वेञः प्राग्वत् स्पर्धायाम् ॥ कृष्णश्चाणूर
²स्पर्धायामिति किम् । ³गामाह्वयति ।

**गन्धनावक्षेपणसेवनसाहसिक्यप्रतिय
कथनोपयोगेषु कृञः ॥१।३।३२॥**

⁴हिंसात्मकसूचने भर्त्सनादौ च कृञः प्र

---

अस्मादात्मनेपदं स्यादित्यर्थः । एवं संह्वयते उपह्वयते
**निरस्यतीति** । असु क्षेपणे । दिवादिः । **समूहतीति** । ऊह

**स्पर्धायाम्** । पराभिभवेच्छा स्पर्धा । तस्यां गम्यमानाय
स्यादित्यर्थः । **कृष्ण** इत्यादि । स्पर्धमानस्तस्याह्वानं क
स्पर्धायां किम् । गामाह्वयति ⁵गोपालः ।

**गन्धन** । **हिंसात्मकसूचने** इति । हिनस्तीति हिंसः
हिंस आत्मा यस्य तत्तथोक्तं पीडाकरणम् । अथवा हिंसा
सूचनमेव हिंसास्वरूपमित्यर्थः । सूचनं च दोषाविष्करणम् ।
सूचनं गन्धनशब्दार्थः । भर्त्सनं तिरस्कारः अवक्षेपणशब्दार्थ
सेवनं परचित्तानुवृत्तिः । साहसिक्यम् । सहसा वर्तते

---

१. After it—स्यात् $D_3$. २ From स्पर्धा°...ह्वयति dr
३. ग्रामादाह्वयति P. ४. हिंसार्थे सूचने $D_2$; हिंसार्थं सूचने $D_1$;
$B_2$. ५. गोपालम् $Do_1$.

त्कुरुते। श्येनो वर्तिकामपकुरुते। विष्णुमुपकुरुते। परदारान् कुरुते। एधोदकस्योपस्कुरुते। गीताः प्रकुरुते।[2] शतं कुरुते। धर्मार्थं विनियुङ्क्त इत्यर्थः।[3] एषु किम्। कटं करोति।

अधेः प्रसहने ॥१।३।३३॥

अधेः कृञस्तङानौ स्तः शक्तौ॥ दैत्यानधिकुरुते विष्णुः।[6]

वेः शब्दकर्मणः ॥१।३।३४॥

शब्दः कर्मकारकं यस्य तस्माद्विपूर्वात् कृञः प्राग्वत्॥ ...रान् विकुरुते।[8]

---

...ोम्भ—' इति ठक्। तस्य भावः कर्म वा। ब्राह्मणादित्वात् ष्यञ्। विमृश्यकारित्वमित्यर्थः। सतो गुणान्तराधानं प्रतियत्नः। प्रकथनं ...र्षेण कथनम्। उपयोगो धर्मादौ विनियोगः। एष्वर्थेषु वर्तमानात् ...ञ आत्मनेपदं स्यादित्यर्थः। उत्कुरुते। सूचयतीत्यर्थः। ...पकुरुत इति। भर्त्सयते इत्यर्थः। उपकुरुत इति। सेवत इत्यर्थः। ...कुरुत इति। तेषु सहसा वर्तत इत्यर्थः। उपस्कुरुते इति। ...गान्तराधानं करोतीत्यर्थः। 'उपात् प्रतियत्ने' इति च सुट्। ...कृञः प्रतियत्ने' इति षष्ठी। प्रकुरुते इति। प्रकर्षेण कथयतीत्यर्थः। ...एषु किम्। कटं करोति।

अधेः। पृथग्योगकरणमधिविशेषणार्थम्। दैत्यानधिकुरुते ...ष्णुरिति। दैत्यानभिभवति। अथवा तान् पराजेतुं समर्थोऽपि न ...राजयते क्षमया इत्यर्थः।[9]

---

१. गाथाः D2, B2; गीतां N1, D3. २. N. drops शतं प्रकुरुते C, B2, ..., D3, D4. ३. एषु किम्...करोति dropped D3. ४. एष्विति D1, D2, ... ५. पदं N1. ६. After it- प्रसहने इति किम्। अर्थमधिकरोति। N1. ...तङानौ स्तः P; प्राग्वत् स्यात् D2. ८. After it—क्रोष्टा C, D2; ...er it—स्वरानुदात्तादीन् करोतीत्यर्थः P. ९. क्षमते इत्यर्थः Dc3.

अकर्मकाच्च ॥१।३।३५॥

वेः कृञोऽकर्मकात्तथा ॥ वायुर्विकुरुते । शब्दकर्मणे[1] किम् । चित्तं विकरोति कामः ।[2]

संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिवि-
व्ययेषु नियः ॥१।३।३६॥

पूजनोत्क्षेपणादौ णीञस्तङानौ स्तः । शास्त्रे[4] दण्डमुन्नयते । पुत्रमुपनयते । पदार्थान् नयते । भृत्यम्[5] करं विनयते । शतं विनयते ।[6]

---

अकर्म । वायुर्विकुरुत इति । शोभनं वातीत्यर्थः ।

संमानन । पूजनोत्क्षेपणादाविति । पूजनमर्चा शब्दार्थः । उत्क्षेपणमुत्क्षिप्योर्ध्वं नयनमुत्सञ्जनशब्दार्थः । आचार्यकरणमुपनयनम् । ज्ञानं प्रमेयं निश्चयः । भृतिर्वेतनम् ऋणादेः शोधनम् । व्ययो धर्मादिषु विनियोगः । संमानना भृतिषु नयत्यर्थस्य विशेषणेषु सत्सु उत्सञ्जनज्ञानावि नयत्यर्थेषु सत्सु णीञ् प्रापणे अस्मादात्मनेपदं स्यादित्यर्थ नयते इति । पदार्थानिति शेषः । युक्त्या स्थिरीकृत्य प्रापयतीत्यर्थः । ते युक्तिभिः स्थाप्यमाना पूजिता भवन् तेषाम् । दण्डमुन्नयत इति । उत्क्षिप्योर्ध्वं नयतीत्यर्थः । पुत्र आचार्यो भवन्नध्ययनायात्मनः समीपं प्रापयतीत्यर्थः । नयते इति । पदार्थलक्षणं प्रमेये[7] निश्चिनोतीत्यर्थः । भृत्य वेतनेनात्मसमीपं प्रापयतीत्यर्थः । करं विनयते । र निर्यातयतीत्यर्थः । शतं विनयते । धर्मार्थं विनियुङ्क्ते इत्य

---

१. After it—स्यात् $D_2$. २. After it—अनाश इति विकरोत्यर्थोऽयमिति नाशार्थस्य मा भूत् । N, $D_4$. ३. णिञ ४. शास्त्रं C. ५. $D_2$ drops शतं विनयते. ६. After it—ग्रकिम् । अजां नयति ग्रामम् । $N_1$. ७. प्रमेयं $Dc_3$.

**कर्तृस्थे चाशरीरे कर्मणि ॥१।३।३७॥**

णीञः[1] कर्तृस्थेमूर्ते[2] कर्मणि[3] कारके पूर्ववत् ॥[4] क्रोधं विनयते । कर्तृस्थे किम् । गुरोः क्रोधं विनयति । अमूर्ते किम् । गण्डं[5] विनयति ।

**वृत्तिसर्गतायनेषु क्रमः ॥१।३।३८॥**

क्रमस्तङानौ स्तः अप्रतिबन्धोत्साहस्फीततासु[6] ॥ ऋचि[7] क्रमते बुद्धिः । [8]धर्माय क्रमते । सतां श्रीः क्रमते ।

**उपपराभ्याम्[9] ॥१।३।३९॥**

वृत्त्यादिष्वाभ्यामेव[10] क्रमस्तङानौ स्तो नान्योपसर्गात् ॥ उपक्रमते । पराक्रमते । आभ्यां किम् । संक्रामति । वृत्त्यादौ किम् । उपक्रामति ।

---

**कर्तृस्थे** । शरीरावयवोत्र शरीरं गृह्यते । स च मूर्त इत्यभिप्रेत्याह—**अमूर्तेति** । प्रत्यासत्तेर्नयतिकर्तृस्थे इति ज्ञेयम् । अपगमे वर्तमानादिति च ज्ञेयम् । अत्र च क्रोधाद्यपगमः फलम् । कर्तृगामिनि[11] 'स्वरितञितः—' इत्येव सिद्धे नियमार्थं वचनम् । कर्तृस्थे कर्मण्यशरीर एव नान्यत्रेति ।

**वृत्ति** । **ऋचि क्रमते बुद्धिः** । तस्यामप्रतिहता भवतीत्यर्थः । **धर्माय क्रमते** । धर्मार्थमुत्सहत इत्यर्थः । **सतां श्रीः क्रमते** । स्फीता भवतीत्यर्थः । **संक्रामतीति** । 'क्रमः परस्मैपदेषु' इति दीर्घः ।

---

१. णियः C, $N_1$; नियः $D_3$. २. कर्तृस्थे स्वेमूर्ते° $D_1$. ३. कर्मकारके P, $D_2$. ४. After it—स्यात् $D_2$. ५. गडुं $D_1$, $B_2$. ६. अप्रतीबन्धो° C. ७. वेदे C. ८. Before this—अध्ययनाय क्रमते $B_2$. ९. °पराभ्यां च $B_2$. १०. वृत्त्यादिष्वर्थेष्वा° $D_3$. ११. °गामीति $Dc_3$.

## आङ उद्गमने ॥१।३।४०॥

आङः क्रमः[1] प्राग्वदुद्गमनेर्थे[2] ॥ आत्र
ज्योतिरुद्गमने इति वाच्यम् । नेह । आक्रामति
उद्गमने किम् । खमाक्रामत्यर्कः[3] ॥

## वेः पादविहरणे ॥१।३।४१॥

वेः क्रमः प्राग्वत्[4] पादविहरणेर्थे[5] ॥ साधु विक्रा
पादेति किम् । वाजिना विक्रामति ।

## प्रोपाभ्यां समर्थाभ्याम् ॥१।३।४२॥

आभ्यां तुल्यार्थाभ्यां क्रमस्तङानौ स्तः[6] ।
एवानयोस्तुल्यार्थता[7] । भोक्तुं प्रक्रमते उपक्रमते

## अनुपसर्गाद्वा[9] ॥१।३।४३॥

क्रमते । क्रामति ।[10]

---

आक्रमतेर्कः । उदयत इत्यर्थः । ज्योतिर्ग्र
खमाक्रामत्यर्क इति । अत्र हि व्याप्तिरेव विवक्षिता

वेः । विहरणं विक्षेपः । वाजिनेति । गच्छतीत्यर्थ

अनु । अप्राप्तविभाषेयम् । उपसर्गवियुक्तात् क्रमस्तङा

---

१. C drops क्रमः २. प्राग्वत्स्यादु° $D_2$. ३. खे आ
४. प्राग्वत् स्यात् $D_2$. ५. अर्थे dropped N. ६. $D_1$
७. $D_2$ drops एव ; एवैतयो° $B_2$. ८. After it—आरभते
९. After it—अनुपसर्गात् क्रमतेस्तङानौ वा स्तः $B_2$, N ($N_1$
१०. After it—अनुपसर्गादिति किम् । संक्रामति $N_1$.

अपह्नवे ज्ञः ॥१।३।४४॥

जानातेस्तज्ज्ञानौ स्तोऽपलापेऽर्थे ॥ शतमपजानीते ।[3]

अकर्मकाच्च ॥१।३।४५॥

अकर्मकाज्ज्ञानातेस्तथा ॥ सर्पिषो जानीते । सर्पिषोपायेन र्तत इत्यर्थः ।[6]

संप्रतिभ्यामनाध्याने ॥१।३।४६॥

आभ्यां ज्ञः प्राग्वत् अनौत्कण्ठ्ये ॥ संजानीते । प्रतिजानीते । औत्कण्ठ्ये तु पितुः संजानाति ।[9]

---

अप । शतमपजानीते । अपलपतीत्यर्थः । क्र्यादित्वात् श्ना । जनोर्जा' इति जा । 'ई हल्यघोः' इतीत्वम् ।

अकर्म । सर्पिषो जानीते इति । 'ज्ञोविदर्थस्य' इति षष्ठी ।

संप्रति । अनौत्कण्ठ्यमस्मरणम् । संजानीते अवेक्षत र्थः । प्रतिजानीते । अभ्युपगच्छतीत्यर्थः । पितुः संजानातीति । तीत्यर्थः । पितुरित्यत्र 'अधीगर्थ—' इति षष्ठी । 'अकर्मकाच्च' त्रापि अस्मरण इत्यभिप्रेतमिति तङ् न ।

---

. ज्ञाते° $D_2$. २. °पह्नवेऽर्थे $D_3$. ३. After it—सोपसर्गश्चायमपह्नवे न केवलः । C. ४. स्तज्ज्ञानौ स्तः $D_3$. ५. After it—अकर्मकात् —स्वरेण पुत्रं जानाति P; $D_4$, N ($N_1$, $D_4$ अकर्मकादिति). After it—स्यात् $D_2$. ७. Dropped $N_1$. ८. औत्कामे तु C. After it—संस्मरतीत्यर्थः । $N_1$.

**भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणे वदः ॥१।३।४७॥**

भासनसान्त्वनादिषु वदेतेस्तङानौ स्तः ॥ शास्त्रे वद भृत्यानुपवदते ।[३] पाणिनिर्वदते ।[४] क्षेत्रे वदते ।[५] वि शिष्याः ।[६] परदारानुपवदते ।

**व्यक्तवाचां समुच्चारणे ॥१।३।४८॥**

मनुष्याणां सहोच्चारणे वदेस्तङानौ स्तः ॥[९] संप्र विप्राः । समुच्चारणे किम् । वदति विप्रः । व्यक्तवाचां कि संप्रवदन्ति खगाः ।

---

**भासन** । भासनं दीप्तिः । उपसंभाषोपसान्त्वनम् सम्यगवबोधः । यत्न उत्साहः । विमतिर्नानामतिः । उप रहस्युपच्छन्दनम् । **शास्त्रे वदते** । भासमानः पदार्थान् वक्ती **भृत्यानुपवदते** । उपसान्त्वयतीत्यर्थः । **पाणिनिर्वदते** । वदितुं त्यर्थः । **क्षेत्रे वदते** । उत्सहते इत्यर्थः । **विवदन्ते शिष्याः** । विविधं भाषन्ते इत्यर्थः । **परदारानुपवदते** । रहस्युपच्छन्दयत एषु किम् । यत् किंचिद्वदति ।

**व्यक्त** । ननु व्यक्तवाच्येव वदिर्वर्तते किमर्थं व्यक्तव विशेषणम् । प्रसिद्ध्युपसंग्रहार्थम् । व्यक्तवाचो मनुष्याः इत्यभिप्रेत्याह—**मनुष्याणामिति** ।

---

१. वदस्त° $D_3$. २. After it—उपसंभाषा उपसान्त्वनम् C. it—उपसान्त्वयतीत्यर्थः । ज्ञानं सम्यगवबोधनम् C. ४. After i वदितुमित्यर्थः । यत्नः उत्साहः । C. ५. After it—गेहे तद्विषयमुत्साहमाविष्करोतीत्यर्थः । विमतिर्नाम मतिः C. ६. A विमतिर्विचित्रं भाषन्ते इत्यर्थः C. ७. C drops परदारानुपवदते. वदते $D_1$. ९. After it—अकर्मकाश्चेति: $D_2$, $D_4$, P, १०. Dropped in $D_2$, $D_3$; after खगाः in $B_2$, $N_1$.

अनोरकर्मकात् ॥१।३।४९॥

व्यक्तवाग्विषयादनुपूर्वाद्वदतेरकर्मकात्तथा ॥ अनुवदते कठः कलापस्य[1] । अकर्मकादिति किम्[2] । पूर्वमेव यजुरुदितमनुवदति । पुनर्वदतीत्यर्थः[3] । व्यक्तवाचामित्येव[4] । अनुवदति वीणा । विमतौ च । अनुवदन्ते शिष्याः ॥

विभाषा विप्रलापे ॥१।३।५०॥

नृणां विमतिसहोक्तिव्यामिश्रणे वदेः प्राग्वत् वा[6] ॥ विप्रवदन्ते विप्रवदन्ति वा वैद्याः ।[7]

अवाद्ग्रः ॥१।३।५१॥

अवाद्गिरतेस्तङानौ स्तः ॥ अवगिरते ।

---

अनो । अनुवदते कठः कलापस्येति । यथाधीयानः कलापो वदति तथा कठ इत्यर्थः । अकर्मकात् किम् । उक्तमनुवदति । व्यक्तवाचां किम् । अनुवदति वीणा ।

विभाषा । नृणामिति । परस्परप्रतिषेधेन विरुद्धः प्रलापो विमत्युक्तिः । सहोक्तिश्च । तयोर्व्यामिश्रणमेकरूपता । एकरूपे सहोच्चारणे आत्मनेपदं स्यादित्यर्थः ।[11]

अवाद्ग्रः । अवगिरते इति । गॄ निगरणे । तुदादिः । न गॄ शब्दे इति क्र्यादिः । तस्यात्रपूर्वप्रयोगाभावात् । 'ॠत इत्' । रपरः ।

---

१. कालापस्य $D_3$, $D_4$, P, C, $B_1$. २. अकर्मकादिति किम्...to शिष्याः dropped in $D_2$, $D_3$; before it—व्यक्तवाचामित्येव । अनुवदति वीणा $B_2$, $D_4$. ३. पुनर्वदतीत्यर्थः dropped $N_1$, $D_4$. ४. From व्यक्त°... to शिष्याः dropped $B_2$, $D_4$. ५. $D_1$, $N_1$ drop विमतौ...शिष्याः. ६. After it—यात् $D_2$. ७. After it—विप्रलाप इति किम् । संप्रवदन्ति वैद्याः । व्यक्तवाचामित्येव । विप्रवदन्ति शकुनयः $B_2$, $N_1$. ८. अनुः सादृश्ये । यथा कलापोधीयानो वदति. ९. परस्परनिषिद्धेन विरुद्धः $Dc_1$. १०. रूपे सहोच्चारणे $Dc_3$. ११. After it—विप्रा वदन्ति । युगपद् वदन्तीत्यर्थः $Dc_3$.

**समः प्रतिज्ञाने ॥१।३।५२॥**

संपूर्वाद्गिरतेः पूर्ववत् प्रतिज्ञायाम् ॥ शतं संगिरते

**उदश्चरः सकर्मकात् ॥१।३।५३॥**

उत्पूर्वाच्चरतेः सकर्मकात् तङानौ स्तः ॥ ध
उत्क्रम्य यातीत्यर्थः । सकर्मकात् किम् । धूम उच्चरति

**समस्तृतीयायुक्तात् ॥१।३।५४॥**

संपूर्वाच्चरतेः प्राग्वत् तृतीयायोगे ॥ अश्वेन संच

**दाणश्च सा चेच्चतुर्थ्यर्थे ॥१।३।५५॥**

संपूर्वाद्दाणश्चतुर्थ्यर्थे तृतीयायोगे तङानौ स्तः
संयच्छते[४] कामी। सम इति षष्ठ्यन्तत्वात् प्रेण व्यवधाने
संप्रयच्छते। [८]चतुर्थ्यर्थे किम्। [९]दास्या संप्रयच्छति भिक्षां

---

समः। शतं संगिरत इति। प्रतिजानीत इत्यर्थः।

उदः। धूम उच्चरतीति। उत्क्रम्य गच्छतीत्यर्थः।

समः। तृतीयायुक्तात् किम्। उभौ लोकौ संचर

दाणः। दास्यासंयच्छते कामीति। दाण् दाने
इति यच्छादेशः। अशिष्टव्यवहारे चतुर्थ्यर्थे तृतीया
षष्ठ्यन्तत्वादिति। अयं भावः। समः इति यदि प
'तस्मादित्युत्तरस्य' इत्यत्र निर्दिष्टग्रहणस्यानन्तर्यार्थस्या
परस्माद्व्यवहितादेव दाण आत्मनेपदं स्यात्। तस्मा
तेन व्यवधानेपि भवतीति।

---

१. After it स्यात्—D₂. २. After it—स्यात् D₂. ३
तृतीयेति किम्। उभौ लोकौ संचरति D₂, D₃, D₄, B₂, I
D₁. ५. विशेषणे षष्ठी न पञ्चमी तेन समोन्येन व्यवधानेपि
६. Dropped D₄. ७. संप्रयच्छते कामुकः। D₃. ८. चतु
९. हस्तेन for दास्या C; before it-पाणिना संयच्छति। D₃
D₃. ११. After it—भार्यायै संयच्छति। समः किम्। दास्या उ

**उपाद्यमः स्वकरणे ॥१।३।५६॥**

उपपूर्वाद्यमो विवाहेर्थे तङानौ स्तः ॥ भार्यामुपयच्छते ।

**विभाषोपयमने ॥१।२।१६॥**

विवाहार्थाद्यमः सिज्वा कित् स्यादात्मनेपदेषु ॥ रामः तामुपायत । उपायंस्त वा ।

**ज्ञाश्रुस्मृदृशां सनः ॥१।३।५७॥**

एभ्यः सन्नन्तेभ्यस्तङानौ स्तः ॥ जिज्ञासते । शुश्रूषते ।

---

उपात् । यदि स्वकरणमभिप्रेतं स्यात् तदा शकटादिस्वकरणेपि दिति शङ्कानिरासायाह—विवाहेर्थे इति । अयमाशयः । निहिता हि शब्दशक्तयस्तस्मादुपपूर्वो यमिरात्मनेपदे विवाह वर्तते । भाष्ये तु स्वीकरणमात्रे स्यादित्युक्तम् । तथा त्र ड्काव्ये प्रयोगोपि । 'उपायंस्त महास्त्राणि' इति । रामः तामुपायतेति । परिणीतवानित्यर्थः । सिचः कित्त्वे सति नुदात्तोपदेश—' इत्यनुनासिकलोपः । ततो 'ह्रस्वादङ्गात्' सिचो लोपः । उपायंस्त वेति । कित्त्वाभावादनुना- कलोपसिज्लोपाभावौ ।

ज्ञाश्रु । तत्र ज्ञः 'अपह्नवे ज्ञः' इति सूत्रत्रयेण तङानौ विहितौ । दृशेश्च 'समोगमि—' इति । तत्र 'पूर्ववत्सनः' इति सिद्धमन्यत्र धीयते । जिज्ञासत इति । ज्ञा अवबोधने । सन् । 'सन्यङोः' इति त्वम् । ह्रस्वः । 'सन्यतः' इतीत्वम् । शुश्रूषत इति । श्रु श्रवणे । को झल्' इति सनः कित्त्वम् । 'श्र्युकः किति' इतीण्निषेधः ।

---

१. सिच कित् स्याद्वा $D_1$; सिच् किद्वा स्यात् $D_3$.

सुस्मूर्षते । दिदृक्षते ।

**नानोर्ज्ञः ॥१।३।५८॥**

अनुपूर्वात् ज्ञः सन्नन्तात् तङानौ न स्तः ॥ अनु
पुत्रम् ।

**प्रत्याङ्भ्यां श्रुवः ॥१।३।५९॥**

आभ्यां शृणोतेः सन्नन्तात्तङानौ न स्तः ॥ प्रति
आशुश्रूषति ॥ इह सर्वत्रोपसर्गग्रहणात्कर्मप्रवचनीया
द्विजं प्रति शुश्रूषते ।

**प्रोपाभ्यां युजेरयज्ञपात्रेषु ॥१।३।६४॥**

आभ्यां पैरादयज्ञपात्रविषयाद्युजेस्तङानौ स्तः ॥

---

'अज्झन—' इति दीर्घः । **सुस्मूर्षत** इति । स्मृ आध्याने
किच्वात् 'उदोष्ठ्य—' इत्युत्वम् । 'हलि च' इति दीर्घः
इति । दृशिर् प्रेक्षणे । 'हलन्ताच्च' इति किच्वम् ।
इति षः । 'षढोः—' इति कः ।

**नानोः** । पूर्वेण प्राप्तं प्रतिषिध्यते । तेन सकर्मकस्य
अकर्मकात्तु स्यादेवात्मनेपदम् । औषधस्यानुजिज्ञासते ।
प्रवर्तितुमिच्छतीत्यर्थः । अनोः किम् । धर्मं जिज्ञासते ।

**प्रोपा** । युज समाधौ । अस्यानुदात्तेत्वादात्मनेपदं सि
ग्रहणमयुक्तमित्यभिप्रायेणाह—युजेरिति । युजिर्योगे । प्रयुङ्

---

१. दिदृक्षते । सुस्मूर्षते C, $D_1$, $D_3$, $N_1$. २. आशुश्रूषति । प्रा
$N_1$. ३. पराद्युजेरपात्रविषयात्तङानौ स्तः $D_1$.

उपयुङ्क्ते । स्वराद्यन्तोपसृष्टाद्वाच्यम् ॥* उद्युङ्क्ते । वियुङ्क्ते । यज्ञपात्रेषु । प्रयुनक्ति ।

**समः क्ष्णुवः ॥१।३।६५॥**

संक्ष्णुते शस्त्रम् ॥

**भुजोनवने ॥१।३।६६॥**

भुजस्तङानौ स्तो न तु पालनेर्थे ॥ ओदनं भुङ्क्ते । पालने तु पृथिवीं भुनक्ति ॥

---

रुधादिभ्यः श्नम् । 'श्नसोरल्लोपः' । 'चोः कुः' इति कुत्वं गः । तस्य 'खरि च' इति कः । 'नश्चा—' इत्यनुस्वारः । 'अनुस्वारस्य—' इति ङकारः । स्वरेति । स्वरः अच् आदिरन्तो वास्य स्वराद्यन्तस्तत्सं-बन्धाद्युजेः स्यात् । स्वराद्यन्तोपसृष्टादिति किम् । निर्युनक्ति । प्रयु-नक्तीति । द्वन्द्वं न्यञ्चि पात्राणीति ज्ञेयम् ।

**समः** । क्ष्णु तेजने । 'समो गमि—' इत्यत्रैवायं किं नोक्तः । अकर्मकादिति तत्र वर्तते ।

**भुजः** । अवननिषेधाद्रौधादिकस्य भुज पालनाभ्यवहारयोरस्य ग्रहणं न तौदादिकस्य भुज कौटिल्ये अस्य । अवनसंबन्धाभावात् । तेनेह न । विभुजति पाणिम् ।

---

१. C drops it. २. उपयुङ्क्ते $N_1$ ; अनुयुङ्क्ते before it $D_4$. ३. Before it—द्वन्द्वं यज्ञपात्राणि C, $N_1$. ४. After it—स्वराद्यन्तोपसृष्टादिति किम् । निर्युनक्ति $B_2$. ५. Before it—संपूर्वात् क्ष्णुवस्तङानौ स्तः । $N_1$. ६. स्तः $B_2$, $D_4$. ७. पृथ्वीं $B_2$, $D_4$.

णेरणौ यत् कर्म णौ चेत् स कर्तानाध्
॥१।३।६७॥

ण्यन्तात्तङानौ स्तः अणौ यत् कर्म स एव ण्
कर्ता चेत् न त्वाध्याने ॥ पश्यन्ति भवं भक्ताः ।

---

णेः । 'णिचश्च' इति कर्त्रभिप्राये सिद्धेकर्त्रभिप्रायार्थोयम
कर्त्रभिप्रायेपि विभाषोपपदेन प्रतीयमान इति विकल्पबाध
ण्यन्तात् तङानौ स्त इत्यादिना वाक्यभेदेन सूत्रं व्याचष्टे—
तङानौ स्त इति । अनेन 'णेः' इत्येकं वाक्यं दर्शितम् ।
स्पष्टः । ततः 'अणौ यत् कर्म' इत्यनेन अणौ यत् कर्मेति द्वि
अणौ यत् कर्म णौ चेत् तत् कर्मेत्यर्थः । अनेन कर्मान्तर
क्रियते । 'स एव ण्यन्तस्य कर्ता चेत्' इत्यनेन तृतीयचतुर्थे
तत्र ण्यन्तस्य चेदित्यंशेन 'णौ चेत्' इति तृतीयम् । तत्र 'अ
इत्यनुवर्तते । अणौ यत् प्रतिपाद्यं ण्यन्ते चेत्तदेव प्रतिपाद्य
एतत् समानक्रियार्थम् । स एव कर्तेत्यंशेन 'स कर्ता' इति
अत्राणौ यत् कर्म णौ चेदिति वर्तते । अणौ यत् कर्म ण्यन्तस्य
एव कर्ता स्यादित्यर्थः । न त्वाध्यान इत्यनेनानाध्यान इति
प्रतिषेधपरं पञ्चमं दर्शितम् । ततश्चैवं संपिण्डितो वृत्त्यर्थः । ण्यन्त
स्तः । अणौ यत् कर्म तदेव ण्यन्ते स्यात् । अणौ यत् प्रतिपाद्यं तदेव[1]
स्यात् । अणौ यत् कर्म णौ चेत् स एव कर्ता स्यात् ।[2] स्मरणे तु न
पश्यन्ति भवमित्यणौ कर्मत्वप्रदर्शनार्थम् । उदाहरणं त्वेतत्—

---

१. तदेव चेत् Dc3. २. After it—स्मरणे तु न भवति । पश्या
इति अणौ कर्मत्वप्रदर्शनार्थः । उदाहरणं त्वेतत् Dc3.

भवो भक्तान् स्वयमेव। इह कर्तृस्था क्रिया। तेन कर्मवत् कर्मणेति

---

भवो भक्तान् स्वयमेवेति। अयं दृशिर्दर्शनविषयत्वापत्त्युपसर्जन-दर्शनविषयत्वापादने वर्तते। दर्शनविषयत्वमापादयतीति। यदानुभवस्य सौकर्यातिशयप्रदर्शनाय भक्तव्यापारो न विवक्ष्यते तदा विषयत्वापत्तौ दृशिर्वर्तते।तत्र भवस्य कर्तृत्वम्। तदुक्तं हरिणा।

'निवृत्तप्रेरणं कर्म स्वक्रियावयवे स्थितम्।
निवर्तमाने कर्मत्वे स्वे कर्तृत्वेवतिष्ठते' ॥ इति।

ततो विषयत्वापत्तिवृत्तेर्दृशेर्भक्तव्यापारे णिजुत्पद्यते। पुनः सौकर्यातिशयविवक्षायामविवक्षिते भक्तव्यापारे विषयत्वापत्तिमात्रे दृशिर्वर्तते। दर्शयते भवः स्वयमेवेति। सुष्ठु विषयो भवतीत्यर्थः। सोयं निवृत्तप्रेरणपक्षः। अध्यारोपितप्रेरणपक्षस्तु। पश्यन्ति भवं भक्तास्तत्सौकर्यातिशयाद्भवः प्रयुङ्क्ते भक्तानिति भक्तव्यापारे णिजुत्पद्यते। दर्शयते भवो भक्तान् स्वयमेवेति सुष्ठु दर्शनविषयत्वं प्रतिपद्यत इत्यर्थः। एष एव तस्य प्रयोजकव्यापारः। नन्वत्रापि सौ-कर्यातिशयप्रतिपादने तात्पर्यमिति कर्माविवक्षित्वा दर्शयते भवः स्वयमेवेत्येव प्रदर्शनीयम्। भक्तानिति न वक्तव्यम्। मैवम्। भाष्यकारेण पश्यन्ति भृत्या राजानं दर्शयते भृत्यान् राजेति प्रयुक्तत्वादणौ ये कर्तृकर्मणी तद्व्यतिरिक्तकर्मान्तरसद्भावे एवात्मने-पदं न। यथा स्थलमारोहयति मनुष्यानिति। इह णौ कर्तृणां भक्तानां कर्मत्वमिति स्यादेव तङ्। एवं च स्मरयत्येनं वनगुल्मस्य कोकिल इति जयादित्यप्रत्युदाहृतिर्घटते। वामनस्तु अस्मदुक्तमेवार्थं मन्यते। माघे प्रयोगोपि 'करेणुरारोहयते निषादिनम्' इति। पदमञ्जरीकारमते न्यासकारमते तु कर्म न प्रयोज्यमेव। इह कर्तृस्थेति। दर्शनक्रियाया भक्तेषु समवायात्। णेः किम्। आरोहन्ति हस्तिनं हस्तिपकाः। आरोहयमाणो हस्ती साध्वारोहति। अत्राणौ कर्म हस्ती स एव कर्ता भवति किं त्वण्यन्तस्यैव रोहतीत्यस्यातो

---

१. कर्तृस्थक्रिया $D_2$. २. °स्तान् सौकर्यातिशयाद्भवः प्रयुङ्क्ते। $Dc_3$. ३. सुष्ठु न दर्शने विषयत्वं प्रतिपाद्यत इत्यर्थः। $Dc_1$. ४. आरोहमाणो हस्ती साध्वारोहयति $Dc_3$.

### समुदाङ्भ्यो यमोऽग्रन्थे ॥१।३।७५॥

एभ्यो यमस्तङानौ स्तः न तु ग्रन्थकर्मकात् कर्तृगे[1] फे
संयच्छते । [2]उद्यच्छते । [3]आयच्छते । आयंस्त रज्जुम् । ग्र
तु वेद[4]मुद्यच्छाति ।

### अनुपसर्गाज्ज्ञः ॥१।३।७६॥

अनुपसर्गाज्जानातेः कर्तृगे क्रियाफले तङानौ स्तः
गां जानीते । अनुपसर्गात् किम् । प्रजानाति । कर्तृगे
किम् । परस्य गां जानाति ।

### विभाषोपपदेन प्रतीयमाने ॥१।३।७७॥

[5]कर्तृगे फले यदात्मनेपदं विहितं [6]तदुपपदेन द्योत्ये व

---

**सम्** । आङ्पूर्वादकर्मकात् 'आङो यमहनः' इत्येव
सकर्मकार्थं पुनर्ग्रहणमिति दर्शयितुं द्वितीयं सकर्मकमुदाहरण
**आयंस्त रज्जुमिति** । लुङ् । अगन्धनाद्यर्थत्वात् किच्वाभा
वेदमुद्यच्छतीति । वेदमधिगन्तुमुद्यमं करोतीत्यर्थः ।

**अनुपसर्गात्** । नास्योपसर्गोऽस्ति तथा । सकर्मका
वचनम् । अन्यथा 'अकर्मकाच्च' इति सिद्धत्वात् ।

**विभाषा** । 'स्वरितञितः—' इत्यादिभिः पञ्चभिः
कर्तृगे फले प्राप्ते आत्मनेपदं विहितम् । तदुपपदेन द्योतिते
फले न प्राप्नुयात् । उक्तार्थानामप्रयोग इति न्यायात् । अ

---

१. $D_2$, $N_1$ drop it. २. Dropped $D_3$. ३. After it—अ
नियच्छति $D_3$, $D_4$, $B_2$; अन्यस्य तु नियच्छाति $N_1$. ४. वेदानुद्यच्छ
५. $D_1$ has the Vritti as follows:—स्वरितञितः कर्त्रभिप्राये क्रि
अपाद्वदः । णिचश्च । समुदाङ्भ्यो यमो ग्रन्थे । अनुपसर्गात् ज्ञः । एतैः
सूत्रैर्यदात्मनेपदं &c; कर्तृगे क्रियाफले $B_2$. ६. तत्रोपपदं विहितं तत्रोपपदे

फले वा[1] स्यात्॥ [2]स्वयं यज्ञं यजति। स्वयं यज्ञं यजते। एवम[3]न्यत्र।

इति पदव्यवस्थाप्रक्रिया।

---

विभाषेयम्। समीपवर्ति शब्दान्तरमुपपदं न पारिभाषिकं तत्रोपपदमिति। एवमन्यत्रेति। एवमुदाहृतप्रकारेण 'अपाद्वदः' इत्यादिषु चतुर्षु सूत्रेषु ज्ञेयमित्यर्थः। स्वं पुत्रमपवदति स्वं पुत्रमपवदते। स्वं यज्ञं कारयते कारयतीति वा। स्वं व्रीहिं संयच्छते संयच्छति वा। स्वां गां जानीते जानाति वा इति।

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम्।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेऽस्मिन् प्रसादे पदविधिनियमप्रक्रियेयं समाप्ता॥

---

१. आत्मनेपदं वा स्यात् $D_1$. २. स्वं यज्ञं यजते। स्वयं यज्ञं यजति। स्वं कण्ठं करोति। स्वं कण्ठं कुरुते। एवमन्यत् $D_1$. ३. °मन्यत् $D_1$.

चिण् भावकर्मणोः ॥३।१।६६॥

धातोश्च्लेश्चिण् स्यात् भावकर्मवाचिनि तशब्दे णित्त्वाद्वृद्धिः । अभावि । अन्वभावि[१] ।

स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदे अहग्दृशां वा चिण्वदिट् च ॥६।४।६२॥

उपदेशेऽजन्तेभ्यो हनादेश्च परेषां भावकर्मणो स्यादीनामिड्वा स्यात् स च[२] इट् चिण्वच्च ॥ चि वृद्धिः । अन्वभाविषाताम् । अन्वभाविषाताम् । बुभूवे

---

चिण् । णित्त्वाद्वृद्धिरिति । 'अचो ञ्णिति' इति । भावे । 'चिणो लुक्' इति तशब्दस्य लुक् । अन्वभावीति

स्यसिच् । हनादेरिति । हन हिंसागत्योः । अह दृशिर् प्रेक्षणे । चिण्वद्भावे प्रयोजनान्यभियुक्ताः पठन्ति

'चिण्वद् वृद्धिर्युक् च हन्तेश्च घत्वं दीर्घश्चोक्तो
चिणीति

इट् चासिद्धस्तेन मे लुप्यते णिर्नित्यश्चायं
विघाती' ॥

अन्वभाविषातामिति । 'अचो ञ्णिति' इति वृद्धिः । युक् चिण्कृतोः' इति । अदायिष्यत हन्तेर्घत्वं 'हो हन् अघानिष्यत । 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' इत् शामिष्यते । शमिष्यते । ननु चात्र 'णेरनिटि' इ स्यात् सेट्त्वादित्यत आह—इट् चासिद्ध इति

१. D₂ drops it. २. परे N₁. ३. मिट् स इट् चिण्वद्वा । P, B₂, N₁ drop it. ५. चिण्भावात् C. ६. Dropped D₃. ७. केचित् D₂, D₄, B₂ केचित् लिटि भाव कर्मणोर्भवतेरित्यस्या मिच्छन्ति । तन्मते । अनुबभूवे । बभूवे N. ८. Before it— असिद्धवत्त्राभादित्यसिद्धः । Dc₃.

वेता । भविता । [1] भाविषीष्ट । भविषीष्ट । भाविष्यते ।
ष्यते । [2] अभाविष्यत । अभविष्यत । अकृत्सार्वधातुकयोर्दीर्घः ।
ते विष्णुः । अस्तावि । अस्ताविषाताम् । [3] अस्तोषाताम्
हरौ भक्तेन । तुष्टुवे । स्ताविता । स्तोता । स्ताविषीष्ट ।
षीष्ट । स्ताविष्यते । स्तोष्यते [4] । अस्ताविष्यत । अस्तोष्यत ।
र्तीति गुणः । स्मर्यते । अर्यते । सुटो बहिरङ्गत्वान्न गुणः ।

---

सिद्धवदत्राभात्' इत्यसिद्धः । ननूदात्तेभ्यः परत्वाद्वलादिलक्षणे-
भाव्यम् । स च सिद्ध इत्यत आह—नित्य इति । विघात्यनित्यः ।
ङ्कार्यातिदेशः । तेन हनिणिङादेशा न । घानिष्यते । आयिष्यते ।
ापिष्यते [6] । अन्वभविषातामिति । 'आर्धधातुकस्येड् वलादेः' ।
ो । लिट् । 'लिटस्तझयोः—' इत्येश् । द्वित्वम् । 'भवतेरः'
त्र कर्तृनिर्देशाद् भावकर्मणोर्नात्वम् । बभूव इति केषांचिन्मते-
म् । भावितेति । चिण्वदिट् । भवितेति । इट् । भाविषीष्टेति ।
ीर्लिङ् । सर्वाण्येतानि भावे । कर्मणि तु अनुभूयते ।
भूवे । अनुभाविता । अनुभविता । अनुभाविषीष्ट । अनुभविषीष्ट ।
ाविष्यते । अनुभविष्यते । अन्वभाविष्यत । अन्वभविष्यत ।
ज्ञेयम् । उपदेशग्रहणं भाविष्यत इत्यत्र गुणायादेशयोः कृतयोर्न
त्येवमर्थम् । स्तूयते विष्णुरिति । ष्टुञ् स्तुतौ । सकर्मकत्वात् कर्मणि
रः । स्तूयते । स्तूयेत । स्तूयताम् । अस्तूयत । अस्तावीति । लुङ् ।
। चिण् । वृद्ध्यावादेशौ । चिणो लुक् । अस्ताविषातामिति ।
दिट् । अस्तोषातामिति । चिण्वदिडभावे 'एकाचः—' इति
वः । तुष्टुवे इति । 'शर्पूर्वाः खयः' । उवङ् । स्मर्यत इति ।

---

भविषीष्ट । भाविषीष्ट, &c. in this order $N_1$. २. अन्वभाविष्यत ।
ाविष्यत $D_2$, $D_4$, $B_2$. ३. After it—अस्ताविषत C. ४. $D_2$ drops
ते । अस्ताविष्यत । अस्तोष्यत; P, $N_1$, $D_4$ drop the last two
s. ५. निघानि° $Dc_3$. ६. After it—अयमिट् असिद्धवदत्राभादित्य-
। $Dc_3$. ७. बभूवे $Dc_1$.

रिङादेशः । संस्क्रियते । लोपः । स्रस्यते । इदितस्तु नन्द्यते
संप्रसारणम् । इज्यते । अयङ् यि क्ङिति । शय्यते ।

तनोतेर्यकि ॥६।४।४४॥

तनोतेराकारोन्तादेशो वा स्याद्यकि च ॥ तायते
तन्यते । ये विभाषा । जायते । जन्यते ।

---

स्मृ आध्याने । सकर्मकत्वात् कर्मणि लकारः । स्मर्यते । स्मर्यता
अस्मर्यत । अस्मारि । अस्मारिषाताम् । अस्मृषाताम् । सस्मा
स्मारिता । स्मर्ता । स्मारिषीष्ट । स्मृषीष्ट । स्मारिष्यते । स्मरिष्य
अर्यत इति । ऋ गतौ । संस्क्रियत इति । डुकृञ् करणे । सकर्म
'संपरि—' इति सुट् । 'रिङ् शय—' इति रिङ् । चिण्वदि
पूर्ववज् ज्ञातव्यं सिजादिषु । स्रस्यत इति । स्रंसु अवस्रंसने ।
लकारः । 'अनिदिताम्—' इति न्लोपः । नन्द्यत इति ।
समृद्धौ । भावे लः । इदित्त्वान्नलोपाभावः । इज्यत इति ।
देवपूजादिषु । कर्मणि लकारः । अकर्मकत्वविवक्षायां भावे
'वचिस्वपि—' इति संप्रसारणम् । शय्यत इति । शीङ्
भावे लकारः ।

तायत इति । तनु विस्तारे । कर्मणि लः । जायत इति
जनने । भावे लः ।

---

१. न्लोपः P; नलोपः D3; अनिदितामित्यादिना न्लोपः । N1
२. भ्रस्यात् P. अनिदितामित्यादिनाल्लोपः । भ्रस्यते D2, B2 (भ्रश्यते B
३. अयाङि क्ङिति D3. ४. °राकारः स्याद्यकि वा D2, B2. ५. °देशः
वा P, D3; °देशो वा स्याद्यकि D1. ६. D1 has ये विभाषा ।
जन्यते before अयङ्यि क्ङिति.

तपोऽनुतापे च ॥३।१।६५॥

तपतेश्च्लेश्चिण् न स्यात् कर्मकर्तर्यनुतापे च । अन्वतप्त
ापिना । घुमास्थेतीत्वम् । दीयते । एशः आदिशित्वाभावा-
त्वम् । जग्ले ।

आतो युक् चिण्कृतोः ॥७।३।३३॥

आदन्तानां युगागमः स्याच्चिणि ञ्णिति कृति च ॥
दायि । अदायिषाताम् । आदिषाताम् । दायिष्यते । दास्यते ।
ष्यते । हो हन्तेरिति कुत्वम् । अचिण्णलोरित्युक्तेर्हनस्तो न ।

---

तपः । अनुतापः पश्चात्तापः । अन्वतप्त पापिनेति । तप संतापे ।
र्मणि लुङ् । 'झलो झलि' इति सिचो लोपः । यत् पूर्वं पापं
र्म कृतं तेन पश्चात्तप्तः । अभिहत इत्यर्थः । दीयत इति । डुदाञ्
ने । कर्मणि लः । जग्ले इति । ग्लै हर्षक्षये । भावे लः ।
नादेच उपदेशे' इत्यात्वम् । द्वित्वम् । आलोपः ।

आतः । कृति दायः । चिण्कृतोरिति किम् । ददौ । चौडिः ।
ञादित्वादिञ् । अदायीति । दाञो लुङि चिणि रूपम् । अदायि-
तामिति । 'स्यसिच्सीयुट्—' इति चिण्वदिट् । आदिषातामिति ।
थाध्वोरिच्च' इतीदन्तादेशः सिच्च कित् । दायिष्यते । दास्यत

---

. °श्चिणादेशः D1. २. Dropped D3. ३. आदायिषाताम् । आदिषाताम्
. ४. Before it—स्थाध्वोरिच्च D2, D4, B2. ५. इति dropped D4.
पश्चात्तापः Dc3.

अघानि। अघानिषाताम्। अहसाताम्। पक्षे वधादेशः। अ
अवधिषाताम्।[2] गृह्यते। अग्राहि। चिण्वदिटो न दीर्घत्वग्
अग्राहिषाताम्। अग्रहीषाताम्। दृश्यते। अदर्शि। अदर्शिष
सिचः कित्त्वादम् न। अदृक्षाताम्। णिलोपः।
मोहो मुकुन्देन।

---

इति। चिण्वदिड् वा। तदभावे नेट्। हन्यत इति
हिंसागत्योः। कर्मणि लः। अघानीति। लुङ्। चिण्। अघ
तामिति। चिण्वदिट्। अहसातामिति। चिण्वदिडभावे 'हन
इति किंत्त्वादनुनासिकलोपः 'अनुदात्तोपदेश—' इति
वधादेश इति। 'आत्मनेपदेष्वन्यतरस्याम्'
एतच्च परमतेनोक्तम्। स्वमते तु वधादेशोऽत्र न भवत्येव।
महाभाष्ये। 'चिण्वद्भावो भवति विप्रतिषेधेन। अथेदानीं
कृते पुनः प्रसङ्गाद्वधभावः कस्मान्न भवति। सकृद् गतौ
यद् बाधितं तद् बाधितमेवेति कृत्वा। हनिणिङादेशप्रतिषेधश्च
गृह्यते इति। ग्रह उपादाने। कर्मणि लः। 'ग्रहिज्या-
संप्रसारणम्। अग्रहीषातामिति। वल इट्। 'ग्रहोऽलिटि
दीर्घः। दृश्यत इति। दृशिर् प्रेक्षणे। कर्मणि लः। अ
तामिति। चिण्वदिट्। सिचः किंत्त्वादिति। दृशेश्चिण्
'लिङ्सिचौ—' इति सिचः किंत्त्वात् 'सृजिदृशोः—
नेत्यर्थः। शम्यत इति। शमु उपशमे। हेतुमण्णिच्। उ
न्मितां ह्रस्वः। ततो यकि कृते 'णेरनिटि' इति णिलोपः
लकारं दर्शयति मोह इत्यादिना।

---

१. D₂, P drop it. २. After it—अवाधिषत $D_3$. ३. F
लिङ्सिचावात्मनेपदेषु। $N_1$. ४. भाष्ये $Dc_3$. ५. णेर्लोपः $Dc_3$.

चिण्णमुलोर्दीर्घोऽन्यतरस्याम् ॥६।४।९३॥

चिण्परे णमुल्परे च णौ मितामुपधाया दीर्घो वा स्यात् ॥

[1]द्वितीये णिचि दीर्घविधौ त्वजादेशो न स्थानिवदिति पाक्षिकदीर्घार्थं दीर्घोक्तिः । ह्रस्वोक्तावाद्यणि[2]च्लोपस्य स्थानिवत्त्वात्

---

चिण्णमुलोः । ननु च 'मितां ह्रस्वः' इति ह्रस्वग्रहणमनुवर्त्यानेने[3] विकल्पमात्रं विधेयम् । किं दीर्घग्रहणेन । विकल्पमात्रविधानेऽपीष्टं सिध्यति । तथा हि । यदानेन ह्रस्वो विधीयते तदाशमीत्यादि सिध्यति । यदा ह्रस्वो न तदात उपधाया दीर्घो विहितस्तस्य स्वेनैव रूपेणावस्थानादशामीत्याद्यपि सिध्यति इत्यतो दीर्घग्रहणं व्यर्थमिति शङ्कानिराकरणायाह—द्वितीये णिचीत्यादि । शमयन्तं प्रयुङ्क्ते इति शमेर्ण्यन्तात् प्रयोजकव्यापारे द्वितीये णिचि कृते पूर्वणिलोपे च लुङि चिणि[4] चैव कृते अशामीति पाक्षिकदीर्घो भाव्य एतदर्थं दीर्घोक्तिः । ननु दीर्घोक्तावप्यत्र पाक्षिकं दीर्घत्वं न स्यात् । तथा हि । चिण्णमुल्परे णौ मितामङ्गानां ह्रस्वत्वं (दीर्घत्वं) विधातव्यम् । यश्चात्र णिश्चिण्परः नात्र मिदङ्गम् । 'अचः परस्मिन्—' इति स्थानिवद्भावेन पूर्वणिचा व्यवधानात् । यस्मिंश्च मिदङ्गं नासौ चिण्परः । परेण णिचा व्यवधानादित्याशङ्क्याह—दीर्घविधौ त्वजादेशो न स्थानिवदिति । 'न पदान्त—' इति सूत्रेणेत्यभिप्रायः । ननु च ह्रस्वविकल्पविधावपीष्टं सिध्यतीत्याशङ्कामपाकरोति—ह्रस्वोक्ताविति । न हि ह्रस्वविधौ स्थानिवद्भावः क्वचित् प्रतिषिद्धस्तेन ह्रस्वे विकल्पेन विधीयमाने णिलोपस्य

---

१. द्वितीयेति णिचि $D_1$. २. णिलोपस्य N, $D_3$, $D_4$. ३. तेन for न $Dc_3$. ४. णिचि च कृते $Dc_3$. ५. पाक्षिकदीर्घभावाय दीर्घोक्तिः । $Dc_3$. ६. चिण्परे णमुल्परे च णौ &c. $Dc_3$. ७. ह्रस्वविकल्पेन $Dc_3$.

पाक्षिक उपधाह्रस्वो न स्यात् । अशमि । अशामि नाजन्तत्वाच्चिण्वदिट् । तस्य असिद्धवदत्राभादिति असिद्धत्वाण्णिलोपः । अशामिषाताम् । अशमिषाताम् भावे । अशमयिषाताम् । ण्यन्तत्वाभावे शम्य

**नोदात्तोपदेशस्य मान्तस्यानाचमेः**

मान्तस्य सेट उपधाया वृद्धिर्न स्यात् चि कृति च न त्वाचमेः । अशमि । अदमि । अन आचामि । आचमिकमिवमीनामिति वक्तव्यम्

---

स्थानिवत्त्वाद्विकल्पेन ह्रस्वो न स्यादित्यर्थः । अशमि व्याख्यातप्रायम् । अशमयिषातामिति । 'आर्धधातुक णेर्गुणायादेशौ । शम्यते मुनिनेति । भावे लः ।

**नोदात्तो** । उपदेशे उदात्तः उदात्तोपदेशः । अ उदात्तोपदेशस्येति किम् । अनामि । अगामि । क इत्येतौ । 'यम उपरमे' । 'अड उद्यमे' इति निपात त्वपाणिनीयो धातुपाठेर्थनिर्देशस्तन्मते संज्ञापूर्वको वि वृद्ध्यभावः । उपदेशे किम् । शामी तमीत्यादि यथा स्या घिनुण् । असत्युपदेशे प्रत्ययस्वरे कृते धातोरनुदात्त न स्यात् । उपदेशेत्यनेनाद्यवस्था लक्ष्यते । अशमि भावे लः । आचामीति । चमु अदने । आङ्पूर्वः । अ

---

१. उपधाया ह्रस्वो $D_2$, P. २. After it—शमयांचक्रे । इत्यादि $D_2$. ३. चामेः $N_1$. ४. °चामेः $N_1$.

वामि । अम्[1]चमविश्रमां वेति केचित् । आमि अमि[3] मा ।
चामि । अचमि । व्यश्रामि । व्यश्रमि । वध हिंसायाम् ।
निवध्योश्चेति न वृद्धिः । अवधि ।[2] जाग्रो विचिण्णल्ङित्सु
युक्तेर्वृद्धिः । अजागारि । ण्यन्तजागर्तेश्चिण्णमुलोर्वा वृद्धिरिति
चित् ।[5] अजागरि । अजागारि ।

**भञ्जेश्च चिणि ॥६।४।३३॥**

भञ्जेर्नलोपो वा स्याच्चिणि ॥ अभाजि अभाञ्जि ।

**विभाषा चिण्णमुलोः ॥७।१।६९॥**

लभेर्नुमागमो वा स्याच्चिण्णमुलोः परतः ॥ अलम्भि ।
लाभि । व्यवस्थितविकल्पत्वात् प्रादेर्नित्यं नुम् । प्रालम्भि ।

---

न्तौ । **अवामीति** । टुवमु उद्गिरणे । त्रिष्वपि कर्मणि लः ।
मि अमि मेति । अम रोगे । 'न माङ्योगे' इत्यडभावः ।
श्रामि । व्यश्रमीति । श्रमु तपसि खेदे च । अजागारीति ।
गृ निद्राक्षये । भावे लः । चिण् । ण्यन्तेति । तथोक्तं मुग्धबोधे ।
मेः परयोरिण्णमोस्तु वेश्च जागुश्च स्वोर्घः' इति । अजागरि ।
मिण्णिच् । ततः कर्मणि लः । ण्यन्तत्वेनाजन्तत्वाच्चिण्वदिट् । तस्य
सिद्धवदत्राभात्' इति णिलोपं प्रत्यसिद्धत्वाण्णिलोपः ।

**भञ्जेः** । **अभाजीति** । भञ्जो आमर्दने । नलोपपक्षे 'अत
धायाः' इति वृद्धिः । **अलम्भीति** । डुलभष् प्राप्तौ । कर्मणि लुङ् ।
लः । चिण् । **प्रादेरिति** । उपसर्गात् परस्येत्यर्थः ।

---

१. अमु° $D_1$. २. मु $D_1$. ३. अमि मा आमि मा $B_2$; अमि मा आमि वा $N_1$. मा अमि $D_4$, C; अमि वा $D_3$. ५. After it अजानि $D_1$. अजागारि । अजागरि । $D_3$.

यदा कर्मैव कर्तृत्वेन विवक्ष्यते तदा सकर्मकाणामप्यकर्म॰
कर्तरि भावे च लकारः ।

**कर्मवत् कर्मणा तुल्यक्रियः ॥३।१।८७॥**

कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत् स्य
कर्मवत्त्वाद्यगात्मनेपदचिण्चिण्वदिटः स्युः । उक्तं च

---

अथ कर्मकर्तरि प्रक्रिया । **यदा कर्मैवेति** । कर्मादीनां का॰
शक्तिरूपत्वात् शक्तेश्च धर्मरूपत्वाद्धर्मस्य च धर्मरहितत्वात्
शब्देन कर्मशक्त्याश्रयं तण्डुलादि द्रव्यमुच्यते । तद्यदा बा॰
व्यापारनिवृत्तौ स्वव्यापारमात्रेवतिष्ठते तदा स्वतन्त्रत्वात् क॰
व्यपदेशं लभते । तदुक्तं हरिणा—

'निवृत्तप्रेषणं कर्म स्वक्रियावयवे स्थितम् ।
निवर्तमाने कर्मत्वे स्वे कर्तृत्वेवतिष्ठते' ॥ इति ।

तत्तु कर्म कर्तृत्वं प्राप्तं कर्मकर्तृ इत्युच्यते यथा लोके ब्राह्मण॰
श्रमणतां ब्राह्मणश्रमण उच्यते ।

**कर्मवत्** । कर्मशब्दोयं गौणः । तस्मादुपचारेण कर्म
क्रियायां वर्तते । यथा मञ्चाः क्रोशन्तीत्यत्र मञ्चशब्दः पुर॰
उपचारस्य तु प्रयोजनं कर्मस्थभावकानां कर्मस्थक्रियाण॰
कर्मवद्भावो यथा स्यात् कर्तृस्थभावकानां कर्तृस्थक्रियाणां च॰
भूदित्येतत् सर्वं मनसि कृत्वाह—**कर्मस्थयेति** । **कर्ता क**॰
**स्यादिति** । 'कर्तरि शप्' इत्यनुवृत्तः कर्ता प्रथमया विपरिणम्य॰
कर्मवत् स्यात् । तस्य च कर्मकर्तृव्यपदेशार्हत्वे **दुर्गसिं**॰
प्रमाणयति—**उक्तं चेति** ।

---

१. कर्तृत्वेन विवक्षितं $D_3$; कर्तृत्वे विवक्ष्यते N. २. Dropped
३. कर्मस्थक्रियया $D_1$. ४. After this—कर्मस्थभावकर्मक्रियाणां च
कर्मवद् भवति । न कर्तृस्थभावकानां कर्तृस्थक्रियाणां कर्मस्थः पच॰
कर्मस्थाविभेदः क्रिया । मांसासिभावः कर्तृस्थः कर्तृस्थावगमः क्रिया । कर्म
C; $N_1$ (कर्मस्थभावकानां कर्मस्थक्रियाणां च $N_1$; also न तु कर्तृस्थ॰
कर्मस्थावाभिदः क्रिया $N_1$).

'क्रियमाणं तु यत् कर्म स्वयमेव प्रसिध्यति ।
सुकरैः स्वैर्गुणैर्यस्मात् कर्मकर्तेति तद्विदुः' ॥

परत्वाच्छपि प्राप्ते कर्मकर्तरि यग्वाच्यः । कर्तरि कर्मेत्यनुवृत्तौ शेषात् कर्तरीति पुनः कर्तृग्रहणात् कर्तैव यः कर्ता तत्रैव परस्मैपदं न कर्मकर्तरि । भिद्यते काष्ठं स्वयमेव । अत्र कर्तुस्तिङोक्तत्वात् प्रथमा । अभेदि । पच्यते ओदनः स्वयमेव । अपाचि । यदा भावे लकारस्तदा काष्ठात् कर्तरि तृतीया ।

---

**क्रियमाणमिति** । क्रियमाणं क्रियया ईप्स्यमानं कर्म ओदनादि यद्यदा स्वयमेवात्मनैव न च कर्त्रन्तरेण प्रसिध्यति विक्लेदादिकमुपगच्छति । किंविशिष्टं कर्म । सुकरैरनायाससाध्यैः स्वैरात्मीयैर्गुणैर्धर्मैर्विक्लेदाद्यत्वादिभिर्विशिष्टं यस्मात् अतः कर्तृत्वाद्धेतोस्तदा कर्मकर्तेति विदुः कर्मकर्तृशब्देन व्यपदिशन्तीत्यर्थः । **भिद्यते काष्ठं स्वयमेवेति** । अत्र कर्तरि लकारः । स्वयमित्यव्ययं तृतीयान्तात्मशब्दार्थे वर्तते । स्वयमात्मना करणभूतेनेत्यर्थः । भिद्यते विदीर्यते । विदारमात्रवचनो ह्यत्र भिदिः । धातूनामनेकार्थत्वात् । भेदनं प्रति काष्ठमेव कर्तृ । एवं पच्यते ओदन इत्यादौ विक्लेदादिमात्रवचनाः पच्यादयो ज्ञेयाः । **अभेदीति** । लुङ् । च्लिः । चिण् । तलोपः । **यदा भावे लकार** इति । अतिदेशं विनापि च तत् कार्यं स्यात् तदापि भाव्यमिति कृत्वा तद्ग्रहणमिति भावः । **कर्तरि तृतीयेति** । कर्तुस्तिङानभिधानात् । लोनुवृत्तेरिति । लिङ्याशिष्यङ् इति ह्विलकारको निर्देशः । तत्र लोनुवृत्तोरित्यर्थः । कर्मवदित्यत्र कर्मणेति किम् । करणाधिकरणाभ्यां तुल्यक्रियस्य मा भूत् । साध्वसिः छिनत्ति साधु स्थाली पचति । 'धातोरेकाचः—' इति धात्वनुवृत्तेरेकसंख्यायाश्च विवक्षया यस्मिन् धातौ कर्मणोपस्थापिते यत् कर्म

---

१. च D1. २. कर्तरि D4. ३. तत्र P, D2, B2. ४. कर्त्रा Dc3.

लोनुवृत्तेस्तिङ्वाच्यस्यैव कर्तुःकर्मवत्त्वम् । तेनात्र न द्विर्त
भिद्यते काष्ठेन ।

तपस्तपः कर्मकस्यैव ॥३।१।८८॥

तपः कर्मकस्यैव तपेः[1] कर्ता कर्मवत् स्यात् ॥
तपस्तापसः । तपोर्जयतीत्यर्थः । तपोनुतापे चेति कर्म[2]
चिण् न । अतप्त । तपःकर्मेति किम् । उत्तपति सुव
श्रद्धावत्कर्तृकात् सृजो यक्चिणौ कर्तरीति[3] केचित् । स
स्रजं भक्तः । असर्जि ।[4]

---

तस्मिन्नेव धातौ स यदि कर्ता स्यात् तदा कर्मवद्भावादिति । इ
पचत्योदनं देवदत्तः । राध्यत्योदनः स्वमेव । कर्मस्थभाव
कर्मस्थक्रियाणामेव भवति । कर्तृस्थभावक्रियाणां नेति किम् । ग
ग्रामम् । गच्छति ग्रामः स्वयमेव । अत्र गमेः क्रिया कर्तृ
माससहचरित आसिः मासासिः । अपरिस्पन्दसाधनसाध्योभ
सपरिस्पन्दसाधनसाध्या क्रिया ।

तपः । पूर्वं क्रियासादृश्य एव कर्मवद्भावो विहितः । स ।
वैसादृश्ये न प्राप्नोतीति विध्यर्थमिदम् । तप्यते तपस्तापस
अत्रोपवासादिकं तपः तापसं तपतीति तापसस्य कर्मवत् । कर्माव
तपेः क्लेशार्थता । तापसस्य कर्त्रवस्थायां तपेरर्जनार्थता ।
तपस्तापस इति अर्जयतीत्यनेन दर्शयति । अतप्तेति । 'झलो झलि
सिचो लुक् । श्रद्धावदिति । तथा बोपदेवपण्डितैः 'सृजः श्राद्धा
च' इति यक्चिणात्मनेपदानि विहितानि भाष्ये इत्युक्तम् । '
युज्योः श्यंस्तु । सृजियुज्योः सकर्मकयोः कर्ता बहुलं कर्मवद्भ
वक्तव्यम् । श्यंस्तु भवति । सृजेः श्रद्धोपपन्ने कर्तरि कर्मव
वाच्यश्चिणात्मनेपदार्थः । सृज्यते मालाम् । असर्जि मालामिति । य
न्याय्ये कर्मकर्तरि यकोभावाय । युज्यते ब्रह्मचारी योगम्'

---

१. तपतः C. २. कर्तरि $D_3$. ३. कर्मकर्तरीति C. ४. After t
श्रद्धावत्कर्तृकात् किम् । मालां करोति मालिकः । व्यन्यसृष्ट मालो मिथुनम्
(सृजाति मालां मालिकः । व्यत्यसृष्ट माला मिथुनम् N).

कुषिरजोः प्राचां श्यन् परस्मैपदं च ॥१।३।९०॥

अनयोः कर्मकर्तरि श्यन् परस्मैपदे वा स्तः ॥ कुष्यति
ुष्यते वा पादः स्वयमेव । रज्यति । रज्यते ।[२] व्यवस्थित-
िकल्पत्वादार्धधातुके न । अकोषि । अरञ्जि ।

अचः कर्मकर्तरि ॥३।१।६२॥

अजन्ताच्चलेश्चिण् वा स्यात्[३] कर्मकर्तरि तशब्दे ।[४] अकारि ।
ृकृत ।[६]

दुहश्च ॥३।१।६३॥

अदोहि । अदुग्ध ।[७]

---

कुषिरजोः । कुष निष्कर्षे । रञ्ज रागे । यगात्मनेपदयोर-
वादौ । रज्यतीति । 'अनिदिताम्—' इत्यनुनासिकलोपः । अकोषीति ।
र्मवद्भावाच्चिण् ।

अचः । प्राप्तविभाषेयम् । अकारीति । 'अचो ञ्णिति' इति
ृद्धिः । अकृतेति । 'ह्रस्वादङ्गात्—' इति सिचो लोपः । तस्या-
सिद्धत्वात् गुणः प्राप्तः 'उश्च' इति कित्त्वान्न ।

दुहः । दुह प्रपूरणे । अस्माद्धातोश्चिण् वा स्यात् कर्मकर्तरि
शब्दे परे । अदुग्धेति । 'शल इगुपधा—' इति क्सः । तस्य
लुग्वा दुह—' इति लुक् । 'दादेः—' इति घः । धत्वम् । जश्त्वम् ।

---

१. पदं $N_1$. २. After it—वा वस्त्रं स्वयमेव $B_2$; वा $D_3$. ३. च्चिणादेशः
याद्वा N; कर्मकर्तरि च्चिण् वा स्यात् $D_3$. ४. कर्मकर्तृतशब्दे $D_2$.
. After it—परे $D_3$. ६. After it—कटः स्वयमेव $B_2$, N. ७. After
—अधुक्षत् गौः स्वयमेव पयो मुंचति $B_2$, $N_1$ (मुञ्चतीत्यर्थः N).

न रुधः ॥३।१।६४॥

रुधश्च्लेः[1] कर्मकर्तरि चिण् न ॥ अरुद्ध । पच
द्विकर्मकाणां कर्मकर्ता[2] न कर्मवदिति केचित् । चिनो
फलानि स्वयमेव[3] । द्विकर्मकाभ्यां पचूदुहाभ्यां कर्मकर्ता
नेति केचित् । अपक्ताम्रः फलम् । अदुग्ध गौर्दुग्धम् ।

न दुहस्नुनमां यक्चिणौ ॥३।१।८९॥

एषां कर्मकर्तरि यक्चिणौ न स्तः ॥ दुहेरने
षिध्यते । चिण् प्रागेव विकल्पितः । दुग्धे । प्रस्नुते[4] । [6]
न निषेध इति केचित् । अस्नाविष्ट । स्नुक्रमोरिति नेट् ।
नमते । अनंस्त ।[7] णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्म

---

न रुधः । रुधिर् आवरणे । अरुद्धेति । 'झलो झ
सिचो लोपः । तस्यासिद्धत्वात् लघूपधगुणः प्राप्तो 'लिङ्
इति कित्त्वान्न । धत्वजश्त्वे ।

न दुह । कर्मकर्तरीति विशेषणम् शुद्धे कर्मणि
प्राप्तयोः प्रतिषेधार्थम् । दुग्ध इति । शप् । अदादित्वात्
घत्वम् । 'झषस्तथो—' इति धः । जश्त्वम् । प्रस्नु
स्नु प्रस्रवणे । चिण्वदिट इति । तथोक्तं मुग्धबोधे । 'ञि
त्वामिण्' इति । नमत इति । णमु प्रह्वत्वे शब्दे च ।
तण्यर्थो णमिरत्र । एवं हि कर्मस्थक्रियः स्यात् । यथ
दण्डं देवदत्तः । नमयते दण्डः स्वयमेवेति ण्यन्ताव

---

१. च्लेः dropped N. २. कर्ता D₂. ३. स्वयमेव फलानि N.
९. After it—गौः D₂, D₄, B₂; गौः स्वयमेव N.
दण्डः स्वयमेव । N. ७. Before it—नमि अन्तर्भूतण्यर्थः । ;
देवदत्तः । N.

ाचिणौ न । कारयते ।[१] ण्यन्तात् कर्मकर्तरि चङ् वेति
चेत् । अचीकरत । अकारयिष्ट[३] । अकारिष्ट । ग्रथ्नीते ।
ान्थिष्ट । ग्रथ्नीते । अग्रन्थिष्ट ।[४] ब्रूते । अवोचत ।
हते । आहत । आघानिष्ट[६] । आवधिष्ट । कॄगॄश्रिञ्[७]
ार्थेभ्यः[८] सन्नन्ताच्च यक्चिणौ न ॥ श्रिञ्वर्जात्[९] चिण्व-
ऽपि नेति केचित् । किरते । अकीर्ष्ट । गिरते ।

---

ायते इति । ण्यन्तस्योदाहरणम् । अचीकरतेति । कारि अस्मा-
ङि 'णौ चङि' इत्युपधाह्रस्वः । द्वित्वम् । चुत्वम् । 'सन्व-
नि—' इति सन्वद्भावः । 'सन्यतः' इतीत्वम् । 'दीर्घो लघोः' ।
ारयिष्टेति । चिण्वदिडभावे । अकारिष्टेति । चिण्वदिटि ।
नीते ग्रथ्नीत इति । ग्रन्थग्रन्थ संदर्भे । श्ना । 'ई हल्यघोः' ।
निदिताम्—' इति नलोपः । अवोचतेति । 'ब्रुवो वचिः'
वचिः । 'अस्यति वक्ति—' इत्यङ् । 'वच उम्' । अत्राप्य-
र्भावितण्यर्थत्वात् कर्मस्थक्रियत्वम् । आहत इति । 'आङो यमहनः'
ात्मनेपदम् । तद्विधानेकर्मकत्वमप्यन्तर्भावितण्यर्थः । आहतेति ।
वदिडभावे अनुनासिकलोपः । 'हनः सिच्' इति कित्त्वात्
स्वादङ्गात्' इति सिचो लुक् । आघानिष्टेति । चिण्वदिट् । वृद्धिः ।
ाम् । आवधिष्टेति । 'आत्मनेपदेषु—' इति वधादेशः । कॄगॄ इति ।
विक्षेपे । गॄ निगरणे । श्रिञ् सेवायाम् । भूषार्था अलंकारार्थाः ।
रत इति । तुदादित्वात् शः । 'ॠत इत्' । रपरः । अकीर्ष्टेति ।

---

१. After it—कटः स्वयमेव । N. २. Dropped $B_2$. ३. अश्रेथिष्ट C.
After it—ग्रन्थः स्वयमेव । $N_1$. ५. C, P drop it. ६. अघानिष्ट ।
धिष्ट $D_3$, $B_2$; अघानिष्ट N. ७. क्षृगॄ° $D_1$. ८. भूषणार्थेभ्यः $N_1$.
वर्जं $D_3$.

अगीष्ट । श्रयते । अश्रयिष्ट । अश्रायिष्ट । तंसते । अतंसिष्ट
चिकीर्षते । अचिकीर्षिष्ट ।[1]

ण्यादयो ण्यन्तनिष्कर्मगत्यर्था मुख्यकर्मणि ।
प्रत्ययं यान्ति दुह्यादिर्गौणेऽन्ये तु यथारुचि ॥ १ ॥

---

लुङ् । सिच् । इट् । रपरः । अश्रयिष्टेति । चिण्वदिट् । तंसत इति
तसि अलंकारे । चिकीर्षत इति । डुकृञ् । सन् । द्वित्वम्
'अज्झन—' इति दीर्घः । उरत् । सन्यतः । ऋत इत् । रपरः । दीर्घः

ण्यादय इति । ण्यादयो द्विकर्मकसंग्रहकश्लोके पठिताः । नी
इत्यादयः निष्कर्माणश्च गत्यर्थाश्च निष्कर्मगत्यर्थाः । ण्यन्ताश्च ते निष्कर्म
गत्यर्थाश्च ण्यन्तनिष्कर्मगत्यर्थाः । ते न्यादयश्च मुख्यकर्मणि विहि
प्रत्ययं लकृत्यक्तखलर्थान् प्राप्नुवन्ति । दुह्यादिस्तस्मिन्नेव श्लो
दुहयाच्यर्थ इति पठितो गौणे कर्मणि कर्मप्रत्ययमाप्नोति । अन्
स्वित्यादि । ण्यादिण्यन्तनिष्कर्मगत्यर्थदुहादिभ्योऽन्ये 'गतिबुद्धि—
इत्यादिसूत्रेषु पठिता यथारुचि रुचिमनतिक्रम्य यथेच्छं मुख्ये गौणे व
कर्मणि कर्मप्रत्ययं यान्तीत्यर्थः । तथोक्तं भाष्ये—

'प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् ।
अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः' ॥ इति ।

द्विकर्मणां नीप्रभृतीनाम् ।

---

१. After it—कटः स्वयमेव N₁. २. न्यादयो D₁, D₃, P.

निन्ये विजनमजागरि रजनिमगामि मदमयाचि संभोगम् ।
गोपी हावमकार्यत भावश्चैनामनन्तेन ॥ २ ॥

इति भावकर्मप्रक्रिया ॥

---

'नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च । द्विकर्मकेषु
ग्र' इति तस्यैव वचनात् । अस्योदाहरणान्याह—निन्ये इति ।
ान गोपी विजनं निन्ये नीता । अत्र गोपी मुख्यं कर्म । तदर्थत्वा-
त्य । अतो मुख्ये कर्मणि ले जाते गोपीत्यत्र प्रथमा । तिङभि-
ात् । रजनिं रात्रिमजागरि जागरिता गोप्यनन्तेन । इदं ण्यन्त-
र्मण उदाहरणम् । अत्रापि तथैव मुख्यत्वम् । गोप्यनन्तेन
ामि प्रापिता । इदं ण्यन्तगत्यर्थस्योदाहरणम् । अत्रापि पूर्ववत् ।
ान्तेन संभोगमयाचि याचिता । इदं दुह्यादेः । याचेस्तु संभोगो
: । गोपी अमुख्या । तस्याः संभोगार्थत्वात् । अत्र गौणे कर्मणि
प्रत्ययस्ततः प्रथमा । अनन्तेन गोपी हावमनुरागोत्सवमकार्यत ।
ोपी गौणं तत्र प्रत्ययः । 'हृक्रोः—' इति कर्मत्वात् । एवं
भावश्चाकार्यत । अत्र भावो मुख्यं कर्म । तत्रापि प्रत्ययः ।
तु यथारुचीति वचनात् । इति श्लोकार्थः । अजागरीति
जागर्तेश्चिणि रूपम् । केषांचिन्मतेन वृद्ध्यभावः । अगमीति ।
द्ध्रस्वः ।

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन्प्रसादे निरगमदमलो भावकर्मप्रसङ्गः ॥

---

ाव° B2, D4.

# अथ लकारार्थप्रक्रिया.

**अभिज्ञावचने लृट् ॥३।२।११२॥**

स्मृतिपर्यायधातुयोगे भूतानद्यतने धातोर्लृट् स्यात्
स्मरसि कृष्ण गोकुले वत्स्यामः ।

**न यदि ॥३।२।११३॥**

यद्युक्ते प्रागुक्तं न ॥ अभिजानासि कृष्ण यद्वनेभु

**विभाषा साकाङ्क्षे ॥३।२।११४॥**

यच्छब्देन योगेयोगेपि उक्तार्थे लृड् वा स्या
लक्षणसंबन्धे प्रयोक्तुराकाङ्क्षायाम् ॥ स्मरसि कृ

---

**अभिज्ञा** । वचनग्रहणं पर्यायार्थमित्यभिप्रेत्याह—**स्मृति**
पर्यायश्च जानासि स्मरसि बुध्यसे चेतयसे इति । **वत्स्या**
वस निवासे । लृट् । मस् । 'स्यतासी—' इति स्यः । 'सः स
इति सस्य तः । 'अतो दीर्घो यञि' इति दीर्घः ।

**न यदि** । यदीति सप्तमी । तेन यत्र यच्छब्दोस्ति तत्र नि
वचनं यच्छब्दयुक्तं स्यादित्याह—**यद्युक्ते** इति ।
वचने लृणेत्यर्थः । **अभुञ्ज्महीति** । भुज पालना
अस्मादनद्यतने लङ् । 'भुजोनवने' इति तङ् । महिङ् ।

**विभाषा** । उक्तार्थेभिज्ञावचने । लक्ष्यलक्षणसंबन्ध
सप्तमी । लक्ष्यलक्षणे यो यः संबन्धस्तस्मिन् विषये प्रयो

---

१. यच्छब्दयोगे° D3.

ः। तत्र गाश्चारयिष्यामः। वासो लक्षणं चारणं लक्ष्यम्।
ः। एवं यच्छब्दे।

**परोक्षे लिट् ॥३।२।११५॥**

ाकार। उत्तमपुरुषे वैचित्त्यात् पारोक्ष्यम्। सुप्तोहं किल
॥ अत्यन्तापह्नवेपि लिट्। नाहं कलिङ्गं जगाम।

**हशश्वतोर्लङ् च ॥३।२।११६॥**

ाभ्यां योगे लिड्विषये लङ् चाल्लिट् ॥ इति हाकरोत्
ा। शश्वदकरोत् चकार वा।

---

ः। **वास** इत्यादि। वासः परिज्ञातत्वाल्लक्षणम्।
चारणं लक्ष्यते। चारणं लक्ष्यमपरिज्ञातत्वात्। लक्षणं
ग्रपरस्य लक्षणं स्याद्यथाग्नेर्धूमः। **पक्षे** लॅङिति। यथा स्मरसि
वसाम तत्र गामचारयामेते। एवं यच्छब्द इति। यथा
ृष्ण यद्वने वत्स्यामस्तत्र यद्गां चारयिष्यामः। पक्षे लङ्।

ोक्षे। व्याख्यातचरम्। **उत्तम** इति। विक्षिप्तं चित्तं यस्य
ास्तस्य भावो वैचित्त्यम्। आत्मसाध्यापि क्रिया यदा
ानेनोपलक्ष्यते तदासौ परोक्षा भवति। तेनोत्तमविषयेपि
। अतस्तत्रापि लिट्। **विललापेति**। लपेर्विपूर्वस्योत्तमे णलि
**अत्यन्तेति**। अपह्नवोपलापः। कस्यचिदन्तं स्यात्।
ह्नवस्तत्र लिट् स्यात्। नाहं कलिङ्गान् जगामेत्यत्र न
लिङ्गदेशावस्थापह्नवः अपि तु गमनस्यापीत्यत्यन्तापह्नवः।
गमात्रस्यापह्नवः न गमनस्यापि तदा लङेव। नाहं कलिङ्गेष्व-
।

---

ाम् D₂. २. D₁ drops अपि. ३. After it—च D₁, D₂, D₃, D₄,
लङिति। परोक्षे। Dc₁. ५. कश्चिदन्त्यं न स्यात् Dc₃. ६. °स्थान-
३.

**प्रश्ने चासन्नकाले ॥३।२।११७॥**

लङ्[1] चालिट्[2]। अगच्छत् किम्। जगाम आसन्नकाले किम्। कंसं जघान किम्।

**लट् स्मे ॥३।२।११८॥**

स्मयोगे लिडर्थेपि लट् स्यात् ॥[4] यजति स्म युधि

**अपरोक्षे च ॥३।२।११९॥**

भूतानद्यतनेपरोक्षेपि[5] स्मयोगे लट् स्यात् ॥ [illegible] पिता ब्रवीति।

**ननौ पृष्टप्रतिवचने ॥३।२।१२०॥**

ननुयोगे भूतेपि[6] लट्[7] पृष्टप्रतिवचने ॥[8] अकार्षीः ननु करोमि भोः। पृष्टप्रतिवचन[9] इति किम्। नन्वकार्षीत्

---

प्रश्ने इति। पञ्चवर्षाभ्यन्तर आसन्नकालः। अगच्छ 'इषुगमि—' इति छः। ब्रवीतीति। 'ब्रुव ईट्'।

ननौ। प्रश्नः पृष्टम्। भावे निष्ठा। प्रश्नपूर्वकं प्रति शाकपार्थिवादित्वादुत्तरपदलोपी समासः। अकार्षीः किमिति ननु करोमि भोः। इति वचनम्। पृष्टप्रतिवचने किम्। ननु

---

१. Before it—संनिहितकालसंबंधाविषये प्रश्ने च C; आसन्नकामाने भूतानद्यतनपरोक्षवृत्तेर्धातोः $N_1$. २. After it—च $D_1$, drops अपि. ४. Before it—आह स्म हारितः $B_2$, $D_4$. ५. °स्म लङर्थेपि लट् स्यात् $N_1$; लिडर्थेपि $D_4$. ६. पृष्टेपि C. ७. [illegible] स्यात् C, $D_3$. ८. स्यात् after it in $D_2$. ९. P, $D_2$, D[illegible] drop from पृष्ट...°र्षीत्.

**नन्वोर्विभाषा ॥३।२।१२१॥**

आभ्यां योगे[2] प्रागर्थे लङ् वा स्यात्[3] ॥ अकार्षीः किम् न करोमि । नाकार्षम् । अहं नु करोमि । अहं न्वकार्षम् ।

**पुरि लुङ् चास्मे ॥३।२।१२२॥**

पुराशब्दयोगे[4] भूतानद्यतने लुङ्लटौ वा स्तः न तु स्मयोगे पक्षे यथाप्राप्तम् । वसन्तीह पुरा छात्राः । अवात्सुः । अवसन् ऊषुर्वा । अस्मे[5] किम् । यजति स्म पुरा ।

---

**नन्वोरिति** । **प्रागर्थे** पृष्टप्रतिवचने इत्यर्थः । **नाकार्षमिति** मिपोम् ।

**पुरीति** । पुराशब्देत्यनेन पुराशब्द इहोपपदत्वेनोपात्तो न पूः शब्द इति दर्शयति । एवं तर्हि तस्याकारान्तत्वात् पुरीति सप्तम्यन्तस्य निर्देशो न घटते । मैवम् । 'आतो धातोः' इत्यतः 'आतः' इति योगविभागादाकारलोपाद् घटिष्यते । ननु पूःशब्दोपादानं किं न स्यात् न । तस्य न घटते वृत्त्यभावात् । इह च 'अनद्यतने' इति मण्डूकप्लुत्यानुवर्तते । अत एवाह—**भूतानद्यतन** इति । चकारेण लटोनुकर्ष[6] इत्याह—**लुङ्लटाविति** । **पक्षे यथाप्राप्तमिति** । लङ्लिटौ **अवात्सुरिति** । लुङ् । 'सिजभ्यस्त—' इति झेर्जुस् । सिचि वृद्धि हलन्तलक्षणा । पूर्ववत् सस्य तः । **अवसन्निति** । लङ् । **ऊषुरिति** लिट् । 'परस्मैपदानाम्—' इति झेरुस् । द्वित्वम् । 'वचिस्वपि—' इति प्रकृतेः संप्रसारणम् । 'लिटि—' इत्यभ्यासस्य । 'शासिवसि—' इति षः

---

१. एतयोर्योगे $D_1$; ननु आभ्यां योगे C, $N_1$. २. Before it—भूतेकाले $D_1$ ३. Dropped $N_1$. ४. Before it—अनद्यतनग्रहणमिह मण्डूकप्लुत्यानुवर्तते $N_1$. ५. अस्मेति C. ६. लटानुकर्षं $Dc_1$.

## यावत्पुरानिपातयोर्लट् ॥३।३।४॥

आभ्यां निपाताभ्यां योगे भविष्यति काले [१]
स्यात् ॥ यावद् भुङ्क्ते । पुरा भुङ्क्ते । निपातयोः
यावद् दास्यते तावद् भोक्ष्यते । करणभूतया पुरा यास्यति

## विभाषा कदाकर्ह्योः ॥३।३।५॥

आभ्यां योगे भविष्यति लड् वा स्यात् ॥ पक्षे
प्तासम् । कदा कर्हि वा भुङ्क्ते भोक्ष्यते भोक्ता वा ।

## किंवृत्ते लिप्सायाम् ॥३।३।६॥

विभक्त्यन्तं डतरडतमान्तं च किमो रूपं किंवृत्तं
भविष्यति वा लट् स्यात् लिप्सायाम् ॥ कं[४] कतरं व
त्वं भोजयसि भोजयिष्यसि भोजयितासि वा ।[५]

---

यावद् भुङ्क्त इति । 'भुजोनवने' इति तङ् । यावद्दास
भोक्ष्यत इति । यत् परिमाणमस्य । 'यत्तदेतेभ्यः—' इ
'आ सर्वनाम्नः—' इत्यात्वम् । पुरा यास्यतीति । पॄ पालन
'भ्राजभास—' इति क्विप् । 'उदोष्ठ्य—' इत्युत्वम् ।
करणे तृतीया ।

किंवृत्ते । डतरडतमान्तमिति । 'किंयत्तदो
द्वयोरेकस्य डतरच्' । 'वा बहूनां जातिपरिप्रश्ने डतमच्
लब्धुमिच्छा लिप्सा । भोजयसीति । भुजेर्हेतुमण्ण्यन्त
भोजयिष्यतीति । लट् । भोजयितासि वेति । लुट् ।
किम् । को द्वारकां गमिष्यति ।

---

१. वत्स्यति $D_2$. २. After it—काले $D_1$. ३. °डतमप्र
४. C drops कम्; किम् $D_4$. ५. After it—लिप्सायां किम् ।
गमिष्यति । $N_1$, $D_2$.

**लिप्स्यमानसिद्धौ च ॥३।३।७॥**

लिप्स्यमानेनान्नादिना स्वर्गादेः सिद्धौ गम्यमानायां[1] भविष्यति लड् वा स्यात् ॥ योऽन्नं ददाति दास्यति दाता वा स स्वर्गं [2]लोकं याति यास्यति याता वा ।

**लोडर्थलक्षणे च ॥३।३।८॥**

लोडर्थस्य प्रैषादेः[3] लक्षणक्रियावचनाद्धातोर्भविष्यति लड् वा स्यात् । आशंसायामपीति केचित् । कृष्णश्चेद् भुङ्क्ते त्वं गाश्चारय । पक्षे लृट्लुटौ ।

---

**लिप्स्य** । लिप्स्यमानात् सिद्धिर्लिप्स्यमानसिद्धिः । लब्धुमिष्यमाणं लिप्स्यमानमन्नादि । अकिंवृत्तार्थीयमारम्भः । **योऽन्नमित्यादि** । लिप्स्यमानादन्नात् स्वर्गसिद्धिमाचक्षाणो दातारं प्रोत्साहयति ।

**लोडर्थ** । प्रैषादेरित्यादिना विध्यादयो गृह्यन्ते । लक्ष्यतेऽनयेति लक्षणा । सा चासौ क्रियेति लक्षणक्रिया । तद्वचनादित्यर्थः । चारयेति । 'प्रैषातिसर्ग—' इति प्रैषे लोट् । स च प्रैषश्चारणविषयस्य । कृष्णभोजनं निमित्तत्वाल्लक्षणम् । कृष्णभोजनमाशङ्क्य चारणं ... इत्यस्ति कृष्णभोजनस्य प्रैषं प्रति निमित्तत्वम् । **पक्षे लृट्लुटाविति** । ... कृष्णश्चेद् भोक्ष्यते भोक्ता वा त्वं गाश्चारयेति । लिङर्थसूत्रं ... ख्यातप्रायत्वात् त्यक्त्वा व्याख्यायते । 'लिङ् चोर्ध्वमौहूर्तिके ।३।३।९॥' ऊर्ध्वं मुहूर्ताद्भवः ऊर्ध्वमौहूर्तिकः । निपातनात् समासोत्तरपदवृद्धी । ऊर्ध्वमौहूर्तिके लोडर्थलक्षणे भविष्यति लिङ् लट् च वा स्तः । ऊर्ध्वं मुहूर्तादुपरि मुहूर्तस्य वा गुरुश्चेदागच्छति आगमिष्यति आगन्ता वा अथ त्वं छन्दोऽधीष्व ।

---

१. गम्यायां D4. २. D2, D3 drop लोकम्. ३. प्रेषणादेः D3. ... लक्षणस्य N1. ५. C drops इति. ६. Before it—कृष्णभोजनं चारणं लक्षणम् N1.

## वर्तमानसामीप्ये वर्तमानवद्वा ॥३।३।१३

समीपमेव सामीप्यम्। स्वार्थेऽपि ष्यञ् अनेन ज्ञा
वर्तमानसमीपे भूते भविष्यति वा काले वर्तमानवत् प्रत्य
स्युः। कदा आगतोऽसि । अयमागच्छामि । अयमा
कदा आगमिष्यसि । एष आगच्छामि आगमिष्यामि वा ।

---

'वर्तमाने लट्' इत्यारभ्य यावत् 'उणादयो बहुलम्
वर्तमाने विहितास्ते भूते भविष्यतीति विधीयन्ते—

वर्तमान । ज्ञाप्यते । ज्ञापनप्रयोजनं चातुराश्रम्य
अयमागमिष्यामीत्यर्थे एष आगच्छामि । वत्करणं सर्वसादृश्य
येन विशेषेण प्रकृत्युपपदोपाधिना वर्तमाने प्रत्यया
स्तथवात्र स्युः । पूङ्यजिभ्यां वर्तमाने शानन्
वर्तमानसामीप्येऽपि ताभ्यामेव स्यात् । पचमानो यजमान
ताच्छील्यादिविशिष्टे कर्तरि इष्णुच् विहितः वर्तमानसामीप्येऽपि
अलंकरिष्णुः । विप्रकर्षे तु वर्षेण गमिष्यतीति लृडेव । परुद्ग
लडेव । यस्तु मन्यते गच्छामीति पदं वर्तमानार्थमेव कालान्तराव
वाक्यात् न च वाक्यगम्यः कालः पदसंस्कारायोपयुज
प्रतिपत्तारं प्रति प्रकरणमिदमारब्धव्यमेव ।

---

१. Before it—'लिङ् चोर्ध्वमौहूर्तिके ॥' ३।३।९॥ ऊर्ध्वमौहूर्तिके
प्रैषादेर्लक्षणक्रियावचनाद्धातोर्भविष्यति काले लिङ् वा लट् च पक्षे
लृटौ । ऊर्ध्वमुहूर्तादुपरिमुहूर्तस्य उपाध्यायश्चेदागच्छेत् आगच्छति आग
आगन्ता वाथ त्वं व्याकरणमधीष्व । $D_3$. २. °सामीप्ये $D_1$. ३.
अय°.. वा dropped $D_3$.: अहमागमम् $D_4$. ४. गमिष्यसि $N_1$. ५. ग
$N_1$. ६. गमिष्यामि वा $D_4$, $N_1$. ७. इति dropped $Dc_3$.

**आशंसायां भूतवच्च ॥३।३।१३२॥**

भविष्यति काले भूतवत् चकारात् वर्तमानवच्च प्रत्यया वा आशंसायाम् । देवश्चेद्वर्षति अवर्षीत् वर्षिस्यति वा ऐतद्‌ ं वपामः अवाप्स्म वप्स्यामो वा ।

**क्षिप्रवचने लृट् ॥३।३।१३३॥**

क्षिप्रपर्यायोपपदे भविष्यति लृडेव स्यादाशंसायां ने त् ॥ वृष्टिश्चेत् क्षिप्रमाशु त्वरितं वा आयास्यति शीघ्रं ामः । नेति वाच्ये लृड्उक्तिर्लुड्बाधार्था। श्वः शीघ्रं वप्स्यामः ।

**आशंसावचने लिङ् ॥३।३।१३४॥**

आशंसापर्यायोपपदे भविष्यति लिडेव स्यान्न भूतवत् दुपेयात् आशंसे अधीयीय आशंसे क्षिप्रमधीयीय ।

---

**आशंसायाम्** । आशंसनमाशंसा । अप्राप्तस्य प्राप्तीच्छा । स्मेति । टुवप् बीजतन्तुसंताने । लुङ् । हलन्तलक्षणा वृद्धिः । मान्यातिदेशोयम् । अतो भूतविशेषौ लङ्लिटौ न भवतः ।

**क्षिप्र** । वचनग्रहणं पर्यायार्थमित्यभिप्रेत्याह—**क्षिप्रपर्यायेति** । वेत्यस्यापवाद इत्याह—**न भूतवदिति** ।

**आशंसा** । गुरुश्चेदुपेयादिति । इण् । **अधीयीयेति** । इङो लिङ् । । उत्तमैकवचनम् इट् । इटोत् । ङित्त्वाद्गुणाभावः । सलोपः ः—' इतीयङ् । उपसर्गेण सह सवर्णदीर्घः । **आशंसे क्षिप्रमधी**- । अत्र क्षिप्रवचनमप्युपपदम् । आशंसावचनमपि । तत्र

---

ने for एतद P, C, B2. २. न तु C. ३. न्न तु C.

परत्वाल्लिङेवभवति न लट् । तस्य तु यत्राशंसावचनं नास्ति
सोवकाशः । स्पष्टत्वात् त्यक्तं सूत्रचतुष्टयं व्याख्यायते । 'नानद्यतनव
क्रियाप्रबन्धसामीप्ययोः ॥३।३।१३५॥ क्रियाणां प्रबन्धेन सातत्येनानुष्ठा
प्राकरणिकानां कालानां सामीप्ये भूतभविष्यदनद्यतनवत् लङ्लुटौ
स्तः । यावज्जीवं भृशमन्नमदात् दास्यति वा । सामीप्ये । ये
पौर्णमास्यतिक्रान्ता एतस्यामग्नीनाधित । सोमेनायष्ट । गामदित
पौर्णमास्यन्तरेणाव्यवधानं सामीप्यम् । आगामिन्यामाधास्यते
'भविष्यति मर्यादावचनेवरस्मिन्' ॥३।३।१३६॥ भविष्यति का
मर्यादावचने सति अवरस्मिन् प्रविभागेनद्यतनवत् प्रत्यया न स्यु
योयमध्वा गन्तव्य आ पाटलिपुत्रात् तस्य यदवरं कौशाम्ब्यास्त
द्विरोदनं भोक्ष्यामहे तत्र सक्तून् पास्यामः । भूते मर्यादाया अनुव
च परस्मिंश्च लुङ्लुटौ स्तः । अक्रियाप्रबन्धसामीप्यार्थं सूत्रम्
'कालविभागे चानहोरात्राणाम्' । ३।३।१३७॥ कालमर्यादाविभ
सत्यवरस्मिन् प्रविभागे सति भविष्यति न चेदहोरात्रसंबन्धी विभाग
पूर्वेणैव सिद्धेहोरात्रनिषेधार्थं सूत्रम् । योयं संवत्सर आगामी त
यदवरमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे । अनहोरात्राणां किम्
त्रिविधोदाहृतिः । योयमागामी मासस्तस्य योवरः पञ्चदशरा
योयमागामी त्रिंशद्रात्रस्तस्य योवरोर्धमासः योयमागामी त्रिंशद्रात्रस्त
योवरः पञ्चदशरात्रस्तत्र युक्ता अध्येतास्महे । तत्र सक्तून् पातास्म
'परस्मिन् विभाषा' ॥३।३।१३८॥ भविष्यति मर्यादेत्याद
सर्वमनुवर्तते । योयमागाम्यब्दः तस्य यत् परमाग्रहायण्यास
युक्ता अध्येष्यामहे अध्येतास्महे ।

**भूते च ॥३।३।१४०॥**

उताप्योः समर्थयोरित्यादि लिङ्निमित्ते भूतेर्थे लृङ् स्यात् क्रियाया अनिष्पत्तौ[2] ॥ यद्यहमैष्यमुताभोक्ष्ये[3] अप्यभोक्ष्ये[4] न भुक्तवान् ।

**वोताप्योः ॥३।३।१४१॥**

वा[5] आ उताप्योः । उताप्योरिति यावत् भूते लिङ्निमित्ते लृङ्क्रियातिपत्तौ वेत्यधिक्रियते ।

---

भूते । अभोक्ष्ये[6] इति । भुजपालनादौ । 'भुजोनवने'* इति ङ् । न भुक्तवानिति । क्रियाया अनिष्पत्तिं दर्शयति । आगमनं ाभूत् भोजनमपि नाभूदित्यर्थः ।

वोताप्योः । वा आ उताप्योरिति । आङः प्रश्लेषं दर्शयति । नु चाङ्योगे 'पञ्चम्यपाङ्' इति पञ्चम्या भाव्यम् । तदयुक्तम् ताप्योरिति सप्तम्या निर्देशः । नैतत् । पदमेवात्र सप्तम्यन्तमुपादीयते । च पदादाङ्योगे सप्तमी स्यात् । अप्रातिपदिकत्वात् । अयं ाङ् मर्यादायाम् ।

---

१. Before it—*Vide*, C, $N_1$ $B_2$. p. 1810-11. २. After it—म्यायाम् $D_4$, $B_3$. ३. उताभोक्ष्यं $D_2$ ; °मुताहो $D_3$. ४. अप्यभोक्ष्यं $D_2$. न तु $D_1$. ६. $D_2$, $D_4$ drop वा आ उताप्योः. ७. अभोक्ष्यादिति $Dc_3$.

* नाद्यतनवत्क्रियाप्रबन्धसामीप्ययोः ॥३।३।१३५॥ सातत्येन क्रियानुष्ठाने ालानां समसंज्ञेनाव्यवधाने लङ्लुटावनद्यतने न स्तः । यावज्जीवं भृशमन्नमदात् । वज्जीवं भृशमन्न दास्यसि । येयं पौर्णमास्यतिक्रान्ता एतस्यामग्नीनाधित । ग्रमागामिन्यमावास्या एतस्यामग्नीनाधास्यते ।

भविष्यति मर्यादावचनेवरस्मिन् ॥३।३।१३६॥ भविष्यति काले देशकृतमर्यादावचने त्यवरस्मिन् भागे लुट् न भवति । अक्रिया । अक्रियाप्रबन्धसामीप्यार्थं वचनम् । यमध्वा गन्तव्य आ पाटलिपुत्रात् यत्र यदवरं कौशाम्ब्यास्तत्र द्विरोदनं भोक्ष्यामहे ।

कालविभागे चानहोरात्राणाम् ॥३।३।१३७॥ भविष्यत्यनहोरात्रकालकृतमर्यादा-वने सत्यवरस्मिन् प्रविभागे लुण् न स्यात् । योयं संवत्सर आगामी तस्य दवरमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे । अनहोरात्राणां किम् । योयं मास ागामी तस्य योवरः पञ्चदशरात्रः तत्र युक्ता अध्येतास्महे ।

परस्मिन् विभाषा ॥३।३।१३८॥ भविष्यति मर्यादावचने कालविभागे अनहोरात्रे पर-मन् विभागे लुण् न स्याद्वा । योयं संवत्सर आगामी तस्य यत् परमाग्रहायण्यास्तत्र क्ता अध्येष्यामहे अध्येतास्महे वा । अनहोरात्राणामिति प्रत्युदाहरणं पूर्वोक्तम् ।

**गर्हायां लडपिजात्वोः ॥३।३।१४२॥**

आभ्यां योगे लट् स्यात् कालत्रयेपि गर्हाया विशेषप्रत्ययापवादः । अपि जायां त्यजसि । जातु दत्से । अत्र लिङ्निमित्ताभावात् लँङ् न ।

**विभाषा कथमि लिङ् च ॥३।३।१४३**

कथमा योगे कालत्रयेपि[2] वा लिङ् चात् लँट् कथं धर्मं त्यजेः त्यजसि वा । पक्षे कालत्रयलक भविष्यति नित्यं लङ् भूते वा । कथं नाम धर्ममत्यक्ष्यत् ।

**किंवृत्ते लिङ्लृटौ ॥३।३।१४४॥**

किंवृत्तयोगे गर्हायामेतौ स्तः । कालत्रयेपि । पवादः । कः कतरो वा हरिं निन्देत् निन्दिष्यति । लङ

---

गर्हायाम् । गर्हा निन्दा कुत्सेति जात्वित्यादि । जायात्यागो गर्हितः । गर्हि निन्दितमिति गम्यते ।

विभाषा । विभाषाग्रहणं यथास्वं कालविशेषे विहिता मबाधनार्थमित्याह—पक्षे कालत्रयलकारा इति । कथं कथं धर्मं त्यक्तासि कथं धर्ममत्याक्षीः कथं धर्ममत्य तत्यजिथेति ज्ञेयाः सर्वलकाराः । गर्हायां किम् । विष्णुमपूपुजत् ।

किंवृत्ते । विभक्त्यन्तं डतरडतमान्तं च किंवृत्तम् लटः परिहारार्थम् । लङ्त्रप्राग्वदिति । भविष्यति नित्यं को वा हरिमनिन्दिष्यत् ।

---

१. न लङ् $D_2$, $D_4$, $B_2$. २. $D_2$ drops अपि. ३.
४. भवान् P, C. ५. After it—गर्हायामिति निवृत्तम $B_2$,

अनवक्लृप्त्यमर्षयोरकिंवृत्तेपि ॥३।३।१४५॥

किंवृत्ते अकिंवृत्तेपि लिङ्लृटौ स्तः असंभावनामर्षयोः । ेषु कालेषु सर्वलकारापवादः । न संभावयामि न मर्षये वा वान् हरिं निन्देत् निन्दिष्यति वा । कः कतरो वा निन्देत् निन्दिष्यति । क्रियातिपत्तौ पक्षे लृङ् ।[2]

किंकिलास्त्यर्थेषु लृट् ॥३।३।१४६॥

किंकिलशब्दे अस्त्यर्थे चोपपदेनवक्लृप्त्यमर्षयोर्लृडेव स्यात् त्रिषु ालेषु ॥ न श्रद्दधे न मर्षये वा किंकिल त्वं शूद्रान्नं भोक्ष्यसे । अस्ति वति विद्यते वा शूद्रीं गमिष्यसि । अत्र लिङ्निमित्ताभावाल्लृङ् न ।

जातुयदोर्लिङ् ॥३।३।१४७॥

आभ्यां योगे कालत्रयेपि लिङेव स्यादुक्तेर्थे ॥ यदा द्योर्योगे च । जातु यत् यदा यदि वा त्वादृशो हरिं न्देत् नावकल्पयामि न मर्षयामि । लृङ् प्राग्वत् ।

---

अनव । गर्हायामिति निवृत्तम् । अमर्षोक्षमा । बह्वचः पूर्वनिपातो क्षणव्यभिचारे लिङ्गम् । तेन यथासंख्यं न भवति । लृङिति । न भावयामि न मर्षये वा भवान् हरिमनिन्दिष्यत् । को वा रिमनिन्दिष्यत् ।

किंकिलशब्दो निपातसमुदायः क्रोधद्योतकः । अस्त्यर्थाः अस्ति वतिविद्यतयः । अस्तीत्यादि । त्वं शूद्रीं गमिष्यसि । अस्ति नाम । न श्रद्दधे न मर्षये वेत्यन्वयः ।

जातु । उक्तेर्थे अनवक्लृप्त्यमर्षयोः । लृङ् प्राग्वदिति । क्रियातिपत्तौ वष्यति नित्यं भूते वेत्यर्थः ।

---

१. निन्दिष्यति वा $B_2$ $D_4$. २. After it—भविष्यति नित्यम् । $N_1$. शब्दे चोपपदे $N_1$. ४. मर्षये $D_1$. ५. °त् न लृङ् $D_3$. ६. For लिङेव has लिङ्. ७. यदायद्योरुपसंख्यानम् $D_1$, यदायद्योर्योगे च $D_4$. वेदवान् द्विजः $D_1$.

**यच्चयत्रयोः ॥३।३।१४८॥**

आभ्यां योगे पूर्ववत् ॥ यच्च यत्र वा त्वमेवं श्रद्दधे न मर्षये । प्राग्वत् लृङ् ॥

**गर्हायां च ॥३।३।१४९॥**

अनवक्लृप्त्यमर्षयोरिति निवृत्तम् । यच्चयत्रयोर्योगे लिङेव स्यात् ॥ यच्च यत्र वा त्वं शूद्रं याजयेः । अ लृङ् पूर्ववत् ।

**चित्रीकरणे च ॥३।३।१५०॥**

यच्च यत्र वा त्वं योजयेः । चित्रमेतत् ।

**शेषे लृडयदौ ॥३।३।१५१॥**

यच्चयत्राभ्यामन्येन यदिवर्जेन योगे लृडेव स्यात् चित्रीकरणे ॥ आश्चर्यमन्धो नाम कृष्णं द्रक्ष्यति । अत्र अयदौ किम् । आश्चर्यं यदि स भुञ्जीत ।

---

**यच्च** । पूर्ववदिति । अनवक्लृप्त्यमर्षयोरर्थयोर्लिङ् स्यात् इत्यर्थः । **प्राग्वत् लृङिति** । व्याख्यातचरमेव । य यजेर्ण्यन्तस्य लिङि रूपम् ।

**चित्री** । चित्रीकरणमाश्चर्यमद्भुतं विस्मयनीयम् । य च्चित्रीकरणे लिङेव स्यात् । **अत्र लृङिति** । लिङ्निमि **आश्चर्यं यदि स भुञ्जीतेति** । अनत्रकमिरत्राश्चर्यं च तत्राश्चर्यनिमित्ते लटि प्रतिषेधे यदा यच्चयोगे चेत्यनवक्लृप्तौ ।

---

१. अन्याय्यमेतत् $D_2$. २. प्राग्वत् $D_3$. ३. शूद्रं याजयेः $B_2$, ४. °करणेर्थे $D_3$. ५. Dropped $D_3$. ६. तु यदि $Dc_3$.

**उताप्योः समर्थयोर्लिङ् ॥३।३।१५२॥**

आभ्यां तुल्यार्थाभ्यां योगे लिङ् स्यात् त्रिकालेषु[1] । सर्वलकारापवादः[2] । बाढार्थं[3] तुल्यार्थतानयोः । उत अपि वा हन्यादघं हरिः । इतः प्रभृति लिङ्निमित्ते क्रियातिपत्तौ भूतेपि नित्यो लङ् ।

**कामप्रवेदनेकच्चिति ॥३।३।१५३॥**

स्वाभिप्रायाविष्करणार्थे[4] लिङ् स्यात् कालत्रये[5] नतु कच्चिति । कामो मे भुञ्जीत भवान्[6] । अकच्चिति किम् । कच्चित् जीवति[7] ।

**संभावनेलमिति चेत् सिद्धाप्रयोगे ॥३।३।१५४॥**

अलमर्थेन प्रौढ्या संभावनेर्थे[8] लिङ्[9] सिद्धश्चेदलमोप्रयोगः ।

---

उताप्योः । उत अपि वेत्यादि । बाढं हनिष्यतीत्यर्थः । समर्थयोः किम् । उत हनिष्यति अपि धास्यति इति प्रश्नापिधानयोर्मा भूत् ।

**काम** । कामोभिलाषस्तस्य प्रवेदनं प्रकाशनम् । एतदभिप्रेत्याह—**स्वाभिप्रायाविष्करण** इति ।

**संभावने** । अत्रालंशब्देनालमर्थो गृह्यत इत्याह—**अलमर्थेनेति** । स चालमर्थः पर्याप्तिरेव न भूषणादिरित्यभिप्रेत्याह—**प्रौढ्येति** । प्रौढिः स्वकार्यनिर्वर्तनसामर्थ्यम् । संभावनं शक्तिः श्रद्धानम् । प्रौढ्या संभावनं पर्याप्तिमवितथं संभावनं चेदित्यर्थः[10] । सिद्धाप्रयोग इति व्याकरोति—**सिद्धश्चेदलमोप्रयोग** इति । कुत एतत् । अलम एवाप्रयोग इत्युच्यते ।

---

१. त्रिषु कालेषु $B_2$, $D_3$. २. सर्वलापवादः P, $D_4$. ३. बाढे $D_2$, $D_4$, $B_2$. ४. °रणेर्थे $D_4$. ५. कालत्रये dropped $B_2$. ६. कामं भुञ्जीत भवान् C. ७. After it—जानकी $D_4$. ८. °मर्थेनाप्रौढ्यसंभावनेर्थे $D_1$. ९. स्यात् after it in $D_2$, N. १०. भवति चेदि° $Dc_3$.

कालत्रये । अपि गिरिं शिरसा भिन्द्यात् । अलमोप्रयं
अलं कृष्णो हस्तिनं हनिष्यति ।

**विभाषा धातौ संभावनवचनेयदि ॥ ३ ।**

संभावनार्थे धातावुपपदे प्रागुक्तेर्थे लिङ् वा स्
यच्छब्दे । संभावयामि भुञ्जीत भवान् भोक्ष्यते वा
किम् । संभावयामि यद् भुञ्जीथास्त्वम् ।

---

इतिकरणेनार्थपदार्थत्वात् प्रत्याख्य शब्दार्थकतायामलमो
पनात् । यद्येवमलमर्थः संभावनविशेषणं न स्यात् । नैष
आवृत्तिरलंशब्दस्य करिष्यते । क्व च सिद्धोलमोप्रयोगः
तस्यार्थो गम्यते स च तत्र प्रयुज्यते तत्र । अपि गिरिं
भिदृ विदारणे । रुधादिभ्यः श्नम् । 'श्नसोः—' इत्
अत्र यत् पर्वतभेदसामर्थ्यं पुंसः संभाव्यते तदस्त्येवेत्यर्थ
पर्याप्तम् । संभावन इति किम् । पर्याप्तं भुङ्क्ते । अलमर्थे
किम् । विदेशस्थानीयो देवदत्तः प्रायेण गमिष्यति ग्राम
क्रियातिपत्तौ भूते भविष्यति च लृङ् स्यात् ।

विभाषा । पूर्वेण नित्यं प्राप्ते विकल्पार्थं सूत्रम् । संभा
येन स संभावनवचन इतीममर्थमाह—संभावनार्थ इति
'संभावनेलमिति चेत् सिद्धाप्रयोगे' इति सर्वमनुवर्तत :
उक्तेर्थे इति । अवकल्पयामि श्रद्दध इत्यनयोरपि संभा
प्रयोगे एवमेवोदाहार्यम् ।

---

१. संभावनेर्थे $D_1$, $P_1$; C drops the Vṛitti up to यच्छब्दे. $N_1$. ३. यच्छब्दसंयोगे $B_2$. ४. $D_1$, $D_3$ drop वा. ५. अयादिति

## हेतुहेतुमतोर्लिङ् ॥३।३।१५६॥

हेत्वर्थे हेतुमदर्थे च लिङ् वा स्यात् ॥ कृष्णं नमेच्चेत् सुखं यायात् । पक्षे लृट् । पुनर्लिङ्ग्रहणं भविष्यदर्थे एव लिङ्[2] । नेह । हन्तीति पलायते ।

## इच्छार्थेषु लिङ्लोटौ ॥३।३।१५७॥

इच्छार्थै[3]र्धातुभिर्योगे लिङ्लोटौ स्तः त्रिषु[4] कालेषु । इच्छामि भुञ्जीत भुङ्क्तां वा[5] भवान् । कामप्रवेदने वाच्ये[6] । नेह । इच्छन् करोति[7] ।

---

हेतुहेतुमतोः । हेतुः कारणम् । हेतुमत् फलम् । हेत्वर्थे हेतुमदर्थे च वर्तमानाद्धातोरिति शेषः । कृष्णमित्यादि । कृष्णनमनं हेतुः । सुखप्राप्तिः हेतुमती । पक्षे लृडिति । कृष्णं नंस्यति चेत् सुखं यास्यतीति । पुनर्लिङुक्तेरिति । 'उताप्योः समर्थयोर्लिङ्' इत्यतो लिङित्यनुवर्तमाने पुनर्लिङ्ग्रहणस्यैतत् प्रयोजनं भविष्यदर्थे एव यथा स्यादित्यर्थः । पलायत इति । 'उपसर्गस्यायतौ' इति लत्वम् । क्रियातिपत्तौ लङ् ।

इच्छार्थेष्विति । सर्वलकारापवादः । ननु चात्रेच्छार्थेष्विति सप्तम्यन्तं तत् कथमिच्छार्थैर्योग इति व्याख्यातम् । मैवं संशयिष्ठाः । अत्रेच्छार्थेषु धातुषूपपदेष्वित्येवार्थः । तथापि केवलं तत्प्रयोगे मा भूत् । किं तु तद्योगे यथा स्यादित्येवमर्थमेवं व्याख्यातम् । उपपदसंज्ञाकार्याभावाच्च ।

---

१. लङ् $D_4$. २. After it—वा स्यात् $D_3$. ३. इच्छार्थे $D_2$; इच्छार्थधातुभि ° $D_1$. ४. त्रिकालेषु $D_2$, P. ५. $D_1$ drops it. ६. वाच्यं P, $N_1$, C, $B_2$, $D_3$, $D_4$. ७. करोमि $D_1$, $D_4$.

लिङ् च ॥३।३।१५९॥

समानकर्तृकैरिच्छार्थैर्योगे लिङ् स्यात् । भुञ्जीये-
च्छति ।

इच्छार्थेभ्यो विभाषा वर्तमाने ॥३।३।१६०॥

इच्छार्थेभ्यो लिङ् वा स्याद्वर्तमाने । पक्षे लट् । इच्छेत् ।
शति । वष्टि । उश्यात् । विधिनिमन्त्रणेति लिङ् । कालत्रये[4]
ौ । यागं कुर्यात् । नियोगकरणे । इह भुञ्जीत भवान् ।

---

लिङ् चेति । तृतीयाव्याख्यानघटना पूर्ववत् । भुञ्जीयेति ।
ीत् ' इत्यदादेश उत्तमपुरुषैकवचनस्य । ननु च किमर्थ-
मुच्यते । यावता वासरूपन्यायेनैवात्र लिङ् स्यात् । नैतत् ।
्लिटोर्हि परत्वाद्बाधकयोः प्राप्तयोस्तद्बाधनार्थं तुमुन् विधीयते
तेन बाधितत्वाद्यथा लोट् न तथा लिङपि न । तस्मात्
्विध्यर्थमुच्यते । योगविभाग उत्तरार्थः । वष्टीति । वश
तौ । अदादित्वात् शपो लुक् । व्रश्चादिना षत्वम् ।
ादिति । ग्रहिज्यादिना संप्रसारणम् । विधिनिमन्त्रणेति लिङिति ।
 सूत्रं भू सत्तायामित्यस्मिन्नेव धातौ व्याख्यातम् । निमन्त्रणा-
र्थान् व्याकुर्वन् क्रमेणोदाहरति—विधौ । यागं कुर्यादिति ।
भृत्यादेर्निकृष्टस्य प्रवर्तना । आज्ञापनेति यावत् । कुर्यादिति ।
तेरुप्रत्यये गुणे च कृते ' अत उत्सार्वधातुके ' इत्युः । ' ये च '
ल्लोपः । नियोगकरणे इति । नियोगतोऽवश्यंभावेन यत्करणमनु-
मवश्यकार्ये भुक्त्यां दौहित्रादेः प्रेरणे इति यावत् ।
 हि निमन्त्रितो दौहित्रादिरभुञ्जानः प्रत्यवैति । भुञ्जीतेति ।

---

C drops इति ; इतीच्छामि । N1. २. इच्छेत् भवान् B2, D4.
ास्तत्राविधिः for कालत्रये विधौ D1. ४. °त्रयेपि D3.

ामचारे । इहासीत भवान् । सत्कारपूर्वके[1] व्यापारे । पुत्रमध्या-
येद्भवान्[2] । संप्रधारणे । किं भो वेदमधीयीय उत तर्कम् ।
ार्थने । भो भोजनं लभेय । एवं लोट् ।

**प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ॥३।३।१६३॥**

एषु गम्येषु कृत्याः स्युः लोट् च ॥[4] कामचारानुज्ञा
ातिसर्गः । प्रेषितस्त्वं गङ्गां गच्छ । एवमतिसृष्टस्त्वम् । प्राप्तस्ते

---

भुजोनवने ' इति तङ् । **कामचार** इति । कामचार इच्छाप्रवृत्तिः ।
दकरणेपि न प्रत्यवायः तत्र प्रेरणमिति यावत् । **अध्यापयेदिति** ।
ङ् अध्ययने इत्यस्मादधिपूर्वाद्धेतुमाण्णिच् । ' क्रीङ्जीनां णौ ' इति
ाकारः । ' अर्तिह्री—' इति पुक् । **अधीयीयेति** । इङ उत्तम-
रुषैकवचनस्य ' इटोत् ' इत्यत् । **लभेयेति** । डुलभष् प्राप्तौ । **एवं**
**ोडिति** । अनेन प्रकारेण लोडुदाहार्यः । तथा हि । विधौ । यागं
रोतु । नियोगकरणे । इह भुङ्क्तां भवान् । कामचारे ।
ास्तां भवान् । सत्कारपूर्वके व्यापारे । पुत्रमध्यापयतु भवान् ।
प्रधारणे । किं भो वेदमध्ययै उत तर्कम् । प्रार्थने । भो भोजनं
भै । इति लोट् ।

**प्रैषाति** । विधिप्रेरणयोः को विशेषः । केचिदाहुः ।
ाज्ञापनं विधिः प्रेरणं प्रैष इति । केचित्त्वनयोर्विशेषं नेच्छन्त्येव ।

---

१. सत्कारपूर्वकव्यापारे $D_2$, $D_4$; सत्कारपूर्वव्यापारे P. २. भो भवन्
ı, $D_3$. ३. $D_1$ drops it. ४. Before it—प्रेषणं प्रषः C.

४१

कालो वा । लिङप्यत्रेति केचित् ।

लिङप्यत्रेति केचिदिति । दुर्गसिंहाद
दुर्गसिंहवृत्तौ प्रैषप्राप्तकालयोरपि पञ्चमी
मतामिति । कृत्यग्रहणस्य प्रयोजनमुदाहरणं
वक्ष्यति । स्पष्टत्वात् त्यक्तं सूत्रत्रयं व्य
चोर्ध्वमौहूर्तिके' ॥३।३।१६४॥ लोट्कृत्याश्च
ऊर्ध्वं मुहूर्तादुपरि मुहूर्तस्य त्वं कटं कुर्याः कु
कार्यो वा । 'स्मे लोट्' ॥३।३।१६५॥ स्मे
मौहूर्तिकेर्थे लिङ्कृत्यानामपवादो लोट् स्यात्
कटं कुरु स्म । 'अधीष्टे च' ॥३।३।१६६॥ स्मे
लोट् । अङ्ग स्म बटुमध्यापय । 'लिङ् यदि'
कालसमयवेलासूपपदेषु तुमुनोपवादो लिङ् स्
भुञ्जीत भवान् समयो वेला वा ।

१. °चतुष्टयं Dc3.

लिङ् चोर्ध्वमौहूर्तिके ॥३।३।१६४॥

प्रैषादिषु गम्येषु ऊर्ध्वमौहूर्तिके लिङ् वा । यथाप्रा
कुर्यात् करोतु वा ।

स्मे लोट् ॥३।३।१६५॥

स्मशब्दोपपदे पूर्वस्मिन् कालेर्थे च लोडेव स्यात् ।
भवान् ।

अधीष्टे च ॥३।३।१६६॥

अधीष्टं व्याख्यातम् । स्मे उपपदे व्याख्यातेर्थे लो
माणवकमध्यापय ।

लिङ् यदि ॥३।३।१६८॥

कालसमयवेलासूपपदेषु धातोर्लिङ् स्यात् यच्छब्दप्र
भवान् । एवं समयवेलाच ।

अर्हे कृत्यतृचश्च ॥३।३।१६९॥

चाल्लिङ् । त्वं कन्यां वहेः ।[२]

शकि लिङ् च ॥३।३।१७२॥

शक्तौ लिङ् स्यात् चात् कृत्याः ॥ त्वं भारं वहेः । लोडप्यत्रेति केचित् । सिंधुमपि शोषयाणि । माङि लुङ् । मा कार्षीत् । कथं मा भवतु मा भविष्यति इति । नायमाङ् किं तु माशब्दः ।

---

अर्हे । अर्हतीत्यर्हः । तद्योग्यः । अर्हे कर्तरि गम्यमाने धातोः कृत्यतृचः प्रत्ययाः स्युः । चकाराल्लिङपि स्यादित्यर्थः । त्वं कन्यां वहेरिति । वोढुमर्हसीत्यर्थः ।

शकि । शकीति नोपपदं किं तु प्रकृत्यर्थविशेषणमित्याह— शक्ताविति । शक्त्युपाधिकेर्थे वर्तमानाद्धातोरित्यर्थः । त्वं भारं वहेः । वोढुं शक्नोषीत्यर्थः । लोडप्यत्रेति केचिदिति । दुर्गसिंहादयः । तथा च दुर्गसिंहवृत्तावुक्तम् । समर्थनाशिषोश्चेति । सिंधुमिति । कश्चिदाह । सिंधुः शोषयितुमशक्यः । अपरस्तु समर्थयते सिंधुमपि शोषयाणि इति । माङीति । भूधातौ व्याख्यातम् । कथमिति । यदि माङि लुङ् कथं तर्हि मा भवतु मा भविष्यतीति लोट्लृट्प्रयोग इत्यर्थः । माशब्द इति । अमानोनाः प्रतिषेधे इति निरनुबन्धको मा निषेधार्थः पठ्यते । तस्यायं प्रयोगः । अत एतदुपपन्नमित्यर्थः । केचिदाहुः । असाधुरेवायं प्रयोग इति ।

---

१. Before it—*Vide* Footnote on p. 462, $B_2$, C, N. २. After it—भवानेतदर्हति $B_2$, $D_4$. ३. चकारात् $D_1$. ४. From माङि to माशब्दः dropped $D_4$. ५. भवत्वस्य पापमिति $D_2$.

**क्रियासमभिहारे लोड् लोटो हिस्वौ तध्वमोः ॥२॥**

पौनःपुन्यार्थे भृशार्थे वा लोट् स्यात् तस्य च[१] प[४]दव्यवस्थायां हिस्वौ स्तः सर्वतिङ्विषये तध्वमोर्विषये कालत्रये । लमात्रापवादः ।

**समुच्चयेन्यतरस्याम् ॥३।४।३॥**

अनेकक्रियाव्य[५]वहारे प्रागुक्तं वा स्यात् ॥

---

क्रियेत्यादि । पौनःपुन्यं भृशार्थो वा क्रियासम इत्याह—**पौनःपुन्ये भृशार्थे वे**ति । प्रकृत्यर्थविशेषणं चे पौनःपुन्यविशिष्टक्रियावचनात् भृशार्थविशिष्टक्रियावचनाद्धातोरि योगविभागोत्र कार्यः । क्रियासमभिहारे लोट् । ततो हिस्वौ । लोडित्यनुवर्तते । तेन लोटो हिस्वौ लोडेव । 'सेर्ह्यपिच्च' इत्यादिना यौ हिस्वौ विधास्येते तावेवेह स्थाने स्तः नापूर्वाविति लोड्धर्माणौ स्तः । तेन संबन्धिनो हेः परस्मैपदत्वाद्धेः परस्मैपदत्वम् । लोटः स्वशब्दस्य पदत्वात्तस्यापि स्वस्यात्मनेपदत्वं व्यवस्थितम् । द्वयोरपि तिङ् सिध्यतीति 'तिङ्ङतिङः' इति निघातः स्यात् इति । एतत् सर्वं कृत्वाह—**तस्य च लोटः पदव्यवस्थायां हिस्वौ स्त** इति । पदं हिर्भवति । आत्मनेपदं स्वो भवतीत्यर्थः । उदाहरिष्य

**समुच्चये** । अत्रापि समुच्चयः प्रकृत्यर्थविशेषणमेव । **प्रागुक्त** लोट् स्यात् । पदव्यवस्थया हिस्वौ स्तः सर्वतिङ्विषये तध्वमो तु वा कालत्रये । लकारमात्रापवाद इत्यर्थः ।

---

१. धातोर्लोट् P, $N_1$. २. Dropped $D_3$. ३. Dropped
४. पदव्यवस्थया $D_1$, $D_3$, $D_4$. ५. °व्याहारे C.

**यथाविध्यनुप्रयोगः पूर्वस्मिन् ॥३।४।४॥**

पूर्वस्मिन् लोड्विधाने यस्माद्धातोर्लोडुक्तः सोनुप्रयोज्यः[1] ॥

**समुच्चये सामान्यवचनस्य ॥३।४।५॥**

समुच्चये लोड्विधौ सामान्यार्थस्य धातोरनुप्रयोगः । क्रियासमभिव्याहारत्वाल्लोडन्ताद्[2]द्वित्वम् ॥ याहि याहीति याति ।

---

यथाविधि । पूर्वस्मिन्निति । क्रियासमभिहारे इत्यस्मिन्नित्यर्थः । धातुसंबन्धे प्रत्ययविधेरनुप्रयोगे सिद्धे यथाविध्यर्थं वचनम् । धातुसंबन्धे प्रत्ययाः । अस्यार्थः । अभिधानेभिधेयोपचाराद्धात्वर्थो धातुशब्देनोच्यते । तेन प्रत्ययानां संबन्धो विशेषणविशेष्यभावस्तस्मिन् सति यस्मिन् काले ते विहितास्ततोन्यत्र विशेष्यकालेपि साधवः स्युः । सोमयाज्यस्य पुत्रो भविता । अत्र याजीति भूते णिनिः । भवितेति भविष्यत्यनद्यतने लुट् । तत्र [3]विशेषणं विशेष्यमनुरुध्यते इति याजिना विशेषितो भविता साधुः । भाविकृत्यमासीत् । प्रत्ययाधिकारे पुनः प्रत्ययग्रहणाद्धात्वधिकारविहितास्तद्धिता अपि धातुसंबन्धे सति कालभेदे सति साधवः स्युः । गोमानासीत् । गोमान् भविता । सर्वत्र तिङ्[4]वाच्यो विशेषः । सुबन्तं विशेषणम् ।

**समुच्चय** इति । अत्रापि धातुसंबन्धे प्रत्ययविधेरनुप्रयोगे सिद्धे विशेषानुप्रयोगनिवृत्त्यर्थं वचनम् । ननु च लाघवेन सामान्यस्यैव प्रयोगो भविष्यति । मैवम् । लाघवं च लौकिके शब्दव्यवहारे नाद्रियते । **क्रियासमभिव्याहारत्वादिति** । 'क्रियासमभिहारे द्वे भवतः' इति वक्तव्येनेति भावः । **याहि याहीति यातीति** । या

---

१. After it—याहीत्यस्य यानुप्रयुज्यते न तु गच्छतेरनुप्रयोगः $D_1$ : सोनुप्रयुज्यते $D_3$. २. °डन्तस्य $D_3$. ३. विशेषणं विशेष्यगुणत्वात् विशेष्य° $Dc_3$. ४. °वाच्योर्थो $Dc_3$.

एवं यातः यान्ति यासि याथः याथ । पक्षे यात यातेति
याथ । याहि याहीत्ययासीत् यास्यति वा । ...
अधीष्वेत्यधीते । एवमन्यत्र । ध्वंविषये प्राग्वत् । पक्षे
ध्वमधीध्वमिति यूयमधीध्वे । यङन्ते क्रियासमभिहारा
लोलूयस्व लोलूयस्वेति लोलूयते । समुच्चये तु सक्तून्
धानाः खादेत्यभ्यवहरति । अन्नं भुङ्क्ष्व दाधिकमा
स्वेत्यभ्यवहरति । तध्वमोस्तु पिबत खादतेत्यभ्यवह
भुङ्ध्वमास्वादध्वमित्यभ्यवहरध्वे । पक्षे हिस्वौ । लोड

---

प्रयाणे । अदादित्वात् शपो लुक् । अधीष्वाधीष्वेत्यधीत इति
अध्ययने इत्यस्य आत्मनेपदित्वात् स्वशब्दो भवति । एवमन्
अनेन प्रकारेण द्विवचनबहुवचनयोर्भूते भविष्यति चोदाहार्यम्
हि । अधीष्वाधीष्वेत्यधीयाते । अधीष्वाधीष्वेत्यधीयते । एवं
त्तमयोरुदाहार्यम् । भूते अधीष्वाधीष्वेत्यध्यगीष्ट । भविष्यति अ
धीष्वेत्यध्येष्यते इति । ध्वंविषये प्राग्वदिति । अधीष्वाधीष्वे
इति । एवं सर्वेषु लकारेषूदाहार्यम् । यङन्त इति । यङ्
समभिहारे धातोरेकाचः इति विधीयते । तथापि क्रियासम
भृशार्थः पौनःपुन्यमिति द्विविध इति भृशार्थे क्रियासमभिह
कृते पौनःपुन्यलक्षणे क्रियासमभिहारान्तरे विहिते लोट्
भवत इति । सक्तून् पिबेति । पा पाने । 'पाघ्रा—
पिबादेशः । 'अतो हेः' इति हेर्लुक् । भुङ्क्ष्वेति । भु
अल्लोपे कृते 'चोः कुः' । षत्वम् । आस्वादस्वेति । स्वादु प्रीति

---

१. $D_1$, $D_3$, P, $N_1$ drop पक्षे. २. °ष्वेत्येवायमधीते $D_2$, ३. °दाधिक° $D_1$. ४. °स्वादयस्वे° C. ५. °हरते $D_2$, $D_3$, $D_4$, $B_2$. ६. °हरध्वम् C.

डादि । पुनः पिबति पुनः खादतीत्यभ्यवहरति । इत्यादि ।

इति लकारार्थप्रक्रिया ।[२]

---

रे हिस्वाविति । पिब खादेत्यभ्यवहरथ । भुङ्क्ष्व आस्वादस्वेत्य-
वहरध्वमिति । इत्यादीत्यादिशब्देन पुनः पिबत पुनः खादत
ाभ्यवहरत इत्याद्यूह्यम् ॥

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विठ्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन् प्रसादे निरगमदमलोयं लकारार्थवर्गः ॥[३]

---

---

लडादिः $D_1$. २. After this—समस्तवैरिव्रजकुञ्जरेन्द्रव्रातेषु सिंहो
ानुजश्च । विशोभते भूपतिभीमसेनो महीपतीशाधिपतिर्महोजाः ॥; समाप्ता
या वृत्तिः । $B_2$ ; $D_3$ has after it—श्री । श्री···श्रीसरस्वत्यै नमः । श्रीगुरुभ्यो
। श्रीमद्विठ्ठलाय नमः । श्रीगुरुभ्यो नमः । श्रीरामः ॥ २. After it—इत्या-
ाप्रक्रिया समाप्ता । $N_1$ ; इति लकारप्रक्रिया $D_3$ ; समाप्ता $D_4$. ३. After
$Dc_3$ has इति द्वितीयवृत्तिः संपूर्णा । ३. After this $Dc_1$ has—श्रीरस्तु ।
ावतु । कल्याणमस्तु । संवत् १६०६ वर्षे श्रावणमासे शुद्धपक्षे १ गुरौ लिखित-
ुस्तकम् ॥ ति॰ प्र॰ प्रसाद ॥ श्रीः ॥ श्रीः ॥ छ ॥ छ ॥ यादृशं पुस्तके दृष्टं
लिखितं मया । यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥१॥ श्रीरस्तु । श्रीः॥
। छ ॥

# अथ कृदन्तप्रक्रिया।

धातोः ॥३।१।९१॥

आतृतीयाध्यायान्तं धातोरित्यधिक्रियते। पुनध
कृत्संज्ञा उपपदसंज्ञा चात्रैवेत्येवमर्था ॥

तत्रोपपदं सप्तमीस्थम् ॥३।१।९२॥

तत्रास्मिन् धात्वधिकारे सप्तमीनिर्दिष्टमुपपदाख्यं स्य

कृदतिङ् ॥३।१।९३॥

इति कृत्संज्ञा।

---

अथ कृदन्तप्रक्रिया। तत्रादौ कृदन्तेष्वेव कृत्याः प्रद
आतृतीयाध्यायान्तमिति। तृतीयाध्यायपर्यन्तं मर्यादीकृत्ये
ननु यङ्विधौ 'धातोरेकाचः—' इति धातुग्रहणं प्रकृतं तेनैवा
सिद्धौ पुनर्धातुग्रहणं किमर्थमित्याशङ्क्याह—पुनर्धातूक्ति
चकार आर्धधातुकसंज्ञाया वासरूपबाधकत्वस्य च समुच्चयार्थः
कृत्संज्ञायां सत्यां प्रकरिष्यतीत्यत्र स्यप्रत्ययस्य सिंहावलोक
'कृदतिङि'ति कृत्संज्ञाभावात् 'कृत्तद्धितसमासाश्च
प्रातिपदिकत्वाभावात् न सुबुत्पत्तिः। वासरूपबाधकत्वेत्रैव
पूर्वत्र क्सादिभिः सिचो न समावेशः स्यात्। आर्धधा
धातुग्रहे सति सामर्थ्याद्धातोरित्येव हि तस्यार्धधातुकसंज्ञा।
लूभ्याम् लूभिरित्यत्र क्विबन्ता धातुत्वं न जहतीत्यार्धधा
स्यात्। तत इट् प्रसज्येत।

---

१. Before it—श्रीगणेशाय नमः। N1. २. P drops the
३. Bc1 has before it—ओं नमः श्रीगणपतये. ४. ननु च Dc3. ५.
धातोः इति सिद्धौ Dc3. ६. Dropped Dc3. ७. °रित्येष वि
Dc3, PC.

वासरूपोऽस्त्रियाम् ॥३।१।९४॥

अत्रासरूपोपवादप्रत्ययः उत्सर्गस्य वा बाधकः स्यात्
यधिकारोक्तं विना ॥

वासरूपः[२] । अपवादविषय उत्सर्गो न भवतीति सर्वत्र
थतिः । कृतां केषांचित् तत्रापि प्रवृत्तिर्दृश्यते सा कथं नाम
ादित्यस्य योगस्यारम्भः । स्त्र्यधिकारोक्तं विनेति । कथं
रस्त्रियामित्यत एषोऽर्थो लभ्यते । एवं मन्यते । स्त्रीग्रहणं स्वर्यते ।
रितेनाधिकारो विज्ञायते । तेन स्त्र्यधिकारेण यावुत्सर्गापवादौ
ोरेव प्रतिषेध इति । ननु स्त्रियां वाच्यायामित्यर्थः किमिति
च्यते ।[३] एवमर्थे सति लव्या लवितव्येति यद्विषये तव्यो न स्यात् ।
ं तर्हि स्त्रियामिति स्त्रीसंशब्देन यः प्रत्यय इति किं न । एवमर्थे[४]
ते व्यावक्रोशी व्यावक्रुष्टिरिति णचो विषये क्तिन् स्यादुभयोरपि
यामित्येव विहितत्वात् । अतः साधूक्तं स्त्र्यधिकारोक्तं विनेति ।
व्यत्तव्यानीयर' इति उत्सर्गः । 'अचो यत्' इत्यपवादः ।
षये तव्यत्तव्यानीयरोऽपि संभवन्ति वा[५] । चेयम् । चेतव्यम् ।
नीयम् । असरूप इति किम् । 'कर्मण्यण्' इत्युत्सर्गः ।
तोऽनुपसर्गे कः' इत्यपवादो नित्यं बाधकः । गोद इति । नानुबन्ध-
मसारूप्यम् । अस्त्रियां किम् । 'स्त्रियां क्तिन्' इत्युत्सर्गः ।
प्रत्ययात्' इत्यपवादो बाधते एव नित्यम् । चिकीर्षा ।

. °वाद: प्रत्ययः P, C. २. After it—इति PC, Dc3. ३. After
स्वरितेनाधिकारः Dc3. ४. एवमर्थौ मनः इति Dc1. ५. भवन्ति वा
, PC.

कृत्याः प्राङ्ण्वुलः ॥३।१।९५॥

ण्वुल्तृचावित्यतः प्राक् ये प्रत्यया विहितास्ते संज्ञाः स्युः ।

कर्तरि कृत् ॥३।४।६७॥

कृत्प्रत्ययः कर्तरि स्यादिति प्राप्ते

तयोरेव कृत्यक्तखलर्थाः ॥३।४।७०॥

कृत्याः क्तः खलर्थाश्च भावकर्मणोरेव स्युः ॥

तव्यत्तव्यानीयरः ॥३।१।९६॥

धातोरेते प्रत्ययाः स्युरुक्तेर्थे ॥ तः स्वरार्थः दिडादि । स्वाद्युत्पत्तिः । एधितव्यम् । एधनीयं

---

कृत्याः । 'ण्वुल्तृचौ' इत्यत इति । ननु 'रोगाख्या बहुलम्' इत्यस्यावधित्वं कस्मान्न । ज्ञापकात् । 'अर्हे कृ इति तृच्ग्रहणं करोति तत् ज्ञापयति नास्यावधित्व अतः साधूक्तं ण्वुल् तृचावित्यतःप्रागिति ।

तव्यत् । उक्तेर्थे इति । भावकर्मणोरित्यर्थः । इति । उपलक्षणं चैतत् । तरेफौ स्वरार्थावित्यर्थः । 'तित् स्वरितम्' इति स्वरितत्वार्थः । रेफः 'उपोत्त इति मध्योदात्तार्थः । प्राग्वदिडादीति । 'आर्धधातुकस्येड् इतीट् । आदिशब्देन गुणादि । स्वाद्युत्पत्तिरिति । 'कृत्तद्धित इति प्रातिपदिकत्वात् 'स्वौजसमौट्—' इति स्वाद्युत्पत्ति एधितव्यमिति । एध वृद्धावित्यस्माद् भावे तव्यादयः । चेत

---

१. P drops विहिताः २. °संज्ञकाः C. ३. °वधिकत्वमिति

भावस्यैकत्वादेकवचनं क्लीबता च । चेतव्यश्चयनीयो धर्मस्त्वया ॥ वसेस्तव्यत् कर्तरि णिच्च । वास्तव्यः । कर्मकर्तरि केलिमर्वाच्यः[1] । स्वयमेव पच्यन्त इति पचेलिमास्तण्डुलाः ।

कृत्यचः ॥८।४।२९॥

उपसर्गस्थान्निमित्तात् परस्याच उत्तरस्य कृत्स्थनकारस्य णत्वं स्यात् ॥ प्रयाणीयम् । अचः किम् । प्रमग्नः । निर्विण्णस्योपसंख्यानम् ॥ निर्विण्णः ।

---

चिञ् चयने । अस्मात् कर्मणि प्रत्ययः । कृतोक्तत्वात् कर्मणः प्रथमैव भवति धर्म इति । वास्तव्य इति । वसतीति वास्तव्यः । णित्त्वात् 'अत उपधायाः' इति वृद्धिः ।

कृत्यचः । अन मुक्सहित—अन अनि अनीयर् इनि निष्ठादेशाः[2] प्रयोजयन्ति । अन । प्रयाणम् । मान । प्रयायमाणम् । अनि । प्रयाणिः । अनीयर् । मूल एवोदाहृतः । इनि प्रयायिणौ । निष्ठादेशः । प्रहीणः । प्रमग्न इति । टुमस्जो शुद्धौ । अस्मात् कर्तरि क्तः । 'स्कोः—' इति सलोपः[3] । 'ओदितश्च' इति तस्य नः । कुत्वम् । निर्विण्ण इति । निपूर्वाद्विदेः क्तप्रत्यये 'रदाभ्यां निष्ठातो नः' इति नत्वे रूपम् ।

---

१. केलिमर्वाच्यः B₂, N₁; केलिमज् वाच्यः D₄. २. निष्ठाप्रदेशाः Dc₃. ३. कलोपः Dc₃.

**णेर्विभाषा ॥८।४।३०॥**

४३२ ण्यन्तात् परस्योपसर्गस्थान्निमित्तादुत्तरस्य कृत्स्थनस्य णो वा स्यात् ॥ दुर्वर्जादुपसर्गादिति केचित् । प्रयापणीयम् । प्रयापनीयम् ।

**हलश्चेजुपधात् ॥८।४।३१॥**

मंइ हलादेरिजुपधात् कृन्नस्याचः परस्य णो वा स्यात् प्रागुक्तनिमित्ते सति ॥ प्रकोपणीयम् । प्रकोपनीयम् । हलः किम् ।

---

णेः । ननु चात्र यदि ण्यन्तात् परस्य कृत्स्थनस्य ण इत्युच्यते तर्हि प्रयाप्यमाणं प्रयाप्यमानमित्यत्र यकारव्यवहितत्वात् णत्वं विभाषा न स्यात् । 'तस्मादित्युत्तरस्य' इत्यत्र निर्दिष्टग्रहण-स्यानन्तर्यार्थस्यानुवृत्तेः । अत एव काशिकायामुक्तम् । ण्यन्ताद्यो विहितः कृत् तत्स्थस्य नकारस्येति । प्रत्युदाहृतं च तत्रैव 'विहितविशेषणं किम् प्रयाप्यमाणं प्रयाप्यमानमित्यत्र यकार-व्यवधानेपि यथा स्यात्' इति । अत्रोच्यते । एवमाचार्याणामभिप्रायः । अत्र यद्यपि यकारव्यवधानमस्ति तथापि व्यवाय इत्यनुवर्तनात् व्यवायेपि सेत्स्यति । तथा चोक्तं भाष्ये । 'अडधिकाराद्वा । अथवा अड्व्यवाय इति वर्तते' इति । दुर्वर्जादिति । दुर्वर्जनं किम् । दुर्योधनः । प्रयापणीयमिति । या प्रापणे । णिच् । 'अर्तिह्री—' इति पुक् । 'णेरनिटि' इति णिलोपः । एवमनमानअनि इनि निष्ठा-देशेषूदाहार्यम् ।

हलः । 'कृत्यचः' इति नित्ये प्राप्ते विकल्पार्थं वचनम् । सर्वस्येजुपधस्य हलन्तत्वात् हल्ग्रहणमादेर्विशेषणमित्याह—हलादेरिति । प्रकोपणीयमिति । कुप क्रोधे । 'पुगन्त—' इति

---

१. °सर्गस्थनिमित्ता° C. २. स्यात् dropped $D_4$. ३. उपसर्गात् dropped $D_4$. ४. Dropped $B_2$; प्रकोपनीयम् । प्रकापणीयम् N. ५. Dropped C, $D_2$. ६. हलादेः $B_2$, $D_4$. ७. °ग्रहस्यानन्तर्यस्याप्यनुवृत्तेः । $Dc_3$. ८. चात्रैव PC; च dropped $Dc_3$. ९. इति $Dc_3$, PC.

ऽणीयम् । इजुपधात् किम् । प्रेवपणीयम् ॥

## इजादेः सनुमः ॥८।४।३२॥

इजादेरेव सनुमो हलन्तात् कृत्नस्य णः स्यात् प्राङ्निमित्ते । णीयम् । इजादेरेव किम् । प्रमङ्गनीयम् ॥

## न भाभूपूकमिगमिप्यायीवेपाम् ॥८।४।३४॥

एभ्यः कृत्नस्य णो न स्यात् ॥ ख्याधातोरपि णत्वं नेति वत् । प्रख्यानीयम् । प्रभानीयम् । प्रभवनीयम् । प्रपवनीयम् । एव निषेधः । पूङस्तु प्रपवणीयः सोमः । प्रकमनीयम् । मनीयम् । प्रप्यायनीयम् । प्रवेपनीयम् । ण्यन्तभादिभ्योऽपि । प्रभापनीयम् ।

---

: । प्रोहणीयमिति । ऊह वितर्के । प्रवपणीयमिति । टुवप् तन्तुसंताने । अत्रोभयत्र 'कृत्यचः' इति णत्वम् ।

इजादेः । ननु चात्र 'कृत्यचः' इत्येव सिद्धमित्याशङ्क्य सत्यारम्भो नियमार्थ इत्याह— इजादेरेवेति । अत्र च ः' इति वर्तते । तेन च सामर्थ्यात् तदन्तविधिरित्याह— न्तादिति । हलधिकारो ण्यन्तान्नित्यो विधिरनेन मा भूदित्येवमर्थम् । ्खणीयमिति । इखि गतौ । प्रमङ्गनीयमिति । मगि सर्पणे ।

न भा । भा दीप्तौ । भू सत्तायाम् । पूञ् पवने । कमु कान्तौ । गतौ । ओप्यायी वृद्धौ । टुवेपृ कम्पने ।

---

प्रवहणीयम् B2, D4, N. २. प्राङ्नि° D4. ३. प्रेषणीयम् D2; re it—इखि गतौ N. ४. प्रकम्पनीयम् C, B1, D2, D3. fter it—निमित्ते सति P. ६. धातोर्णत्वं C. ७. Dropped B. त्यं णत्वम् Dc3, PC. ९. इति णित्यच इत्येव DC1. १०. उत्सर्पणे ११. गम्लृसृप्लृ गतौ PC, Dc3.

कृत्या ल्युट् च बहुलमर्थेषु स्युः ॥ स्नात्यनेनो चूर्णम् । दीयतेस्मै दानीयो विप्रः ॥

अचो यत् ॥ ३।१।९७॥

अजन्ताद्यत् स्यात् ॥ चेयं पुण्यं त्वया । वासरूपविधेस्तव्यादयोपि । जेतव्यम् । जयनीयम भूतपूर्वादपि । दित्स्यम् । धित्स्यम् ।

---

कृत्य । बहुलग्रहणं न कार्यम् । आरम्भसामर्थ्यादे यत्र विहितास्ततोन्यत्र स्युः । ततो बहुलग्रहणात् स्वार्थव्यभिचारः सिद्धोतो गले चोप्यते इति गलेचोपः ह्रियते पादहारकः । कर्मणि ण्वुल् । स्नानीया शौचे । अस्मात् करणेनीयर् । दानीय इति । डु अस्मात् संप्रदाने ।

अचः । तकारो 'यतो नावः' इत्याद्युदात्तार्थ भूतपूर्वादपीति । अयमाशयः । द्विधा धातवः । अजन्ता तत्र हलन्तात् 'ऋहलोर्ण्यत्' इति ण्यतं वक्ष्यति पारिशेष्यादजन्तादेव स्यात् किमज्ग्रहणेन इत्याशङ्क भूतपूर्वादपि यथा स्यादित्येवमर्थमज्ग्रहणं कृतमिति । भूतपूर्वश्च । प्रागजन्त इदानीं हलन्त इत्यर्थः । दित्स्यं दाञो धाञश्च सन् । द्वित्वम् । 'सनिमीमा—'

---

१. °मर्थे C. २. After it—उक्तेर्थे $D_4$, $B_2$. ३. Bef $D_4$. ४. °दपि यत् $B_2$.

ईद्यति ॥६।४।६५॥

यति परे आत ईत् स्यात् ॥ गुणः । देयम् । ग्लेयम् । केशसिचतियतिजनिभ्यश्च यत् ॥ तक्यमित्यादि । हनो वा [ ] वधश्च ॥ वध्यः । पक्षे ण्यत् । घात्यः ॥

पोरदुपधात् ॥३।१।९८॥

पवर्गान्तादृदुपधाद्यत् स्यात् । ण्यतोपवादः । शप्यम् । रूपत्वान्न ण्यत् ॥

---

ते इस् । 'अत्र लोपोभ्यासस्य ।' 'सः स्यार्धधातुके' इति । 'आर्धधातुकस्य—' इति विवक्षिते 'अतो लोपः' । स्मिन् सति अनजन्तत्वात् यन्न स्यादतोजूग्रहणं कृतम् । पाक्षिकं ात् प्रयोजनं ज्ञेयम् । यदार्धधातुके परे लोपो विधीयते तदा विस्पष्टार्थ- ग्रहणम् । गुण इति । 'सार्वधातुकार्धधातुकयोः' इति । ग्लेयमिति । हर्षक्षये । 'आदेच उपदेशे—' इत्यात्वम् आर्धधातुके विवक्षिते । ीत्यादि । तक शासने । शस हिंसायाम् । चति याचने । ी यत्ने । जनी प्रादुर्भावे ।

पोः । शप्यमिति । शप उपालम्भने । अदुपधात् किम् । प्यम् । अत्र 'यतोनावः' इत्याद्युदात्तत्वं न । ण्यतो तत्वादन्तस्वरितत्वमेव स्यात् ।

---

१. तक्यमित्यादि dropped C. २. तव्यादयः । हननीयः N. ३. After it— दुपधात् किम् । कौप्यम् B2. ४. After it—कृतम् Dc3. ५. प्रयत्ने PC, 3.

आङो यि ॥७।१।६५॥

आङ्परस्य लभेर्नुम् स्याद्यादौ प्रत्यये ॥ आलम्भ्या गौः । आङः किम् । लभ्यम् ।

उपात् प्रशंसायाम् ॥७।१।६६॥

उपाल्लभेर्नुम् स्यात् प्रशंसायां यति ॥ उपलम्भ्यः स्तुतौ किम् । उपलब्धुं शक्यः उपलभ्यः ।

---

आङः । आलम्भ्या गौरिति । अत्र यादौ प्रत्यये । प्रत्ययोत्पत्तेः प्राक् नुमि कृते अदुपधत्वं विहतमिति येन 'ऋहलोर्ण्यत्' इति ण्यत्प्रत्ययः । तत्र कृदुत्तरपदप्रकृतिस्व स्वरितत्वं भवति । नुमुत्पत्तेः पूर्वमेव यदि यत् स्यात् तर्ह्युत्तरप त्तत्वं स्यात् । तच्च नेष्टम् । अत्र च 'इदितो नुम् धातोः' इति धा सामर्थ्यादुपदेशावस्थायामेव नुम् । तेन यादौ प्रत्यये ि अयमर्थो लभ्यते । तदुक्तं भाष्ये । 'धातुग्रहणसामर्थ्याद्वा तदुपदे विधानम्' इति । लभ्यमिति । 'पोरदुपधात्' इति यत् ।

उपात् । उपलम्भ्यः साधुरिति । साधुः प्रशस्यतेत्र । यादिप्रत्ययविवक्षायां नुम् ततो ण्यत् । तेनान्तस्वरितत्वमेव । त मिन्दुमत्यां वृत्तौ । 'उपलम्भ्या विद्या । ण्यदन्तत्वादन्तस्वरि इति । ननु वृत्तौ यतीत्युच्यते तत् कथमेतत् ण्यदन्तम् । स यतीत्यनेन यादिरेव प्रत्ययो विवक्षितः । स च यत्ण्यद्भ्य न संभवतीत्युभयोः सामान्येन निर्देशः कृतो यतीति । ननु सूत्रद्वयं ण्यत्प्रकरणे पठितव्यम् । किमिति यत्प्रकरणे पठ उच्यते । यद्यपि नुमि ण्यत्–प्रत्यय एव भवति तथापि नुम यादिप्रत्ययविवक्षायां यदेवादुपधाद्विवक्ष्यत इति यत्प्रकरणे प

---

१. परे for प्रत्यये C. २. उपात् परस्य लभे° $D_1$. ३. 'पोरदुपधा before it PC; $Dc_3$.

**शकिसहोश्च ॥३।१।९९॥**

आभ्यां यत् स्यात् ॥ शक्यम् । सह्यम् ।

**गदमदचरयमश्चानुपसर्गे ॥३।१।१००॥**

एभ्योनुपसर्गेभ्यो यत् स्यात् ॥ गद्यम् । मद्यम् । चर्यम् ।
ाङि चागुरौ * ॥ आचर्यो देशः । अगुरौ किम् । आचार्यः ।
यमार्थम् । यम्यम् । उपसर्गे तु । प्रगाद्यम् । प्रयाम्यम् ।

**अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु ॥**
**॥३।१।१०१॥**

एते यदन्ता निपात्यन्ते गर्ह्याद्यर्थे ॥ अवद्यमनिष्टम् ।
विक्रेयम् । अनिरोधोप्रतिबन्धः । शतेन वर्या कन्या ।
या । स्त्रीनिर्देशात् पुंसि न । वार्या ऋत्विजः ।

---

शकिसहोः । शक्लृ शक्तौ । षह मर्षणे ।

गदमद । अनुपसर्गे इति । सुब्व्यत्ययेन पञ्चम्यर्थे सप्तमीत्याह-
र्गेभ्य इति । गद व्यक्तायां वाचि । मदी हर्षे । चर गति-
ोः । यम उपरमे । आचार्य इति । उपनेता गुरुः ।
यमार्थमिति । 'पोरदुपधात्' इत्येव सिद्धे पुनर्वचनं
र्थमित्यर्थः ।

अवद्यपण्येति । अवद्यमिति । वदेर्नञः परात् 'वदः सुपि
च' इति यत्क्यपोः प्राप्तयोर्यदेव निपात्यते । पण्यमिति ।
वहारार्थस्य ण्यति प्राप्ते यत् । वर्येति । वृञो ण्यति प्राप्ते यत् ।
। 'एतिस्तुशास्—' इति क्यप् । स्त्रीनिर्देशादिति । वर्येति सूत्रे
र्देशस्तन्त्रमित्यर्थः । वार्या ऋत्विज इति । ऋत्विजां हि
भागादनिरोधः । स्त्रीलिङ्गता तु नास्ति । गर्ह्यादिषु किम् ।
म् । पाण्यम् । स्तुत्यमित्यर्थः ।

---

Dropped N. २. °निर्देशः सूत्रमित्यर्थः । Dc₁. ३. °संविभागा°
४. °रोधोस्ति स्त्रीलि° PC.

वह्यं निपात्यते करणं चेत् । वह्यं शकटम् । वाह्यमन्यत

**अर्यः स्वामिवैश्ययोः ॥३।१।१०३॥**

अर्यः स्वामी वैश्यो वा । आर्योऽन्यः ।

**उपसर्या काल्या प्रजने ॥३।१।१०४॥**

उपसर्येति निपात्यते । गर्भे प्राप्तकाला चेत् उपसार्यान्या ।

**अजर्यं सङ्गतम् ॥३।१।१०५॥**

नञ्पूर्वाज्जीर्यतेः कर्तरि यन्निपात्यते संगतं चेद्वाच्यम न जीर्यतीत्यजर्यं सतां संगतम् ।

---

**वह्यं शकटमिति** । वहत्यनेनेति वह्यम् । **वाह्यमन्यदिति** करणादन्यद्वाह्यमित्यर्थः ।

**अर्यः** । ऋ गतावित्यस्माद्धातोर्ण्यति प्राप्ते स्वामिवैश्ययोर्यो पात्यते । **उपसर्या** । उपपूर्वात् सर्तेर्यत्प्रत्ययो निपात्यते । का प्राप्तोऽस्याः प्राप्तकाला । 'कालाद्यत्' । प्रजनः प्रजननम् । भ घञ् । प्रथमं गर्भग्रहणमिति । इममर्थं काल्या प्रजने इत्यस्य **गर्भे प्राप्तकाला चेदिति** ।

**उपसार्यान्येति** । उपसंक्रमणीयेत्यर्थः ।

अजर्यम् । जीर्यतेरिति । जॄष् वयोहानौ । **संगतमिति** । भ क्तः । संगतिश्चेदित्यर्थः । संगतं किम् । अजरिता कम्बलः ।

---

१. प्रथमगर्भे $D_2$, $B_2$ ; प्रथमे गर्भे $N_1$. २. For प्राप्तकाला PC; $Dc_3$ ha काल्या ।.

**ऋहलोर्ण्यत्** ॥३।१।१२४॥

ऋवर्णान्ताद्धलन्ताच्च ण्यत् स्यात् ॥ कार्यम् । हार्यम् ।
र् । कुत्वम् । हनस्तोचिण्णलोः । घात्यम् ।

**चजोः कु घिण्ण्यतोः** ॥७।३।५२॥

चजोः कुत्वं स्यात् घिति ण्यति च ॥ पाक्यम् । रोग्यम् ।

**न क्वादेः** ॥७।३।५९॥

कवर्गादेर्धातोः चजोः कुत्वं न स्यात् ॥ गर्ज्यम् ॥

**अजिव्रज्योश्च** ॥७।३।६०॥

एतयोर्न कुत्वम् ॥ व्राज्यम् । चाद्व्रजेरपि । वाज्यम् ।
र्भावाण्ण्यति नोदाहरणम् ।

**वञ्चेर्गतौ** ॥७।३।६३॥

गतौ वञ्चेः कुत्वं न स्यात् ॥ वञ्च्यम् । गतौ किम् ।
यं का[4]ष्ठम् ।

**ण्य आवश्यके** ॥७।३।६५॥

आवश्यकेर्थे ण्ये परे कुत्वं न स्यात् ॥

---

ऋहलोः । सुब्व्यत्ययेन पञ्चम्यर्थे षष्ठीत्याह—**ऋवर्णान्ता-**
। **कुत्वमिति** । 'होहन्तेः—' इति ।

चजोः । यथासंख्यमत्र न भवति 'तेन रक्तं रागात्' इति
त् । **पाक्यम्** । **रोग्यमिति** । डुपचष् पाके । रुज रोगे ।
मिति । गर्ज ध्वनौ । **वङ्क्यं काष्ठमिति** । कुटिलमित्यर्थः ।

---

भोग्यम् D₁; रोक्यम् । रोग्यम् । N₁. २. After it—स्यात् D₂.
गतौ तु वङ्क्यं काष्ठम् P. ४. C drops it.

लुम्पेदवश्यमः कृत्ये । अवश्यपाच्यम् । मयूरव्यंसक
दित्वात् समासः ।

**यजयाचरुचप्रवचर्चश्च ॥७।३।६६॥**

एषां ण्ये कुत्वं न स्यात् ॥ याज्यम् । याच्यम् । रोच्यम्
प्रवाच्यम् । ऋच् । अर्च्यम् ।

ऋदुपधादपि ऋचेरत एव ण्यत् ॥ त्यजिपूज्योश्च* ॥
कुत्वम् । त्याज्यम् । पूज्यम् ।

**वचोऽशब्दसंज्ञायाम् ॥७।३।६७॥**

वचः कुत्वं न स्यादशब्दाख्यायाम् ॥ वाच्यम् । शब्द
ख्यायां तु वाक्यम् ।

---

लुम्पेदवश्यमः कृत्ये इति । 'लुम्पेदवश्यमः कृत्ये' इत्यादिन
श्लोकेनेत्यर्थः ।

यजयाचेति । यज देवपूजादौ । टुयाचृयाच्ञायाम् । रुच
दीप्तौ । प्रपूर्वो वच परिभाषणे । ऋच स्तुत्याम् । ननु प्रवच्ग्रहणं किम्
'वचोऽशब्दसंज्ञायाम्' इत्येव सिद्धम् । न सिद्धम् । प्रवाच्यो नाम
पाठविशेषोपलक्षिता ग्रन्थोऽस्ति । तत्र शब्दसंज्ञात्वान्न सिध्यति
अपरे आहुः । प्रपूर्वस्यैव वचेरशब्दसंज्ञायां प्रतिषेधः नान्योपसर्ग-
पूर्वस्य । तेनाविवाक्यमहः इति सिद्धम् । दशरात्रस्य यद्दशममहस्त-
दुच्यते अविवाक्यमिति ।

---

१. ऋचः $B_2$. २. Dropped $N_1$. ३. °वशब्दसंज्ञायाम् C. ४. शब्दसंज्ञाय
तिषिद्धत्वान्न सिध्यति । PC.

**प्रयोज्यनियोज्यौ शक्यार्थे ॥७।३।६८॥**

एतौ शक्यार्थे निपात्येते ॥ प्रयोक्तुं शक्यः प्रयोज्यः । नियोज्यः[1] । अन्यस्तु प्रयोग्यः । नियोग्यः[2] ।

**भोज्यं भक्ष्ये[3] ॥७।३।६९॥**

भोग्यमन्यत् ।

---

प्रयोज्य । युजिर् योगे । भोज्यमिति । भुज पालनाभ्यवहारयोः । अभ्यवहार्यमात्रमत्र भक्ष्यम् । भोग्यमन्यदिति । पालनीयमित्यर्थः । स्पष्टत्वात् त्यक्तं सूत्रचतुष्टयं प्रसङ्गाद्व्याख्यायते । 'न्यङ्क्वादीनां च' ॥७।३।५३॥ एतेषां कवर्गादेशो निपात्यते । न्यङ्कुः । मद्गुः । भृगुः । उप्रत्ययान्ताः । तक्रम् । वक्रम् । रगन्तौ । मेघः । अर्घः । अवदाघः । निदाघः । घञन्ताः । व्यतिषङ्गः । निसर्गः । अवसर्गः । पचाद्यजन्ताः । फलेपाकः । दूरेपाकः । क्षणेपाकः । फलेपाका दुरेपाका इति टाबन्तौ पठन्ति । केचिदकारान्तौ[4] । पाकः । मांसपाकः । कपोतपाकः । उलूकपाकः । कर्मोपपदेभ्योण्[5] । न्यग्रोधः । वीरुत् । 'भुजन्युब्जौ पाण्युपतापयोः' ॥७।३।६१॥ निपात्यौ । भुज्यतेनेनेति भुजः । पाणिः । 'हलश्च' इति घञ् । कुत्वाभावो गुणाभावश्च निपातनात् । न्युब्जिताः शेरतेत्र न्युब्जः । रोगः । घञ्[6] । कुत्वाभावः । 'प्रयाजानुयाजौ यज्ञाङ्गे' ॥७।३।६२॥ घञन्तौ कुत्वाभावार्थं निपात्यौ । प्रञ्च प्रयाजाः[7] । यज्ञाङ्गे किम् । प्रयागः । अनुयागः[8] । प्रयाजानुयाजाविति निर्देशनार्थम्[9] । अन्यत्रापि स्यादिति । उपयाजः । उपांशुयाजः । पत्नीसंयाजः । ऋतुयाजः । 'ओक उचः के' ॥७।३।६४॥ उचेर्धातोः के ओक इति निपात्यते ।

---

१. Dropped N. २. $D_1$, $D_2$, $D_4$, N drop it. ३. भक्षे $D_1$. ४. केचिदाबन्तौ $Dc_3$; कोचित् टाबन्तौ PC. ५. श्वपाकः PC. ६. घञि कुत्वा° PC, $Dc_3$. ७. After it—पञ्चानुयाजाः PC, $Dc_3$. ८. प्रयोगानुयागः $Dc_3$. ९. प्रदर्शना° PC, $Dc_3$.

**ओरावश्यके ॥३।१।१२५॥**

उवर्णान्ताण्ण्यत् स्यादावश्यकेर्थे । यतोपवादः । अवश्य-
यम् । विप्रेण शुचिना भाव्यम् । लव्यमन्यत् ।

**आसुयुवपिरपिलपित्रपिचमश्च ॥३।१।१२६॥**

एभ्यो ण्यत् स्यात् यतोपवादः ॥ आसाव्यम् । याव्यम् ।
म् । राप्यम् । लाप्यम् । त्राप्यम् । आचाम्यम् । दभेश्च ॥*
ःयम् । न्लोपिनो निर्देशात् न्लोपः । भेज्जप्यजानमां यद्वेति

---

कः । अन्तोदात्तः फलम् । दिवोकसः । असुनि उणादिबाहुल्यात्
त्रम् ।

ओः । अवश्यंभाव आवश्यकम् । मनोज्ञादित्वाद्बुञ् ।
रेण शुचिना भाव्यमिति । अत्र हि अशुचित्वे प्रत्यवाय इति
वश्यंभावो गम्यते ।

आसु । यतोपवाद इति । षुञ् अभिषवे । यु मिश्रणे ।
योरजन्तत्वाद्यत् प्राप्तः । टुवप । बीजतन्तुसंताने । रप लप
क्तायां वाचि । त्रपूष् लज्जायाम् । चमुछमुजमुझमु अदने ।
ामदुपधपवर्गान्तत्वात् । दभेश्चेति । न्लोपिनो निर्देशादिति ।
दम्भेरदुपधत्वाभावादेव यतोप्राप्तेः सिद्धौ किमर्थं पृथग्
द्विधिः । अतो दभिरयमदुपधोन्य इति वाच्यम् । तथा सति
ःय नकाराभावात् 'न्लोपिनो निर्देशात् न्लोप' इति नोपपद्यते ।

---

१. C drops it. २. भजजपयजा° N₁. ३. दिवौकसः Dc₃. PC.
नलोपि° PC. ५. यलोपे प्राप्ते Dc₃. ६. नलोपि° PC. ७. नलोप PC.

त्। भोग्यम्। भज्यम्। जाप्यम्। जप्यम्। याज्यम्।
म्। आनाम्यम्। आनम्यम्।

आनाय्योऽनित्ये ॥३।१।१२७॥

गार्हपत्ययोनौ दक्षिणाग्नावनित्ये आनाय्यो निपात्यते।
योन्यः।

---

प्रकृत्यन्तरत्वं **न्यासे** उक्तम्। तथाहि। दभिधातुर्व-
एव प्रकृत्यन्तरमस्ति चुलुम्पतिवदिति। **पाणिनीयमतदर्पणे**
क्तम्। दभिरवमेथे सौत्र इति। **क्षीरतरङ्गिण्यां** च दभ इति
ावस्तीत्युक्तम्। दभदितिविपारिपडिपस्तेपक्षेप इति पठित्वा
तं दाभीयतीति। **नन्दी** तु दम्भयतीत्येवं मन्यते। इत्यप्युक्तम्।
मात् न्लोपिन इत्यादि कथम्। उच्यते। न्लोपिनो निर्देशात् न्लोप
ायमर्थः। दभेश्चेति वार्तिके न्लोपिनो दभेर्निर्देशाल्लोपो
स्तीति। नो लोपः छेदः नकाराभाव इत्यर्थः। स विद्यते यस्य
ो तस्य निर्देशात्। नकाररहितस्य दभेर्निर्देशात् न्लोपः नो लोपो
स न्लोपः नकारलोपसहितो नकाररहितो दभिरस्तीत्यर्थः।
धाद्व्याख्यानात् सर्वं समञ्जसं भवति। अथवा दम्भे दंभने
मादेव ण्यद्विधिः दभेश्चेति। ननु चोक्तं दम्भेरदुपधत्वाभावादेव
ण्यदिति। सत्यम्। तथापि ण्यत्संनियोगेन नलोपार्थं दभेश्चेति
्यमिति आचार्याणामभिप्रायः।

**आनाय्यः**। अनित्यमात्रे चेदानाय्य इति निपात्यते तर्हि
देष्वातिप्रसङ्गः। अत आह—**दक्षिणाग्नाविति**। दक्षिणाग्नावपि
ग्यकुलाद्वित्तवतो भ्राष्ट्राद्वानीयते तत्राप्यतिप्रसङ्गस्तत्राह-**गार्हपत्य-**
**ाविति**। एतच्च रूढेर्बलवत्त्वाल्लभ्यते। अत्र च आङ्पूर्वा-
ण्यदायादेशौ निपात्येते। **आनेयोन्य** इति। 'अचो यत्'
यत्।

---

भाज्यम् C. २. °तुषु पठित C. ३. आपि dropped PC, Dc₃.

**प्रणाय्योसंमतौ ॥३।१।१२८॥**

दुर्मतौ निष्कामे वा वाच्ये । प्रणाय्यः साधुश्चं[1] प्रणेयोन्यः ।

**पाय्यसांनाय्यनिकाय्यधाय्या मानहविर्[illegible]**
**सामिधेनीषु ॥३।१[illegible]**

एते मानादौ क्रमान्निपात्यन्ते ॥ पाय्यं [illegible] पेयमन्यत् । सांनाय्यं हविः । संनेयमन्यत् । निकाय्यो [illegible] निचेयोन्यः । दधात्यग्निमिति धाय्या सामिधेनी ऋक् । ऋत्विजः । धेयमन्यत् ।

**क्रतौ कुण्डपाय्यसंचाय्यौ ॥३।१।१३०॥**

कुण्डैः पीयतेत्र सोम इति कुण्डपाय्यः संचाय्यः क्रतुः ।

---

**पाय्यसान्नाय्य** । **पाय्यमिति** । माङो ण्यत् निपात्यते । **सांनाय्यमिति** । संपूर्वान्नयतेर्ण्यदायादेशावुपसर्गदी[illegible] **निकाय्य** इति । निपूर्वात् चिनोतेर्ण्यत् आयादेशः कुत्वं च इति । धाञो ण्यत् ।

**क्रताविति** । **कुण्डपाय्य** इति । कुण्डशब्दे तृतीयान्त पिबतेर्धातोरधिकरणे यत्प्रत्ययो युक् च निपात्यते । 'यतं इत्युत्तरपदाद्युदात्तत्वम् । **संचाय्य** इति । संपूर्वाच्चिनोतेर्ण्य निपात्यते । संचीयतेसौ संचाय्यः । क्रतौ किम् । कुण्डपानम् ।

---

१. चौरो वा साधुः $N_1$.

**अग्नौ परिचाय्योपचाय्यसमूह्याः ॥३।१।१३१॥**

अग्नावेते साधवः । अग्नौ किम् । परिचेयः । उपचेयः ।
ः ।

**चित्याग्निचित्ये च ॥३।१।१३२॥**

एतौ निपात्येते । चित्योग्निः । अग्नेश्चयनमाग्निचित्या ।

**अमावस्यदन्यतरस्याम् ॥३।१।१२२॥**

अमोपपदाद्वसेः कालेधिकरणे ण्यत् तत्र च वृद्ध्यभावो वा
यते । अमा सह वसतोस्यां चन्द्रार्कावित्यमावस्या अमा-
। वा । यजन्त्यनयेति याज्या ऋक् इति केचित् ।

**वदः सुपि क्यप् च ॥३।१।१०६॥**

वदेरनुपसर्गे सुबन्ते उपपदे क्यप् प्रत्ययः स्यात्
ाद्यत् । उपपदमिति समासः । ब्रह्मणा उद्यत इति ब्रह्मोद्या
। ब्रह्मवद्या ।

---

अग्नौ । पर्युपपूर्वस्य चिनोतेर्यदायादेशौ निपात्येते । संपूर्वाद्वहतेः
रणं दीर्घत्वं च ।

चित्या । चीयतेसौ चित्योग्निः । अग्निचित्येति । भावे
ययः तुक् च निपात्यते । तेनोदात्तत्वं स्यात् । अमावित्येव ।
मन्यत् । अमा । अत्रोक्तम् ।

अमावसोरहं ण्यतोर्निपातयाम्यवृद्धिताम् ।
तथैकवृत्तिता तयोः स्वरश्च मे प्रसिध्यति ॥ इति ॥

वदः । ब्रह्मोद्येति । कर्मणि क्यप् । संप्रसारणम् । आद्गुणः ।
केम् । वाद्यम् । अनुपसर्गे किम् । प्रवाद्यम् ।

---

After it—स्त्रीत्वं लोकात् P. २. C, P drop it. ३. °वास्या अमावस्या N$_1$; °वास्या अमावस्या D$_4$. ४. च D$_2$. ५. यजन्ते अनये° D$_1$.
ter it—वा N$_1$, D$_4$.

**भुवो भावे ॥३।१।१०७॥**

अनुपसर्गे सुप्युपपदे भुवः क्यप् स्याद् भावे ॥ ब्रह्मणो[1] भावो ब्रह्मभूयम् । सुपि किम् । भव्यम् । अनुपसर्गे किम् । प्रभव्यम् ।

**हनस्त च ॥३।१।१०८॥**

अनुपसर्गे सुप्युपपदे हन्तेर्भावे क्यप् स्यात् तकारोन्ता-[3]देशश्च । ब्रह्मणो हननं ब्रह्महत्या । स्त्रीत्वं लोकात् ।[2]

**एतिस्तुशास्वृदृजुषः क्यप् ॥३।१।१०९॥**

एभ्यः[4] क्यप् स्यात् ॥

**ह्रस्वस्य पिति कृति तुक् ॥६।१।७१॥**

धातोर्ह्रस्वान्तस्य[5] तुगागमः स्यात् पिति कृति ॥ इत्यः । स्तुत्यः । शास इदङ्हलोः । शिष्यः । वृ इति वृञो ग्रहणं न वृङः । वृत्यः । वृङस्तु वार्या ऋत्विजः । आदृत्यः । जुष्यः । पुनः क्यबुक्तिः क्यप्बाधकस्य ण्यतो बाधनार्था । अवश्यस्तुत्यः॥

---

भुवः । भावग्रहणमुत्तरार्थम् । पूर्वसूत्रे चानुकृष्टत्वाद्यदत्र नानुवर्तते ।

हनः । सुपि किम् । घातो वर्तते । भावे ण्यत् न भवत्यनभि-धानात् । अनुपसर्गे किम् । प्रघातो वर्तते ।

एति । इण् गतौ । ष्टुञ् स्तुतौ । शासु अनुशिष्टौ । वृञ् आवरणे । दृङ् आदरे । जुषी प्रीतिसेवनयोः । पुनः क्यबिति । ‘वदः सुपि क्यप् च’ इत्यतः क्यप्ग्रहणेनुवर्तमाने पुनः क्यबुक्तिरि-

---

१. $D_1$ drops ब्रह्मणो भावः; before it—चानुकृष्टमुत्तरत्र नानुवर्तत इति यतो नानुवृत्तिः । $N_1$. २. After it—क्लीबत्वं लोकात् P. ३. तकारान्ता° $D_4$. ४. Before it—सुप्युपसर्गे भावे इति निवृत्तम् । $N_1$. ५. °ह्रस्वाङ्गस्य C.

शंसिदुहिगुहिभ्यो वा[1] । शस्यम् । शंस्यम् । दुह्यम् ।
गुह्यम् । गोह्यम् ॥ आङ्पूर्वादजेश्च संज्ञायाम् । अ
वीभावो नेति वाच्यम् ॥* आज्यम् । उपेयमिति ई[2] गत
रूपं नेणः ।

## ऋदुपधाच्चाकॢपिचृतेः ॥३।१।११०॥

ऋदुपधात् क्यप् स्यात् कॢपिचृती[4] विना ॥ वृत

---

त्यर्थः । शंसीति । शंसु स्तुतौ । दुह प्रपूरणे । गुहू
आङ्पूर्वादिति । 'अजेर्व्यघञपोः ।' इति प्राप्तवीभावनिवृ
अजेरिति । आङ्पूर्वस्याज गतावित्यस्य रूपम् । ननु चाञ्जू
म्रक्षणकान्तिगतिषु इत्यस्यैतद्रूपमिति न्यासकार आह । भा
ष्याह । अञ्जेश्चोपसंख्यानम् । आज्यम् । यदि क्यप् वृद्धिर्न
तस्मात् ण्यदेव । यदि ण्यत् उपधालोपो न प्राप्नोति तस्मात्
ननु चोक्तं वृद्धिर्न प्राप्नोतीति । आङ्पूर्वस्यैष प्रयोग इ
किमज गतावित्यस्येत्युच्यते । समज्येत्यत्र वीभावार्थं च
अजेः क्यपि वीभावो नेति वाच्यमिति । तदत्र किमर्थं
तत्रोच्यते । अज गतौ । अस्यापि आज्यमित्येतद्भवतीति प्रद
द्रवरूपे घृतेनुगतार्थत्वात् । म्रक्षणार्थत्वेनाजेरनुगतार्थत्वमिति
रप्याज्यं भवतीत्यभिप्रायेणैतस्येत्युक्तम् ।

ऋदुपधात् । कॢपिचृती विनेति । कृपू सामर्थ्ये । चृती ।

---

१. °गुहिदुहिभ्यो वा D₂, D₄. २. ई C; ईङ् D₂. ३.
४. चृति N₁. ५. वीभावाप्राप्त्यार्थं च कर्तव्यम् PC; वीभावाभाव।
६. अत्रो° PC.

वृध्यम् । कृपिचृत्योस्तु कल्प्यम् । चर्त्यम् । ऋदुपधेति किम् । कृत्-कीर्त्यम् ।। पाणौ सृजेर्ण्यत् ।।* पाणिसर्ग्या समवपूर्वाच्च ।।* समवसर्ग्या ।।

## ई च खनः ॥३।१।१११॥

खनः क्यप् स्यादीकारोन्तादेशश्च ।। आद्गुणः । दीर्घोक्तिरिकारान्तरप्रश्लेषार्था । तेन येविभाषेत्यात्वं न ।

## भृञोसंज्ञायाम् ॥३।१।११२॥

भृञः क्यप् स्यान्न तु संज्ञायाम् ।। भृत्यः । सं भार्या नाम क्षत्रियाः । भार्या वधूः ॥

---

एतौ मुक्त्वा । कृपेर्लत्वस्यासिद्धत्वादृदुपधत्वम् । कल चर्त्यमिति । 'ऋहलोर्ण्यत्' । कीर्त्यमिति । कृत संशब्दे । 'अ इत्यत्र भूतपूर्वग्रहणात् 'णेरनिटि' इति णिलोपेपि कृते यत् अनित्यण्यन्ताश्चुरादय इति पक्षे णेरभावे ण्यत् । तित्त्वात् स्वरितम्' इति अन्तस्वरितत्वम् । क्यपि हि सत्याद्युदात्तत्वं खेयमिति । खनु विदारणे । ननु च किमर्थं दीर्घ ईकार उच्यत ह्रस्व एवोच्येत । ह्रस्वेपि आद्गुणेनैव खेयमिति सेत्स्यतीति आह—दीर्घोक्तिरिति ।

भृञः । भार्या वधूरिति । ननु चात्र 'संज्ञायां सम इति क्यपा भवितव्यम् । 'भृञोसंज्ञायाम्' इत्यस्य तु प्रति पुंसि संज्ञाविषये भार्या नाम क्षत्रिया इत्यत्र सावकाशत तन्न । तत्र भावाधिकारोस्ति । तेन कर्मणि भार्येत्यत्र ण्यतैव भ तथोक्तम् ।

---

१. कृपि $D_1$. २. कृती छेदने $D_1$. ३. न भवति $D_1$. ४. भा क्षत्रियः $D_2$ $D_4$, $B_2$. ५. C drops it. ६. संशब्दने PC; $Dc_3$.

संभृत्रो वा* ॥ संभृत्यः । संभार्यः ।

**मृजेर्विभाषा ॥३।१।११३॥**

मृजेः क्यब् वा स्यात् पक्षे ण्यत् ॥ मृज्यः । मार्ग्यः ।

**राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ॥३।१।११४॥**

एते क्यबन्ता निपात्यन्ते ॥ राज्ञा सोतव्यो राजसूयः
ः । सुवति सरति वा सूर्यः । मृषा उद्यते मृषोद्यं नित्यम् ।
ते रुच्यः । स्वर्णरूप्याभ्यामन्यत् कुप्यम् । गोप्यमन्यत् ।

---

'संज्ञायां पुंसि दृष्टत्वात् न ते भार्या प्रसिध्यति ।
स्त्रियां भावाधिकारोस्ति तेन भार्या प्रसिध्यति' ॥
व व्याख्यातप्रायमेतत् ।

**संभृत्रो वेति** । असंज्ञायां नित्यं क्यपि प्राप्ते विकल्प उच्यते ।
**मृजेः** । ऋदुपधत्वात् प्राप्तविभाषेयम् । **मार्ग्य इति** ।
ोः—' इति कुः । 'मृजेर्वृद्धिः' ।

**राजसूयेति** । **राज्ञा सोतव्यो राजसूय इति** । षुञ् अभिषवे ।
ाद्राजनि तृतीयान्ते उपपदे कर्मणि क्यप् । तस्य
गभावो दीर्घत्वं च निपात्यते । राजा वा सूयतेत्रेति राजसूयः ।
ीति **सरतीति** । षु प्रेरणे । सृ गतौ । आभ्यां यथाक्रमं
ण्यति च प्राप्ते क्यप् निपात्यते । सुवतीति कर्मणि लोकात्
ीति । **मृषोद्यं नित्यमिति** । 'वदः सुपि क्यप् च'
न पक्षे क्यपि पक्षे च यति प्राप्ते क्यबेव निपात्यते ।
ृषोद्यं नित्यं रूपं भवतीत्यर्थः । **रोचते रुच्य इति** । रोचते
कर्तृप्रत्ययेन तृजाद्यपवादः कर्तरि क्यप् निपात्यत इति दर्शयति ।
**मेति** । गुप गोपने । गुपू रक्षणे । क्यप् । आदेः कत्वं-

---

मृषोद्यः । $N_1$. २. °मन्यद्धनं $D_2$. ३. कोप्य° C. ४. °कुत्वं च $Dc_3$.

कृष्टे स्वयमेव पच्यत इति कृष्टपच्यो व्रीहिः । न व्यथते अ॰

**भिद्योद्ध्यौ नदे ॥३।१।११५॥**

कर्तरि क्यबन्तावेतौ नदे वाच्ये ॥ कूलं भिनत्तीति
नाम नदः । वारि उज्झतीति उद्ध्यो नदः ॥

**पुष्यसिध्यौ नक्षत्रे ॥३।१।११६॥**

कार्यं पुष्णाति पुष्यत्यस्मिन् वा पुष्यो नक्षत्रम्
साधयति सिध्यत्यस्मिन् वा सिध्यः । स एव तिष्योपि ।

**विपूयविनीयजित्या मुञ्जकल्कहलिषु**
**॥३।१।**

पूनीजिभ्यः क्यब् निपात्यते ॥ विपूयो :

---

निपात्यते । कृष्टे स्वयमेव पच्यत इति कृष्टपच्य इति । क
क्यप् निपात्यते इति दर्शयति । अव्यथ्य इति । व्यथ भयसंच
अस्मात् कर्तरि तृजपवादः क्यप् निपात्यते ।

भिद्य । भिदेर्नदेभिधेये कर्तरि क्यप् तृजपवादो नि
उद्ध्येति । उज्झ उत्सर्गे । अस्य धत्वं च कार्यम् ।

पुष्णातीत्यादिना पुष पुष्टौ अस्मात् तथा षिधू
इत्यस्मात् कर्तरि अधिकरणे चार्थे नक्षत्रेभिधेये क्यप्
इति दर्शयति । स एव तिष्योपीति । तुष तुष्टौ इत्यस्य

विपूय । पूञ् पवने । णीञ् प्रापणे । जि
त्रयाणामप्यजन्तत्वात् यति प्राप्ते कर्मणि क्यप् निप
विपूय इति । विपूयते इति विपूयः मु

---

१. व्यथ्यते $D_1$, C. २. Before it—स्तः $D_2$; निपात्येते $B_2$,
३. Dropped in $D_1$.

विनीयः कल्कः । जित्यो हलिः । एषु किम् । विप[1]
विनेयम् । जेयम् ॥

**प्रत्यपिभ्यां ग्रहेश्छन्दसि ॥३।१।११८॥**

आभ्यां ग्रहेः क्यप् स्याच्छन्दसि ॥ भाषायां
केचित् । प्रतिगृह्यम्[2] । प्रतिग्राह्यम् । अपिगृह्यम् । अपिग्राह्य

**पदास्वैरिबाह्यापक्ष्येषु च ॥३।१।११९॥**

एष्वर्थेषु ग्रहेः क्यप् स्यात् ॥ प्रगृह्यं पदम् ।
अस्वैरी । ग्रामगृह्या सेना । ग्रामबाह्येत्यर्थः । स्त्रीनिर्देशान्[4]
कृष्णगृह्यः । तत्पक्षाश्रित इत्यर्थः ।

---

कश्चिदोषाधिविशेषः । **विनीयः कल्क** इति । विनीयते सिद्धि
इति विनीयः । तैलेन घृतेन वा त्रिफलादिद्रव्यसमवेतेन
कश्चिदोषधविशेषः कल्कः । जेतव्यो जित्यः । महद्धलं हलिरित्

**प्रत्यपि** । 'ग्रहोऽपिप्रतिभ्यां ति वा' इति दुर्गोक्तेः भाषा
तन्मतमाश्रित्याह—**भाषायामिति** । **प्रतिगृह्यमिति** । 'ग्रहिज
इति संप्रसारणम् । 'कुगतिप्रादयः' इति समासः ।

**पदा** । एष्विति । पदे अस्वैरिणि बाह्यायां पक्ष्ये वार्थे ।
पदमिति । प्रगृह्यत इति प्रगृह्यम् । असंनिकर्षोऽत्र ग्रहेरर्थः ।
हि तत्र न संधीयते । यस्य पूर्वाचार्यैः प्रगृह्यसंज्ञा विहि
प्रगृह्यम् । **अस्वैरीति** । स्वयमीरितुं शीलं यस्य । ताच्छी
णिनिः । स्वैरी स्वतन्त्रः । अस्वैरी परतन्त्रः । **ग्रामबाह्येत्यर्थ**
बहिर्भवा बाह्या । 'बहिषष्टिलोपो यण् च' । इति यण् टिलो
ग्रामबहिर्भूतेत्यर्थः । **अन्यत्रेति** । पुंसि नपुंसके च ।

---

१. पव्यम् । $N_1$. २. प्रतिगृह्यः । प्रतिग्राह्यः । अपिगृह्यः । $N_1$; drops अर्थेषु. ४. Before it—पक्षे भवः पक्ष्यः । $N_1$.

**विभाषा कृवृषोः ॥३।१।१२०॥**

आभ्यां वा क्यप् स्यात् ॥ कृत्यम् । कार्यम् । वृष्यम् । व

**युग्यं च पत्रे ॥३।१।१२१॥**

पत्रं वाहनम् । युग्यमश्वादि चेत् । योग्यमन्यत् ।

**प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ॥३।३।१**

प्रेषितस्त्वं त्वया गन्तव्यं गमनीयं गम्यम् । अनुज्ञा त्वया अध्येतव्यमध्ययनीयमध्येयम् । प्राप्तस्ते कालस ध्यातव्यं ध्यानीयं ध्येयम् । सामान्यतः प्राप्तावप्यत्र लोटा मा भूदिति पुनः कृत्यविधिः । स्त्रियां क्तिन ऊर्ध्वं सरूपविधेरभावात् ।

---

वृष्यमिति । वृषु सेचने । पक्षे ण्यत् ।

**पत्रं वाहनमिति** । पतत्यनेनेति पत्रम् । 'दाम्नी— ष्ट्रन् । युग्यम् । युजिर् योगे । योजनीयं युग्यम् । युज वा गमनम् ।

**प्रेषितस्त्वमित्यादि** । गमेस्तव्यत्तव्यानीयरः । 'पोरदुप इति यच । **अध्येयमिति** । इङ् अध्ययने । 'अचो यत्' । ध्येयं ध्यै चिन्तायाम् । आत्वम् । यत् । 'ईद्यति' इति ईत्वं गुणः किमर्थं प्रैषादिषूच्यन्ते । यतः सामान्येन भावकर्मणोर्विहिता प्रैषादिषु चान्यत्र भविष्यन्तीत्याशङ्क्याह—**सामान्यत** प्रैषादिष्वर्थविशेषेषु विहितेन लोटा सामान्यविहितानां वृ बाधा मा भूदिति पुनः कृत्यविधिरित्यर्थः । ननु च वासरूपन्य अपि भविष्यन्तीत्याशङ्क्याह—**स्त्रियां क्तिन्निति** । **लिङ्गं** व्याख्यातप्रायमेतत् ।

---

१. D[1] drops पुनः. २. अत ऊर्ध्वं D[1]; इतऊर्ध्वं B[2], D[4]; इत्यत्र f N[1]. ३. प्रैषादिषु कृत्या उच्यन्ते PC.

अर्हे कृत्यतृचश्च ॥३।३।१६९॥

स्तोतुमर्हः स्तोतव्यः । स्तवनीयः । स्तुत्यः । लिङात्र
। मा भूदिति कृत्यतृचोर्विधिः ।

भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्या-
पात्या वा ॥३।४।६८॥

एते कृत्यान्ता वा कर्तरि निपात्यन्ते ॥ भवतीति भव्यः ।
मनेन वा । गायतीति गेयः । गेयं साम बटुना वा ।
दि ।

शकि लिङ् च ॥३।३।१७२॥

चात् कृत्याः ॥ वोढुं शक्यो वोढव्यः । वहनीयः । वाह्यः ।

---

भव्यगेय । 'तयोरेव' इति भावकर्मणोः प्राप्तौ पक्षे कर्तरीत्युच्यते ।
दिषु गेयप्रवचनीयोपस्थानीयानां कर्तरि कर्मणि च शेषाणां
र्मकत्वाद् भावे कर्तरि च । भव्य इति । 'अचो यत्' । गुणः ।
ोस्तन्निमित्तस्यैव' इत्यव् । गेय 'ईद्यति' इतीत्वम् । इत्यादीति ।
शब्देन प्रवचनीयो गुरुः स्वाध्यायस्य । प्रवचनीयः स्वाध्यायो
ा । उपस्थानीयः शिष्यो गुरोः । उपस्थानीयो गुरुः शिष्येण ।
ोसौ जन्यः । जन्यमनेन वा । आप्लवते आप्लाव्यः ।
ाव्यमनेन वा । आपततीत्यापात्यः । आपात्यमनेन वा । इति
ातं स्पष्टं कृत्यम् । वोढव्य इति । वह प्रापणे । तव्यः । 'हो
। 'झषस्तथोः—' इति धः । ष्टुत्वम् । ढलोपः । 'सहिवहोरोद-

---

D₁ drops स्तोतुमर्हः ; स्तोतुमर्हति D₂. २. Before it—भूयते B₂.

लिङा बाधो मा भूदिति कृत्योक्तिः ॥

इति कृत्यप्रक्रिया ॥

---

वर्णस्य ' इत्योकारः । लिङेत्यादि । पूर्ववद् व्याख्यात
स्पष्टत्वात् त्यक्तमेकम् । ' कृत्याश्च ' ॥३।३।१७१॥ आव
धमर्ण्ययोः कृत्याः स्युः । आवश्यके । कटः कार्यः । आ
शतं दातव्यम् । निष्को देयः । आवश्यकाधमर्ण्ययोर्विशेष
णिनिना बाधा मा भूदिति विधिः । केचित्तु कर्तरि
णिनिर्भावकर्मविहितानां कृत्यानां न बाधक इत्याशङ्क्य भव्य
कर्तृवाचिन इहोदाहरणमित्याहुः ॥

श्रीरामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्यो यं माणिकाम्बाप्यजनयदतुलं विट्ठलाचार्यमार्य
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेस्मिन् प्रसादे निरगमदमला प्रक्रिया कृत्यसंज्ञ

---

१. बाधा N. २. °दमलप्रत्ययाः कृत्यसंज्ञाः Do3; निरनुगुणा कृत्यसंज्ञाः PC.

ण्वुल्तृचौ ॥३।१।१३३॥

धातोर्ण्वुल्तृचौ स्तः कर्तरि कृदिति कर्त्रर्थे ॥ युवोरनाकौ ।
रोतीति कारकः । कर्ता । वोढुमर्हो वोढा । प्रत्ययस्था-
ात्वम् । कारिका । ऋन्नेति ङीप् । कर्त्री । गाङ्कुटेति
त्वम् । कुटिता । कोटकः । विज इट् । विजिता । वेजकः ।
हतोचिण्णलोः । घातकः । आतो युक् चिण्कृतोः । दायकः ।
ात्तोपदेशेति उपधावृद्धिर्न । शमकः । दमकः । अनिटस्तु

---

ण्वुल् । णकारो वृद्ध्यर्थः । उकारो युवोरिति विशेषणार्थः ।
ारः प्रत्ययात्पूर्वस्योदात्तार्थः । चकारस्तृन्तृचोः सामान्यग्रहणार्थः
रेष्ठेमेयस्सु' इत्यादिषु । नान्तोदात्तार्थः । तस्य प्रत्ययस्वरेणैव
त्वात् । कारक इति । डुकृञ् करणे । 'अचो ञ्णिति' इति
ः । रपरः । कृत्त्वात् प्रातिपदिकत्वम् । स्वादयः । कर्तेति ।
। 'ऋदुशनस्—' इत्यनङ् । 'सर्वनामस्थाने च' इत्युपधादीर्घः ।
पः । वोढेति । वह प्रापणे । 'हो ढः' । 'झषस्तथोः—' इति
ष्टुत्वम् । 'ढो ढे लोपः' । 'सहिवहोः—' इत्योकारः ।
रिकेति । 'अजाद्यतष्टाप्' । 'हल्ङ्याब्—' इति सुलोपः ।
तेति । कुट कौटिल्ये । 'क्ङिति' इति गुणनिषेधः । कोटक
। अञ्णितीति निषेधान्न ङित्त्वम् । विजितेति । ओविजी
चलनयोः । वेजक इति । अत्रापि णित्त्वात् ङित्वाभावः । घातक
। हन हिंसागत्योः । 'अत उपधायाः' इति वृद्धिः । 'हो
ः—' इति कुत्वम् । दायक इति । डुदाञ् दाने । नोदात्तोप-
ति । अनेन सेटो मान्तस्य वृद्धिनिषेध इति भावः । शमको
ः इति । शम दम उपशमे । यम उपरमे । 'जनिवध्योः'

---

ऋन्नेभ्यो ङीप् P, C. २. गाङ् कुटादीति $D_1$. ३. °पदेशस्येत्यादि $D_2$, °पदेत्यादि C; °पदेशेत्यादि P. ४. शमु दमु PC. ५. यमु $Dc_3$, PC.

ामकः । जनिवध्योश्च । जनकः । वधकः । रधिजभोरचि ।
न्धकः । जम्भकः । नेट्यलिटि रधः । रधिता । रद्धा ।[1]
मङ्क्ता । नंष्टा । नशिता[3] । रम्भकः[4] । रब्धा । लम्भकः ।
लब्धा । तीषसहेति वेट् । एषिता । एष्टा । सहिता । सोढा[5] ।
दरिद्रातेरालोपः । दरिद्रिता । ण्वुलि न । दरिद्रायकः ।
कृत्यल्युट इत्यत्र बहुलोक्तेः क्वचित् कर्मण्यपि ण्वुल् स्यात्[6] ।
पादाभ्यां ह्रियते पादहारकः । गले चोप्यते[7] गलेचोपकः ।
हलदन्तादित्यलुक्[8] । आत्मनेपदार्हात् क्रमेः कृत[9] इण्निषेधः ।

---

इति वृद्धिनिषेधः । जनकः । जन जनने । वधक इति । वध
हिंसायाम् । 'रधिजभोरचि' इति । नुमिति भावः । रन्धक इति ।
रध हिंसायाम् । जम्भक इति । जभ गात्रविनामे । नेटीति ।
नुम्निषेधः । मङ्क्ता । नंष्टेति । टुमस्जो शुद्धौ । णश अदर्शने ।
'मस्जिनशोः—' इति नुम् । रम्भक इति । रभ राभस्ये ।
'रभेरशब्लिटोः' इति नुम् । लम्भक इति । डुलभष् प्राप्तौ ।
'लभेश्च' इति नुम् । तीषसहेति वेट् । एषितेति । इषु इच्छायाम् ।
सोढेति । षह मर्षणे । ढत्वम् । धत्वम् । ष्टुत्वम् । ढलोपः ।
'सहिवहोः—' इत्योत् । दरिद्रायक इति । दरिद्रा दुर्गतौ ।
'आतो युक् चिण्कृतोः' । गलेचोपक इति । चुप मन्दायां गतौ ।
आत्मनेपदार्हादिति । सत्यात्मनेपदे निषेध इत्युक्तत्वादिदं
वक्तव्यमारभन्ते । 'प्रोपाभ्यां समर्थाभ्याम्' इत्यात्मनेपदयोग्यता ।

---

१. Before it:—रधेर्लिड्वर्जं इटि रधेर्नुम् नं स्यात् । $B_2$. २. Before it—धादिभ्यश्चेति वेट् । मस्जिनशोरिति नुम् $D_2$; मस्जिनशोर्झलीति । मज्जकः । $B_2$. . $D_1$, $D_4$ and C, $B_2$ drop it; नाशिता । नंष्टा N. ४. रम्भकः । शकः । $B_2$. ५. °सह P, $D_2$; सहेति $D_4$. ६. C drops it. . चुप्यते $B_2$, $D_4$. ८. हलदन्तात् सप्तम्याः संज्ञायाम् $D_2$; हलदन्तेत्यलुक् . ९. कर्तरि कृत P.

न्ता । कर्तरीत्येव । प्रक्रामितव्यम् । गमेरिट् । तज्ञानाभाव युक्तेः संजिगमिषिता । संजिगंसितेत्यपि केचित् । एवं न भ्यश्चतुर्भ्यः । विवृत्सिता । विवर्तिषितेत्यपि केचित् । क्लृप्सिता । न धातुलोप इत्यत्र इक एव गुणवृद्धिनिषेधात् पाचकः । पापचिता । इत्यादि ज्ञेयम् ।

**नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः॥३।१।१३४॥**

नन्द्यादेर्ल्युः । ग्रहादेर्णिनिः । पचादेरच् । नन्दनः । से ङसि अने च चक्षिङः ख्याञ् नेति वाच्यम्॥* विचक्षणः ।

---

ारिडित्यादि । संजिगमिषितेत्यत्र परस्मैपदाभावेपि इट् भव- त्र । कुतः । 'गमेरिट् परस्मैपदेषु' इति परस्मैपदग्रहणं ानयोरभावं लक्षयतीति कृत्वा । संजिगंसितेत्यपि केचिदिति । शेषकारस्यायं पक्षः । विवृत्सितेति । वृतु वर्तने । सन् । द्वित्वम् । रत्' इत्यत्वम् । 'सन्यतः' इतीत्वम् । 'हलन्ताच्च' इति त्वम् । चिक्लृप्सितेति । कृपू सामर्थ्ये । सन् । 'कृपो रो लः' इति त्रम् । 'तासि च क्लृपः' इतीण्निषेधः । पापाचक इति । चष् पाके । 'धातोरेकाचः—' इति यङ् । 'सन्यङोः' इति वम् । 'दीर्घोकितः' इति दीर्घत्वम् । ण्वुल् । 'अतो लोपः' । त उपधायाः' इति वृद्धिः । भाष्यकारमते तु पापच्यते अस्मात् ले 'अतो लोपे' 'यस्य हलः' इति यस्य लोपः । अल्लोपस्य निवत्त्वान्न वृद्धिः । पापचक इति ।

**नन्दीति** । द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यत इत्यभि- णाह—**नन्द्यादेरिति** । **नन्दन इति** । नन्दयतीति नन्दन । टुनदि समृद्धौ । **विचक्षण इति** । चक्षिङ् व्यक्तायां

---

. क्रमितव्यम् । N1. २. पापाचिता D2, B2. ३. स्वयमेव ज्ञेयम् D4. नन्दादे° C. ५. °रच् स्यात् B2, D4. ६. पापचक Dc3, PC.

जनार्दनः । मधुसूदनः । ग्राही । स्थायी । प्रयायिणौ ।
देवट् । देवः । देवी । षोडन् शब्दाणिणंच् टिलोपः । प

---

वाचि । जनार्दनः । मधुसूदन इति । जना
जनार्दनः । मधुं सूदयतीति मधुसूदनः । अत्र कर्मण्यणि प्र
नन्दनः । वाशनः । मदनः । दूषणः । साधनः ।
वर्धनः । शोभनः । एभ्यो ण्यन्तेभ्यः । सहितापिमदीभ्यः स
सहनः । तपनः । मदनः । कल्पनः । जल्पनः । रमणः ।
संक्रन्दनः । संकर्षणः । संहर्षणः । जनार्दनः । पवनः । ग
विभीषणः । लवणः । निपातनात् णत्वम् । चित्तवि
कुलदमनः । इति नन्द्यादिः । ग्राहीति । ग्रह उपादाने । णिन
'सौ च' इति दीर्घः । स्थायीति । 'आतो युक्—' । प्र
विति । या प्रापणे । 'प्रातिपदिकान्तनुम्विभक्तिषु च' इ
ग्राही । उत्साही । उद्दासी । उद्भासी । मन्त्री ।
रक्षुश्रुवपृश्यो नौ । निरक्षी । निश्रावी । निवापी ।
याचृव्याहृव्रजवदवसां प्रतिषिद्धानाम् । अयाची । अव्या
अव्राजी । अवादी । अवासी । अचामचित्तकर्तृकाणाम्
द्धानामित्येव । अकारी । अहारी । विशयी विषयी देशे
विषयी देशः । अभिभावी भूते । अभिभावी । अपराधी ।
इति ग्रहादिः । पच इति । डुपचष् पाके । देवीति । 'टि
इति ङीप् । पच । वच । वद । वप । चल । पत । नदट्
गरट् । तरट् । चरट् । चोरट् । गाहट् । जर । मर
सदृट् । देवट् । देव । सेव । शेष । कोप । मेध । नर्त । प्रा

---

१. °ण्णिच्चि कृते P. २. कर्मप्रासे Dc₁. ३. Before PC. ४. After it—असंख्याहारी PC. ५. After it षकोपमेधनर्तप्राणदर्शजंघा Dc₃, PC. ६. After it—भषट् ७. Dropped Dc₃, PC. ८. सेव Dc₃. ९. After it- Dc₃.

ङः । यङोचि चेति यङो लुक् । न धातुलोपे इति गुणनिषेधः ।
न्यः । लोलुवः । पोपुवः । मरीमृजः । उदन्ताद् यङो
भ्रेति केचित् । रोरूयः ॥ चरिचलिपतिवदीनां वा द्वित्वम[2]-
गोत्वमभ्यासस्य ॥ * अभ्यासस्य[4] कार्यमनचीति वक्तव्यमिति
हलादिशेषाभावः । चराचरः । चलाचलः । पतापतः ।
दावदः । हन्तेर्घत्वं च । घनाघनः । पाटेर्णिलुक् ऊक् चाभ्यासस्य ।
टूपटः[6] । पक्षे । चरः । चलः । पतः । वदः । हनः । पाटः ।
अर्थे कविधानमिति कृञः क्लिदेः क्रसश्च कप्रत्ययः । कृञादीनां
द्वे स्तः । चक्रम् । चिक्लिदम्[7] । चक्रसः । पक्षे क्लिदक्न-
रजिति केचित् । क्लेदः । क्रसः ।

---

रभर । पङ्क । श्वपच । पचादिराकृतिगणः । षोड इति । षट्
न्ता यस्यासौ षोडन् । षष उत्वमित्युक्तम् । ष्टुत्वम् । षोडन्तमाचष्टे ।
त्करोति तदाचष्टे' इति णिच् । 'णाविष्ठवत्' इति टिलोपः ।
च् । 'णेरनिटि' इति णिलोपः । नेन्यः । लोलुवः । पोपुव इति ।
ञ् प्रापणे । लूञ् छेदने । पूञ् पवने । एभ्यो धातुभ्यो 'धातोरेकाचः—'
ति यङ् । 'सन्यङोः' इति द्वित्वम् । 'गुणो यङ्लुकोः'
त्यभ्यासस्य गुणः । मरीमृजः । मृजूष् शुद्धौ । 'रीगृदुपधस्य च'
ति रीक् । रोरूय इति । रु शब्दे । चराचर इत्यादि । चर
तिभक्षणयोः । चर गतौ । पत्लृ पथे च गतौ च । वद व्यक्तायां
ाचि । घनाघन इति । हन हिंसागत्योः । पाटूपट इति । पट
ास्तारे । चुरादिः । चक्रमिति । डुकृञ् करणे । चिक्लिदमिति ।
क्लिदू आर्द्रीभावे । क्रस इति । क्रसु हरणे ।

---

१. °लोपेति $N_1$; °लोपे च $D_4$. २. °मच्याच्काभ्यासस्य $D_2$, P, N;
ाच्याक्चाभ्यासस्य $B_2$. ३. च्याक् चाभ्या° $D_4$. ४. अभ्यासकार्य° $D_2$.
. हलादिः शे° $N_1$. ६. पटूपटः $D_2$, $D_4$, N. ७. After this—क्लीबत्वं
ाकात् P; चिक्लिदः N. ८. Dropped PC; $Dc_3$. ९. पटूपट Mss. $Dc_3$;
C.

**रात्रेः कृति विभाषा ॥६।३।७२॥**

कृदन्ते परे रात्रेर्मुमागमो वा स्यात् ॥ रात्रिंचर
रात्रिचरः । रात्रिमटः । रात्र्यटः ।

**इगुपधज्ञाप्रीकिरः कः ॥३।१।१३५॥**

एभ्यः कः स्यात् ॥ क्षिपः । बुधः । भूरुहः । ज्ञ
इयङ् । प्रियः । कॄ । ॠत इत् । किरः । गिरतेश्चेत्येके । गि
गिले परेगिलस्य पूर्वस्य मुम्वाच्यः ॥ * तिमिंगिलः । अगिल
किम् । गिलगिलः । गिलगिले च ॥ तिमिंगिलगिलः
वासरूपविधिना ण्वुल्तृचावपि । क्षेपकः । क्षेप्ता ।

**आतश्चोपसर्गे ॥३।१।१३६॥**

उपसर्गे उपपदे आदन्तात् कः स्यात् । 'श्याद्व्यध-
इति णस्यापवादः । सुस्थः । सुग्लः । प्रज्ञः ।

---

रात्रेः । अप्राप्तविभाषेयम् । रात्रिंचर इति । चरतीति च
पचाद्यच् । रात्रौ चरः । सप्तमीति योगविभागात् समासः । अथवा
चरतीति रात्रिंचरः । 'चरेष्टः' इति टः । उपपदसमासः । रात्रि
इति । अट गतौ । पचाद्यच् । सप्तमीति योगविभागात् समासः ।

इगुपध । क्षिप प्रेरणे । कित्त्वाद्गुणाभावः । बुध अवग
भूरुह इति । भुवि रुहः । रुह जन्मनि प्रादुर्भावे । सप्तमीसमा
ज्ञ इति । ज्ञा अवबोधने । 'आतो लोप इटि च' इत्यालोपः ।
इति । प्रीञ् तर्पणे । किर इति । कॄ विक्षेपे । गिर इति । गॄ निग
तिमिंगिल इति । गॄ निगरणे । मूलविभुजादित्वात् कः । '
इत्—' । रपरः । 'अचि विभाषा' इति लत्वम् । सुग्ल इ
ग्लै हर्षक्षये । कप्रत्यये विवक्षिते 'आदेच उपदेश—' इत्यात्वे

---

१. °र्मुगागमो $D_1$. २. स्याद्वा C. ३. प्रिया $N_1$. ४. अगिलः कि
५. °विधानात् P, C. ६. सुज्ञः C; सुम्नः N. ७. Dropped C, $N_1$
८. After it—सुम्नः $B_2$, $D_4$.

पाघ्राध्माधेट्दृशः शः ॥३।१।१३७॥

एभ्यः शः स्यात् ॥ शित्वात् पिबादयः । शप् । अतो
गुणे । उत्पिबः । उज्जिघ्रः । विधमः । उद्धयः । विपश्यः ।
उपसर्गानुवृत्तिर्नात्रेत्येके । पश्यः । जिघ्रः । संज्ञायां न । व्याघ्रः ।

अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेति-
सातिसाहिभ्यश्च ॥३।१।१३८॥

एभ्योनुपसर्गेभ्यः शः स्यात् । शित्कार्यम् । लिम्पः ।

---

पाघ्रा । पा पाने । घ्रा गन्धोपादाने । ध्मा शब्दाग्निसंयोगयोः ।
धेट् पाने । एषामादन्तलक्षणे के णे च प्राप्ते शो विधीयते ।
दृशिर् प्रेक्षणे । अस्मात् इगुपधलक्षणे । उत्पिब इत्यादि । पाघ्राध्मेति
पिबादेशः । उपसर्गानुवृत्तेरिति । तथोक्तं काशिकायाम् । ‘ उपसर्ग
इति केचिन्नानुवर्तयन्ति ’ इति ।

अनुपसर्गात् । बहुवचनस्थाने सुब्व्यत्ययेनैकवचनम् । लिप
उपदेहे । विद्लृ लाभे । सनुम्कयोर्ग्रहणमुपदेशावस्थायामेव नुमिति
ज्ञापनार्थम् । धृङ् धारणे । हेतुमण्णिजन्तः । पार तीर कर्मसमाप्तौ ।
चुरादिण्यन्तः । यद्वा पॄ पालनपूरणयोः । हेतुमण्ण्यन्तः । विद
चेतनाख्याननिवासेषु । चुरादिण्यन्तः । यद्वा ज्ञानाद्यर्थानां विदादी-
नामन्यतमो हेतुमण्ण्यन्तः । एजृ कम्पने । हेतुमण्ण्यन्तः ।
चिती संज्ञाने । चुरादिण्यन्तः । सातिः सौत्रः । षह मर्षणे ।
हेतुमण्ण्यन्तः । चुरादिण्यन्तो वा । लिम्पः विन्द इति । तुदादिभ्यः

---

१. उत्पश्यः $D_1$. २. $D_1$, $N_1$ drop अत्र. ३. जिघ्रतेः संज्ञायां न $B_2$, $D_4$.
४. विज्ञानार्थम् । $Dc_3$. ५. नाद्यर्थानां विदादीना° $Dc_1$, $Dc_4$.

विन्दः । धारयः । पारयः । वेदयः । उदेजयः ।
सातिः सौत्रः ।[1] सातयः । साहयः । अनुपसर्गात्
प्रलिपः । नौ लिम्पेर्वाच्यः[2] । निलिम्पा देवाः । गवादि
संज्ञायाम् ।। * गोविन्दः । अरविन्दः ।

ददातिदधात्योर्विभाषा ॥३।१।१३९॥

आभ्यां शो वा स्यात् ॥ शित्वात् श्लुकार्यम्[4]
दधः । पक्षे णः । अनुपसर्गादेव । प्रदः । प्रधः ।

ज्वलितिकसन्तेभ्यो णः ॥३।१।१४०॥

इतिशब्द आद्यर्थे । ज्वलादिभ्यः कसन्तेभ्यो ण

---

शः । 'शे मुचादीनाम्' इति नुम् । धारय इत्यादिषु श
इति । इगुपधलक्षणः कः ।

ददाति । णस्यापवादः । श्लुकार्यमिति । 'जुः
श्लुः' । 'श्लौ' इति द्वित्वम् । 'श्नाभ्यस्तयोः' इत्यालोपः
इति । दाय धाय इति रूपं तदा । प्रदः प्रधः इति । 'आत
इति कः । ननु दद दाने दध धारणे आभ्यामपि दद दध इ
दाधाभ्यां णे दायो धाय इति । तत् किमनेन सूत्रेण ।
'अच्कावशक्तौ' इत्यन्तोदात्तः स्यात् । शे तु नञ्स्वर एव

ज्वलि । ज्वल दीप्ताविति द्विः पठ्यते घटादिषु पुरस्
सति संदेहः स्यात् केभ्य इति । तत्राह—कसन्तेभ्य इ
घटाद्यन्तर्गणः पर्युदस्तः स्यात् । कसः परस्ताद्ये

---

१. After it—सुखे वर्तते $N_1$. २. लिपे° $D_1$. ३. अरवि
४. शित्कार्यम् C. ५. इत्याकारलोपः PC. ६. After it—अदः
७. कसेः $Dc_3$.

ण्च् । ज्वालः । ज्वलः । चालः । चलः । अनुपसर्गादेव ।
ः । तनोतेर्णः ॥ * अवतानः ।

श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिष-
श्वसश्च ॥३।१।१४१॥

अनुपसर्गादिति निवृत्तम् । श्यैङ आदन्ताद् व्यधादेश्च
यात् । आदन्तत्वेपि श्यैङुक्तिः कबाधार्था । अवश्यायः ।

---

तेति न । कसेः परं वृदिति पाठात् । ज्वल दीप्तौ । चल कम्पने ।
घातने । टलट्वल वैक्लव्ये । ष्ठल स्थाने । हल विलेखने । णल
। पल गतौ । बल प्राणने धान्यावरोधने च । पुल महत्त्वे ।
संख्याने बन्धुषु च । शल हुल पत्ल गतौ । हुल हिंसासंवरणयोः ।
निष्पाके । पथे गतौ । मथे विलोडने । टुवम उद्गिरणे ।
चलने । क्षर संचलने । क्षल संचये च । षह मर्षणे ।
क्रीडायाम् । षद्लृ विशरणगत्यवसादनेषु । शद्लृ शातने । क्रुश
ने रोदने च । बुध अवगमने । रुह बीजजन्मनि । कुच
निकौटिल्यप्रतिष्टम्भविलेखनेषु । कस गतौ । वृत् ज्वलादिः ।

श्याद्व्यध । श्यैङ् गतौ । आदित्याकारान्ताः । व्यध ताडने ।
तौ । अर्वाचीनाः श्रु श्रवणे इति मन्यन्ते । आङ्पूर्वः पुनः
ः । इण् गतौ । अतिपूर्वः । षोन्तकर्मणि । अवपूर्वः । हृञ् हरणे ।
पूर्व एव । लिह आस्वादने । श्लिष आलिङ्गने । श्वस प्राणने । अत्र
पसर्गास्तेभ्यः सोपसर्गेभ्य एव । शेषेभ्यस्तु सोपसर्गेभ्योनुपसर्गेभ्यश्च ।
पसर्गादिति । उत्तरसूत्रे पुनरनुपसर्गग्रहणात् तन्निवृत्तौ तत्संबद्धं
षाग्रहणमपि निवृत्तम् । आदन्तत्वेपीति । 'आतश्चोपसर्गे' इति

---

. स्थल Dc3. २. °वरोधे च PC, Dc3. ३. बन्धे च PC, Dc3. ४. मथ
५. टुवमु PC.

दायः । धायः । व्याधः । आस्रावः । सस्रावः । आस्रुसश्च[1]
वेति केचित् । आश्रवः । संश्रवः[2] । अत्यायः । अवसायः
अवहारः । लेहः । श्लेषः । श्वासः ॥ दुन्योरनुपसर्गे ॥ * दाव
नायः । वेति केचित् । दवः । नयः । अनुपसर्गे किम्
प्रदवः[4] । प्रणयः ।[5]

**विभाषा ग्रहः ॥३।१।१४३॥**

णो वा व्यवस्थया ॥ जलचरे ग्राहः । ज्योतिषि ग्रह
भुवश्च वा वाच्यः ॥ * भावः । भवः ।

---

विशेषविहितत्वात् कः सामान्यविहितस्य णस्य बाधकः स्यात् । अ
श्यैडुक्तिः कबाधार्थेत्यर्थः । एतत् प्रयोजनमवस्यतेरपि ज्ञातव्यम्
अथवा तस्योपसर्गनियमार्थं ग्रहणम् । अवश्याय इति । अ
युक् । आश्रुसंश्र्वोरिति । तेषामयं भावः । श्याद्यधेति सूत्रे अ
इति स्रु गताविति अस्य ग्रहणं न श्रु श्रवण इत्यस्य । तथा च न्य
अत्र सूत्रे उक्तं स्रु गताविति । तेन श्रु श्रवणे अस्माद[6]जेवेति
तथामरकोशे[7] । ‘वचने स्थित आश्रवः’ इत्युक्तम् । दुन्यो
टु दु उपतापे । णीञ् प्रापणे । पञ्चम्यर्थे षष्ठीसप्तम्यौ । अनुपस
दुनोतेर्नयतेश्च णः स्यादित्यर्थः । दवः । नयः इति । अच् । प्रदव
प्रणय इति । अच् । ‘उपसर्गादसमासेपि’ इति णत्वम् ।

विभाषा । णो वा व्यवस्थयेति । अनेन विभाषाया व्यवस्थि
दर्शयति । तदेव स्पष्टयति—जलचर इति ।

---

१. संश्रावः $D_1$, $D_4$, $B_2$. २. °संश्रौ° $D_1$, $D_4$, P, $B_2$. ३. सं $D_1$, $P_2$, $B_2$, $D_4$. ४. प्रवदः P, $N_1$. ५. After it—उपसर्गेति णः ६. अस्मिन् $Dc_3$. ७. तथा चामर° $Dc_3$.

**गेहे कः ॥३।१।१४४॥**

गेहे कर्तरि ग्रहेः कः स्यात् ॥ गृहम् । तात्स्थ्यात् गृहाः दाराः ।

**शिल्पिनि ष्वुन् ॥३।१।१४५॥**

[1]शिल्पिनि कर्तरि धातोः ष्वुन् स्यात् ॥ नृतिखनिरञ्जिभ्य एव । [2]नर्तकः । खनकः । असि अके अने घिनुणि च रञ्जेर्न्लोपो वाच्यः ॥ * रजकः । षित्वान्नर्तकी ।

**[3]गस्थकन् ॥३।१।१४६॥**

गायतेः [4]स्थकन् स्यात् शिल्पिनि ॥ गाथकः ।

**ण्युट् च ॥३।१।१४७॥**

गायनः । टित्वात् गायनी ।

---

गेहे । गृहमिति । 'ग्रहिज्या–' इति संप्रसारणम् । तात्स्थ्यादिति । एतेन गौणेपि प्रत्यया भवन्तीति आचष्टे । नृतीत्यादि । नृती गात्रविक्षेपे । खनु अवदारणे । रञ्ज रागे । षित्त्वादिति । षिद्गौरेति ङीष् ।

गः । कै गै रै शब्दे इत्यस्य कृतात्वस्यायं निर्देश इत्याह—गायतेरिति । ननु गामादाग्रहणेष्वविशेष इति गाङ् गतावित्यस्यापि ग्रहणं भाव्यम् । न । गाथक इति गायत्यर्थविषयमेव शिल्पिनः कर्तृत्वं प्रतीयते न गत्यर्थविषयम् । नकार आद्युदात्तार्थः ।

ण्युट् च । गायतेः ण्युडपि स्याच्छिल्पिनि कर्तरि । गायन इति । 'आतो युक्' । टित्त्वादिति । 'टिड्ढाणञ्—' इति ङीप् योगविभाग उत्तरार्थः ।

---

१. Before it—षो ङीबर्थः $B_2$. २. $D_2$ drops नर्तकः । खनकः ३. °स्छकन् $D_1$, P. ४. स्छकन् $D_1$, P.

**हश्च व्रीहिकालयोः ॥३।१।१४८॥**

हाको हाङश्च ण्युट् स्याद् व्रीहौ काले च अम्बु जहाति जिहीते वा हायनो व्रीहिः । भावा जिहीते वा हायनो[1] वर्षम्[2] ।

**प्रुसृल्वः समभिहारे वुन् ॥३।१।१४९॥**

प्वादेर्वुन् स्यात् साधुकारिणि कर्तरि ॥ सरकः । लवकः ।

**आशिषि च ॥३।१।१५०॥**

धातोर्वुन् स्यादाशिषि ॥ जीवतादिति जीवकः । आशीरके मनेरत एत्वं वाच्यम् ॥ * मेनका ।[4]

---

**हश्च** । ओहाक् त्यागे । हाङ् गतौ । अम्बु इति । ह व्रीहौ प्रवृत्तिनिमित्तं दर्शयति । **भावानिति** । संवत्स निमित्तम् ।

**प्रुसृ** । प्रुङ् गतौ । सृ गतौ । लूञ् छेदने । समाहारं कृत्वा निर्देशः । नुमागमस्तु सत्यपि क्लीबत्वे अनित्यत्वादागमशासनस्य । धातूनामनेकार्थत्वात् समभि साधुकारी उच्यते । अथवा शिल्पिनीत्यनुवर्तत इत साधुकारिणीति ।

**आशिषि** । अप्राप्तप्रार्थना आशीः । त गम्यमानायामित्यर्थः । **जीवतादिति** **जीवकः** इति । भूयादित्यर्थः । **जीवक** इति । 'आशिषि वुनश्च' इती

---

१. हायनं $D_2$, $D_4$. २. वर्षः $D_1$. ३. Before it—नन्दता $B_2$, $D_4$. ४. After this—स्त्रीत्वं लोकात् $D_2$, $D_4$. ५. तेन चेत्संज्ञा गम्यते इत्यर्थः । $Dc_3$.

**क्तिच्क्तौ च संज्ञायाम् ॥३।३।१७४॥**

धातोः क्तिच् क्तश्चस्यादाशिषि संज्ञायाम् ॥

**तितुत्रतथसिसुसरकसेषु च ॥७।२।९॥**

एषां दशानां कृत्प्रत्ययानामिण् न स्यात् ॥ भवतात् । भूतिः । देवा एनं देयासुः । देवदत्तः । [2] कौक्तिः क्तिचा बाधा मा भूदिति ।

**अनुनासिकस्य क्विझलोः क्ङिति ॥६।४।१५॥**

अनुनासिकान्तस्य धातोरुपधाया दीर्घः स्यात् क्वौ झलादौ क्ङिति च ॥ इति दीर्घे [3] प्राप्ते [4] अनुदात्तोपदेशेति अनुनासिकलोपे प्राप्ते ।

---

'क्तिच्—' इति चकारो 'न क्तिचि दीर्घश्च' इति विशेषणार्थः । प्रत्ययान्तेन चेत् संज्ञा गम्यत इत्यर्थः ।

तितुत्रेति । तीति क्तिन्क्तिचोर्ग्रहणम् । तु इति सितनिगमिमसिसच्याविधाञ्क्रुशिभ्यस्तुन्नित्यस्य । त्रेति 'दाम्नी–' इति ष्ट्रनः । सर्वधातुभ्यष्ट्रन्नित्यस्य च । तेति हसिमृग्रिण्वमिदमितमिलूपूधुर्विभ्यस्तन् इत्यस्य । न क्तस्य ग्रहणम् । 'ऊर्णोतेर्विभाषा' इत्यतो 'विभाषा' इत्यनुवृत्तेस्तस्याश्च व्यवस्थितविभाषात्वात् । थेति हनिकुषिनीरमिकाशिभ्यः क्थन् इत्यस्य ग्रहणम् । सीति प्लुषिशुषिकुषिभ्यः क्सिरित्यस्य । सु इति सुक् च इषेः इत्यस्य । सरेति । आस्तेः क्सरच् इत्यस्य । केति इण्भीकापाशल्यतिमर्चिभ्यः कन्नित्यस्य । सेति वृतृवदिहनिकमिकषियुमुचिभ्यः स इत्यस्य । देवदत्त इति । दाञः क्तप्रत्ययः । 'दोदद्घोः' इति ददादेशः । यन्तिरित्यादि । यमु उपरमे । रमु क्रीडायाम् । वनु बोधने [5] । तनु विस्तारे ।

---

१. Dropped $N_1$. २. कृत्क्तिः $N_1$. ३. दीर्घत्वे $N_1$. ४. प्रति $B_2$. ५. बोधे $Dc_3$, PC.

**न क्तिचि दीर्घश्च ॥६।४।३९॥**

क्तिचि परे अनिटां वनतितनोत्यादीनां दीर्घानुनासिकलो[1]
न स्तः ॥ यन्ति । रन्तिः[2] । वन्तिः । तन्तिः ।

**सनः क्तिचि लोपश्चास्यान्यतरस्याम्**
**॥६।४।४**

सनोतेः क्तिचि परे आकारोन्तादेशो नस्य लोपश्च
स्यात् ॥ सातिः । सतिः । सन्तिः ।

**कर्मण्यण् ॥३।२।१॥**

कर्मण्युपपदे धातोरण् प्रत्ययः स्यात् ॥ उपपदसमास[3]

---

**सनः** । अस्यग्रहणमनन्तरस्य क्तिचो मा भूत् व्यवहितस
सन एव लोपो यथा स्यादित्येवमर्थम् । स च लोपः सनो
अलोन्त्यपरिभाषया नकारस्यैव स्यादित्याह-नस्येति । सातिरि
षण दाने ।

**कर्माणि** । कर्मणीति न स्वरूपग्रहणम् । 'अशब्दसंज्ञा '
निषेधात् । नापि क्रियाग्रहणम् । क्रियावाचिन उपपदस्याभाव
तस्मात् 'कर्तुरीप्सिततमम्' इति पारिभाषिकमेव गृह्य
तच्च कर्म त्रिविधं निर्वर्त्यं विकार्यं प्राप्यं चेति ।
यदसदेवोत्पद्यते । विकार्यं तु यस्य सत एव विकारः क्रि
प्राप्यं तु यस्य नोत्पादो नापि विकारः किं तु क्रियासं
मात्रं क्रियते । तस्य त्रिविधस्यापि ग्रहणम्[4] । उपपदसमास
'तत्रोपपदम्' इत्युपपदसंज्ञायाम् 'उपपदम्—' इति समास इ

---

१. °दीनां च $B_2$, $N_1$. २. नन्तिः $D_2$, $D_4$. ३. उपपदमिति
$D_1$. ४. °पीह PC, $Dc_3$.

कुम्भं करोतीति कुम्भकारः। अघटं घटं करोतीति घटीकारः। आदित्यं पश्यतीत्यादावनभिधानान्न।[1]

**ह्वावामश्च ॥३।२।२॥**

एभ्यः कर्मण्युपपदेऽण् स्यात्। कापवादः। आतो युक्। स्वर्गह्वायः। तन्तुवायः। धान्यमायः।

**आतोऽनुपसर्गे कः ॥३।२।३॥**

आदन्तादनुपसर्गे कर्मण्युपपदे कः स्यान्नाण्॥ आतो लोपः। गोदः। पार्ष्णित्रम्।[2] अनुपसर्गे किम्। गोसंदायः।

---

**कुम्भकार** इति। 'अचोञ्णिति' इति वृद्धिः। **घटीकार** इति। 'अभूततद्भावे' इति च्विः। 'चुटू' इति च इत्। 'उपदेशेऽजनुनासिक—' इति इरित्। 'वेरपृक्तस्य' इति वलोपः। 'अस्य च्वौ' इतीत्वम्। **आदित्यं पश्यतीत्यादावनभिधानान्नेति**। अभिधानेसामर्थ्यादित्यर्थः। अत्र चैतद् द्वयं ज्ञातव्यम्। 'शीलिकामिभक्ष्याचरिभ्यो णः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्'। णे सति ङीप् न। मांसं शीलयतीति मांसशीलः। मांसशीला। मांसशब्दोन्तोदात्तः वृतुवदिहनिपाचिकमिषिभ्यः सः मनेर्दीर्घश्चेति सप्रत्ययान्तत्वात् प्रत्ययस्वरेण। मांसकामा। मांसभिक्षा। कल्याणाचारा।[3] कल्याणशब्दो मध्योदात्तो लघावन्ते द्वयोश्च बह्वषो गुरुरित्यनेन। 'ईक्षिक्षमिभ्यां च'। सुखप्रतीक्षा। बहुक्षमा।

**ह्वावाम** इति। ह्वेञ् स्पर्धायां शब्दे च। वेञ् तन्तुसन्ताने। माङ् माने। मेङ् प्रतिदाने।[4] **कापवाद** इति। '**आतोऽनुपसर्गे कः**' इति प्राप्तस्य। **पार्ष्णित्रमिति**। त्रैङ् पालने। **गोसंदाय** इति। अण्। आतो युक्।

---

१. After it—शीलिकामिभिक्षाचरिईक्षिक्षमिभ्यो ण इति वाच्यम्। मांसशीलः। मांसशीला। इत्यादि। $N_1$. २. $D_1$ drops it. ३. कल्याणाचारा। कल्याणचरा। PC. ४. प्रणिदाने PC, $Dc_3$.

**सुपि स्थः ॥३।२।४॥**

सुप्युपपदे तिष्ठतेः कः स्यात् ॥ समस्थः ।[१]

**अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्कङ्गु मञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः ॥८।३।९७॥**

एभ्यः परस्य स्थः सस्य षः स्यात् ॥[२] द्विष्ठः त्रिष्ठः । सुपीति योगविभागादन्यस्मादादन्तात् कः[४] ॥ द्वाभ्यां पिबतीति द्विपः । पादपः । भावेपि कार्यं तिष्ठतिग्रहणम् आखूनामुत्थानमाखूत्थं वर्तते । इत[५] ऊर्ध्वं सकर्मकेषु कर्मानुवृत्तिरन्यत्र सुपः ।

---

**अम्बाम्ब** । अम्बष्ठः । आम्बष्ठः । गोष्ठः । भूमिष्ठः सव्यष्ठः । अपष्ठः । द्विष्ठः । त्रिष्ठः । कुष्ठः । शेकुष्ठः । शङ्कुष्ठः अङ्गुष्ठः । मञ्जिष्ठः । पुञ्जिष्ठः । परमेष्ठः । बर्हिष्ठः । दिविष्ठः अग्निष्ठः । स्थास्थिन् स्थॄणामिति वक्तव्यम् । सव्येष्ठाः । परमेष्ठी सव्येष्ठा सारथिः । **सुपीति योगविभागादिति** । अत्र 'सुपि' इत्येको योगः । तत्र च 'आतः' इत्यनुवर्तते । ततश्च सुप्युप आदन्तेभ्यः कः प्रत्ययः स्यादित्यर्थः । द्वितीयः 'स्थः' इति किमर्थमिदमुच्यते यतः पूर्वेणैव सिद्धमित्याशङ्क्याह-**भावेपीति** आरम्भसामर्थ्यात् कर्तरि तावन्न । न चार्थान्तरमस्ति । तत्रानिर्दिष्ट प्रत्ययाः स्वार्थे भवन्तीति स्वार्थ एव स्यादिति । **आखूत्थं वर्तत** इति 'उदस्थाः स्तम्भोः पूर्वस्य' इति पूर्वसवर्णः । ननु आखूत्थमि

---

१. After it—नाण् $D_4$. २. After it—वनस्थः $N_1$, $D_2$, $D_4$, C, B ३. Before it—अम्बष्ठः $D_4$, $B_2$. ४. कः स्यात् C; कः is omitted $D_1$. ५. अत C. ६. आखूत्थो K. ( नपुंसकपाठस्तु प्रामादिकः K.)

**हरतेरनुद्यमनेच् ॥३।२।९॥**

कर्मणि हृञोच् स्यात् नोत्क्षेपणे ॥ अंशहरः । उत्क्षेपणे तु । भारहारः । शक्तिलाङ्गूलाङ्कुशयष्टितोमरघटघटीधनुःषु ग्रहः ॥ * शक्तिग्रहः इत्यादि । सूत्रग्रहोपि ।

**वयसि च ॥३।२।१०॥**

वयसि द्योत्ये कर्मणि हृञोच् स्यात् ॥ उद्यमनार्थमेतत् । कवचहरः कुमारः ।

**आङि ताच्छील्ये ॥३।२।११॥**

फलान्याहरति तच्छीलः फलाहरः । ताच्छील्ये किम् । भाराहारः ।

---

हरते । **नोत्क्षेपण इति** । उत्क्षेपणमधः स्थितस्य वस्तुन ऊर्ध्वं नयनम् । **अंशहर इति** । योंशं स्वीकरोति न तूत्क्षिपति । **शक्तीति** । अत्र प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति घट-ग्रहणेनैव घटीग्रहणे सिद्धे पुनर्घटीग्रहणं तदस्याः परिभाषाया अनित्यत्व-ज्ञापनार्थम् । तस्य तु प्रयोजनं 'दित्यदित्यादित्य—' इत्येतत् सूत्रे उक्तम् । **शक्तिग्रह इत्यादि** । आदिशब्देन लाङ्गूलग्रहः । अङ्कुशग्रहः । यष्टिग्रहः । तोमरग्रहः । घटग्रहः । घटीग्रहः । धनुर्ग्रहः । **सूत्रग्रहोपीति** । अयं च धार्यर्थे । यः सूत्रं धारयति स सूत्रग्रहः । यस्तु केवलं गृह्णाति न धारयति असौ सूत्रग्राह एव भवति ।

**वयसि** । कालकृता शरीरावस्था यौवनादिर्वयः । **उद्यमनार्थमिति** । अनुद्यमने पूर्वेणैव सिद्धत्वात् । **कवचहर इति** कवचोत्क्षेपसमर्थे वयसि वर्तते इत्यर्थः ।

**आङि** । ताच्छील्यं तत्स्वभावता । फलाहरणे स्वाभाविकी प्रवृत्तिरस्येत्यर्थः ।

अर्हः ॥३।२।१२॥

अस्मादच् ॥ पूजार्हः । पूजार्हा ।

स्तम्बकर्णयो रमिजपोः ॥३।२।१३॥

'हलदन्त—' इति ङेरलुक् ।[२] स्तम्बेरमो हस्ती कर्णेजपः सूचकः ॥[४]

---

अर्हः । पूजार्हा इति । अजन्तत्वात् टाप् । अणि हि ङी भाव्यम् ।

स्तम्ब । रमु क्रीडायाम् । जप जल्प व्यक्तायां वा आभ्यां स्तम्बकर्णयोरुपपदयोरच् स्यादित्यर्थः । रमेरकर्मकत्वात् न संभवत्येव । जपेश्च शब्दकर्मकत्वात् कर्मणः कर्म न भवती 'सुपि' इत्येतदिह संबध्यते । हस्तिसूचकयोरेवैतौ प्रयोगावित्या स्तम्बेरमो हस्तीत्यादि । व्याख्यातप्रायमेवेत्युपेक्षितं सूत्रं व्या यते—'शमि धातोः संज्ञायाम्' ॥३।२।१४॥ शम्युपपदे धातुम संज्ञायां विषयेच् स्यात् । शंकरः । शंभवः । शंवदः । धात्व धातुग्रहणं कृञो हेतुताच्छील्यानुलोम्येषु टप्रतिषेधार्थम् । शंकरा काचित् तच्छीला तत्संज्ञा च ।

---

१. $D_2$, $D_4$ omit it. २. After it—हस्तिसूचकयोरिति वाक्य $D_4$, $B_2$. ३. After सूचकः—अन्यत्र स्तम्बेरन्ता । कर्णेजपिता $D_2$, $D_4$, $B_2$. ४. After it the Sûtra—शमिधातोः सं ॥३।२।१४॥ शम्युपपदे धातुमात्रात् संज्ञायामच् स्यात् । शंकरः । शंवदः । धातोरित्यनुवृत्तौ शमिधातुग्रहणं कृञो हेत्वादिषु प्रतिषेधार्थ $D_3$, $B_1$, P, C, N (°त्यनुवृत्तेः P.; शमि [from शमिधातु°] dr $D_1$; after प्रतिषेधार्थम् P has शङ्करा परिव्राजिका). ५. ि Pc. $Dc_3$. ६. °त्युपेक्षितमाचार्यवर्यैस्तदस्माभिः व्याख्यायते अस्त्रपाठश Pc, $Dc_3$.

अधिकरणे शेतेः ॥३।२।१५॥

खे शेते खशयः[1] ॥ पार्श्वादौ च ॥ * पार्श्वाभ्यां शेते पार्श्वशयः । उदरशयः । पृष्ठशयः । उत्तानः शेते उत्तानशयः ॥ गिरौ शेतेर्डः ॥ * गिरिशः ।

चरेष्टः ॥३।२।१६॥

अधिकरणे चरेष्टः स्यात् ॥ कुरुचरी[2] ।

भिक्षासेनादायेषु च ॥३।२।१७॥

एष्वपि चरेष्टः[3] [4]। भिक्षां चरति भिक्षाचरः । इत्यादि ।

---

अधिकरणे । अधिकरणे उपपदे शेतेरच् स्यात् । खशय इति । उपपदसमासः । पार्श्वादौ चेति । अनधिकरणार्थम् । पार्श्वाभ्यामिति । तृतीयान्तमुपपदमिति दर्शयति । उत्तानः शेते इत्य नेनविग्रहेण उत्तानादिषु कर्तृषु[6] उपपदेषु इति दर्शयति । दिग्धसहपूर्वाच्चेत्यपि वक्तव्यम् । दिग्धेन सह शेते इति दिग्धसहशयः । गिरौ शेते इति । छन्दसीति ज्ञातव्यम् ।

चरेः । प्रत्ययान्तरकरणं ङीबर्थमिति दर्शयति—कुरुचरीति ।

भिक्षा । अनधिकरणार्थोऽयमारम्भ इति दर्शयति—भिक्षां चरतीति[5] । आदिशब्देन सेनाचरः । आदायचरः । आदायेति ल्यबन्तमेतत् । अस्य च कर्मसापेक्षत्वेपि वचनसामर्थ्यात् प्रत्ययः ।

---

१. $D_1$ drops खे शेते; C has खे शेते इति. २. कुरुचरः । कुरुचरी $B_2$, $D_4$. ३. Before it—अनधिकरणार्थोऽयमारम्भः । N. ४. After it—स्यात् $D_2$, $D_4$, $B_2$. ५. चरतीति $D_2$. ६. कर्तृषु dropped PC, $Dc_3$.

पुरोऽग्रतोऽग्रेषु सर्तेः ॥३।२।१८॥

एषु सरतेष्टः स्यात् ॥ पुरःसरः । अग्रतःसरः । अग्रेसरः

कृञो हेतुताच्छील्यानुलोम्येषु ॥३।२।२०॥

कर्मणि कृञष्टः स्यात् हेत्वाद्यर्थे ॥

अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ॥८।३।४६॥

कादौ परे अतः परस्य विसर्गस्य सः स्यात् समासे

---

पुरः । पुराशब्दात् 'पूर्वाधरावराणामसि—' इत्यासिप्रत्ययान्तो व्युत्पादितः । अग्रतःशब्दोपि 'आद्यादिभ्य उपसंख्यानम्' इति तसिप्रत्ययान्तः । अग्रेशब्दस्यैदन्तत्वं निपात्यते अग्रेसरार्थम् । ननु सप्तम्या अलुकापि सिध्यति । सत्यम् । यदा सप्तम्यन्तमुपपदं तदा सिध्यति । यदा द्वितीयान्तं तृतीयान्तं वोपपदं तदाग्रेसर इति सिध्यतीति एदन्तत्वं निपात्यते । स्पष्टत्वात् त्यक्तं सूत्रमेकम्—' पूर्वे कर्तरि ' ॥३।२।१९॥ पूर्वशब्दे कर्तृवाचिन्युपपदे सर्तेष्टः स्यात् । पूर्वः सरतीति पूर्वसरः ।[1]

कृञः । हेतुरैकान्तिकं कारणम् । ताच्छील्यं तत्स्वभावता । आनुलोम्यमनुलोमता ।

अतः । यशस्कारः[4] । यशस्कामः । अयस्कंसः[5] । अयस्कुम्भः । अयस्कुम्भी । अयस्पात्रम् । अयस्कुशा । अयस्कर्णी । अनव्ययस्य किम् । पुनःकारः । समासे एव । यशः करोति । अनुत्तरपद

---

१. Before it—पूर्वे कर्तरि ॥ पूर्वशब्दे कर्तृवाचिनि सरतेष्टः । पूर्वः सरः पूर्वसरः । कर्तरि किम् । पूर्वं देशं सरति । पूर्वसारः । N. २. 'पूर्वे कर्तरि ' सूत्रं स्पष्टत्वात् त्यक्तं व्याख्यायते PC. Do has एतच &c. as in after the Sûtra. ३. After; it—कर्तरीति किम् । पूर्वदेशं पूर्वसारः PC, Do3. ४. यशस्करः PC. ५. अयस्कामः Do1.

त्वव्ययस्य ॥ ४[1] कापवादः । यशस्करी विद्या । श्राद्धकरः[2] ।
वचनकरः ।[3]

**दिवाविभानिशाप्रभाभास्कारान्तानन्तादि-बहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्या-जङ्घाबाह्वहर्यत्तद्धनुररुष्षु ॥३।२।२१॥**

एषु कृञष्टः स्यादहेत्वादावपि ॥ दिवाकरः । भास्करः[4] ।
निपातनात् सः । भास्करः । कारकरः । इत्यादि ॥

---

स्येत्येव । परमपयःकामः । यशस्करी विद्येति हेतौ उदाहरणम् ।
श्राद्धकर इति ताच्छील्ये । वचनकर इति आनुलोम्ये ।

दिवा । इत्यादीति । आदिशब्देन विभाकरः । निशाकरः[5] ।
प्रभाकरः । अन्तकरः । अनन्तकरः । कस्मिंश्चिदुपपदविधौ तदन्त-
विधिर्नास्तीति अन्तानन्तयोर्ग्रहणम् । न च नान्तकरोनन्तकर इति
समासः । अत्रोत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वमिष्टं तद्भङ्गप्रसङ्गात् ।
नञ्स्वरेणाद्युदात्तत्वापातात् । आदिकरः । बहुकरः । बहुशब्दोयं
विपुलवाची । संख्याया वक्ष्यमाणत्वात् । नान्दीकरः । किंकरः ।
[6]लिपिकरः ।[7] लिबिकरः । बलिकरः[8] । भक्तिकरः । कर्तृकरः ।
चित्रकरः । क्षेत्रकरः । संख्याकरः । जङ्घाकरः । बाहुकरः ।
अहस्करः । नकारस्य रेफस्य विसर्गः । तस्य 'अतः कृकमि—'

---

१. ४ क ४ पापवादः P. २. After it—श्रोत्रियः $B_2$. ३. After it—पूर्वे कर्तरि कर्तृवाचिन्यस्मिन् सरतेष्टः स्यात् । पूर्वः सरति पूर्वसरः । कर्तरि किम् । पूर्वं देशं सरति पूर्वसारः । C; $D_1$ has it also—(कर्तरि वाच्ये in $D_1$ for कर्तृवाचिनि). ४. भास्कर इत्यत्र $N_1$. ५. निशाकरः । $D_1$ ; कारस्कारः $B_2$. ६. om । $Dc_1$, ७. om लिविकरः । $Dc_1$. ८. om—बलिकरः $Dc_1$

किंयत्तद्बहुष्वज्वा ॥* किंकरा स्त्री । इत्यादि

**कर्मणि भृतौ ॥३।२।२२॥**

कर्मशब्दे कृञष्टः स्याद् भृतौ ॥
कर्मकारोन्यः ।

**न शब्दश्लोककलहगाथावैरच**

एषु कृञष्टो न हेत्वादौ ॥ शब्दकारः

**स्तम्बशकृतोरिन् ॥३।२।२४॥**

एतयोः कृञ इन् स्यात् ॥ न इत्
शकृत्करिर्वत्सः ।

---

इति सः । यत्करः । तत्करः । धनुष्करः । व
स्त्रीति । अजन्तत्वाट्टाप् । आदिना । यत्करा ।

**कर्मणि** । कर्मानुवृत्तौ पुनः कर्मग
मित्यभिप्रेत्याह—**कर्मशब्द** इति । भृतिर्वेतनं

**न शब्द** । 'कृञो हेतुताच्छील्य—' इति
आदिना । श्लोककारादि ।

**स्तम्ब** । नकारो 'ञ्नित्यादिर्नित्यम्' इत्य
न इदिति । व्रीहिवत्सयोरेव वाच्ययोर्भवतीत
हिरित्यादि ।

---

१. °षु कृञोऽज्वा C. २. कर्मशब्दोपपदे D1,
४. Before it—व्रीहिवत्सयोरितिवाच्यम् । N.

हरतेर्दृतिनाथयोः पशौ ॥३।२।२५॥

हृञ एतयोरिन् स्यात् पशौ कर्तरि ॥ दृतिहरिः पशुः । ाथहरिः ।

फलेग्रहिरात्मम्भरिश्च ॥३।२।२६॥

एतौ निपात्यौ ॥ चात् कुक्षिम्भरिः । उदरम्भरिः ॥ ेवानाप्नोति देवापिः । वातापिः । रजोग्रहिः । मेलग्रहिरिति ाचित् ।

एजेः खश् ॥३।२।२८॥

कर्मणि ण्यन्तादेजेः खश् स्यात् ॥

अरुर्द्विषदजन्तस्य मुम् ॥६।३।६७॥

अरुषो द्विषतोजन्तस्य च मुमागमः स्यात् खिदन्ते उत्तर-

---

हरते । 'पशौ' इति प्रत्ययार्थस्य कर्तुर्विशेषणमित्याह—शौ कर्तरीति ।

फले । फलानि गृह्णाति आत्मानं बिभर्तीति विग्रहः । ृथमसेवमानः कुक्षिम्भरिः । उदरम्भरिः । देवानित्यादि । तथोक्तं र्गिण । 'फलेमलरजस्सु ग्रहः देववातयोरापेः' इति ।

एजेः । एजृ कम्पने । खकारो मुमर्थः । शकारः ार्वधातुकसंज्ञार्थः ।

अरु । अन्तग्रहणेन कार्यान्तरस्यान्तेवसाने मुम् कर्तव्य त्येषोर्थः सूच्यते । अतो ह्रस्वत्वे कृते पश्चान्मुम् स्यात् ।

---

१. निपात्यैते $D_1$. २. Before it—देववातयोरापेः N. ३. मूलेग्रहिः C; ालग्रहिः । रजोग्रहिरिति केचित् । N. ४. Dropped in $C_1$, $D_1$.

पदे न त्वव्ययस्य ॥ शित्त्वाच्छबादि ॥ जनमेजय
शुनीतिलशर्धेध्वजधेट्तुदजहातिभ्यः खश्[2] ॥ * वातमज

**खित्यनव्ययस्य ॥६।३।६६॥**

खिदन्ते परे पूर्वपदस्य ह्रस्वः स्यात्[3] । ततो
शुनिन्धयः । तिलन्तुदः । शर्द्धञ्जहः[4] ।

**नासिकास्तनयोर्ध्माधेटोः ॥३।२।२९॥**

स्तने धेटः नासिकायां ध्माधेटोः खश् स्यात
न्धयः । नासिकन्धमः । नासिकन्धयः[5] । धेटष्टित्वात् स

---

शित्त्वादिति । खशः शित्त्वात् सार्वधातुकसंज्ञायां शप्
इत्यर्थः । जनमेजय इति ।

वातेति । अज गतौ । धेट् पाने । तुद व्यथायाम्
त्यागे । वातमजतीति वातमजः । शप् । मुम् ।

खिति । उत्तरपदाधिकारेपीह तदन्तग्रहणस्यान
निषेधो ज्ञापक इत्यभिप्रेत्याह—खिदन्त इति । मुमा ह्रस्
अन्यथा ह्रस्वविधानमनर्थकं स्यादित्यभिप्रेत्याह—ततो
शुनीं धयतीति तिलांस्तुदतीति शर्धं जहातीति विग्रहः

नासिका । अल्पाच्तरस्यापूर्वनिपाताल्लक्षणव्यभिचार
यथासंख्यलक्षणस्याप्यत्र व्यभिचार इति चेतसि
स्तने धेटः नासिकायां ध्माधेटोरिति । नासिकंधम इति ।
इति धमादेशः । 'खिति—' इति ह्रस्वः । 'अरुर्द्विषत
मुम् । धेट इति । 'टिड्ढाणञ्—' इति ङीबिति भावः

---

१. °च्छबादिः D₁. २. After it—वाच्यः C. ३. A
नत्वव्ययस्य। D₁, B₂. ४. गर्धंजहः B₂, D₄ (शर्धंजहः also not
५. C drops it.

नाडीमुष्ट्योश्च ॥३।२।३०॥

एतयोर्ध्माधेटोः खश् स्यात् ॥ नाडिन्धमः । नाडिन्धयः । मुष्टिन्धमः । मुष्टिन्धयः । चात् घटिन्धमः । घटिन्धयः । खरिन्धमः । खरिन्धयः । वातन्धमः । वातन्धयः । मुञ्जकूलास्यपुष्पेषु धेटः खशिति केचित् । मुञ्जन्धयः । इत्यादि ॥

उदि कूले रुजिवहोः ॥३।२।३१॥

उत्पूर्वाभ्यां रुजिवहाभ्यां कूले कर्मणि खश् स्यात् ॥ कूलमुद्रुजः [4]। कूलमुद्वहः ॥

वहाभ्रे लिहः ॥३।२।३२॥

वहंलिहः । अभ्रंलिहः । बाहुंलिहोपीति केचित् । अपित्सार्वधातुकत्वान्न गुणः ।

---

नाडी । अत्रापि घ्यन्तस्यापूर्वनिपातात् संख्यातानुदेशो नेत्यभिप्रेत्योदाहरति—नाडिंधम इत्यादि । मुञ्जेत्यादि । तथोक्तं दुर्गेण 'शुनीस्तनमुञ्जकूलास्यपुष्पे धेट' इति ।

उदि । रुजो भङ्गे । वह प्रापणे । कूलमुद्रुज इति । तुदादित्वाद्गुणाभावः ।

वहा । वहाभ्रयोः कर्मणोरुपपदयोर्लिह आस्वादने अस्मात् खश् स्यात् । वहं लेढि अभ्रं लेढि इति विग्रहौ । अपित्सार्वेति । खशः 'सार्वधातुकमपित्' इति ङित्त्वाद्गुणाभावः । 'क्ङिति च' इत्यनेनेत्यर्थः ।

---

१. Dropped N. २. खारिन्धमः । खारिन्धयः $D_2$, $B_2$, $D_4$ ३. Dropped C. ४. After it—पूः N. ५. ङित्त्वात् क्ङिति च इति गुणनिषेध इत्यर्थः $Dc_3$, PC.

**परिमाणे पचः ॥३।२।३३॥**

परिमाणे प्रस्थादौ[1] पचः[2] खश् स्यात् ॥ प्रस्थम्पचा स्थाल

**मितनखे च ॥३।२।३४॥**

एतयोः[4] पचः खश् स्यात् ॥ मितम्पचः । नखम्पच

**विध्वरुषोस्तुदः ॥३।२।३५॥**

विधुन्तुदः । संयोगान्तलोपः[6] । अरुन्तुदः ।

**असूर्यललाटयोर्दृशितपोः ॥३।२।३६॥**

एतयोः कर्मणोः क्रमात् दृशितपोः खश् स्यात् ॥ अ
मित्यसमर्थसमासः । दृशिना नञः सम्बन्धात् । सूर्यं[9] न
न्त्यसूर्यम्पश्याः राजदाराः[8] । ललाटन्तपः सूर्यः ।

---

परि । अत्र प्रस्थादिशब्दः प्रस्थादिप्रमितेषु यवादिषु व
परिमाणविशेषस्य काष्ठादिमयस्य पाकस्य विक्लित्तिलक्षणस्यासंभ

मित । अपरिमाणार्थ आरम्भः ।

विध्वरुषोः । विधु अरुस् एतयोः कर्मणोरुपपदयोस्तुदः
संयोगान्तलोप इति । अरुस् तुद इति स्थिते 'अरुर्द्विष
इति मुमि संयोगान्तस्य सस्य लोप इत्यर्थः । 'मोनुस्वार
'अनुस्वारस्य ययि परसवर्णः' ।

असूर्य । असूर्यम्पश्या इति । 'पाघ्राध्मा—' इति पश्या
एवं गुप्ता दारा यदपरिहार्यं सूर्यमपि न पश्यन्तीत्यर्थः ।

---

१. After it—च C. २. पचेः D₂, P. ३. Dropped B₂. D₂, D₄. ५. Dropped in D₂. ६. संयोगान्तस्य C, P. ७. N. ८. दाराः for राजदाराः C, D₁, N. ९. अनयोः Dc₃, Pc.

**उग्रम्पश्येरम्मदपाणिन्धमाश्च ॥३।२।३७॥**

एते निपात्याः । उग्रम्पश्यः । इरया [1]माद्यति इरम्मदः । [3]पाणयो [2]ध्मायन्ते पाणिन्धमोऽध्वा । शुनिन्धमः । [4]करन्धम इत्यपि कचित् ।

**प्रियवशे वदः खच् ॥३।२।३८॥**

एतयो[5]र्वदेः खच् स्यात् ॥ प्रियंवदः । वशंवदः ॥ गमेः सुपि वाच्यः । भुजङ्गमः । विहायसो विह च ॥* विहङ्गमः । [6]खच्च डिद्वाच्यः । विहङ्गः ।[7] भुजङ्गः ।

**द्विषत्परयोस्तापेः ॥३।२।३९॥**

एतयोर्ण्यन्तात् तपेः खच् स्यात् ॥ णिलोपः ।

---

**उग्रम्** । उग्रम्पश्य इत्यत्र कर्मण्यणि प्राप्ते इरम्मद इत्यत्र पचाद्यौ पाणिन्धम इत्यत्राधिकरणे ल्युटि खश् निपात्यते । इरया [8]माद्यतीति । इरया अम्भसा माद्यतीतीरम्मदो मेघज्योतिः । अविन्धनत्वात् ।

**प्रिय** । खकारो [9]मुमर्थः । चकारः ‘खचि’ इति विशेषणार्थः । प्रत्ययान्तरकरणमुत्तरार्थम् । **भुजङ्गम** इति । भुजेन कौटिल्येन गच्छति । **विहङ्गम** इति । विहायसा आकाशेन गच्छति । **खच्च डिद्वाच्य** इति । ‘गमेः सुपि’ इत्यस्मात् भेदेन पाठो डित्त्वस्यानित्यत्वज्ञापनार्थः । अन्यथा विहङ्गम इति न स्यात् ।

**द्विषत्** । तप संतापे । भ्वादिः । तप दाहे । चुरादिः । द्वयोरपि ग्रहः । ण्यन्तावस्थायां विशेषाभावात् । **णिलोप** इति । ‘णेरनिटि’ इति ।

---

१. माद्यतीति $D_4$. २. ध्मायन्ते इति $D_4$. ३. Before it—अस्मान्निति $D_2$. ४. करन्धमः । काकिन्धमः । इति केचित् $D_2$; करन्धमः । काकिन्धमः । काटिन्धमः । इति केचित् $B_2$, $D_4$. ५. °वदेः $D_1$. ६. खज्वा $D_1$. ७. Before it—डित्त्वात् टिलोपः $B_2$. ८. माद्यति स्फुरतीति $Do_3$. ९. मुं[illegible] यर्थः $Dc_1$.

खचि ह्रस्वः ॥६।४।९४॥

खच्परे णावुपधाया ह्रस्वः स्यात् ॥ द्वि
तापयति द्विषन्तपः । परन्तपः । द्विषत्परेति द्वितका
न । द्विषतीतापः ।

वाचि यमो व्रते ॥३।२।४०॥

वाक्शब्दे यमेः खच् स्यात् व्रते ॥

वाचंयमपुरन्दरौ च ॥६।३।६९॥

सुमर्थमेतौ खचि निपात्यौ ॥ वाचंयमो मौन

पूः सर्वयोर्दारिसहोः ॥३।२।४१॥

पुरि दारेः सर्वशब्दे सहेश्च खच् स्यात् ॥
सर्वंसहः ।

भगे च दारेः ॥* भगन्दरः ।

---

खचि । 'मितां ह्रस्वः' इत्यतो मण्डूकप्लुतिन्याये
ह्रस्वे ह्रस्वग्रहो विस्पष्टार्थः । द्विषत्परेतीति । 'द्विष
सूत्रे द्वौ तकारावुच्येते । तयोरेको द्विषच्छब्दस्यावय
विशेषणार्थः । द्विषच्छब्दे तकारान्ते उपपदे इति । ते
अन्यथा प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणा
स्यादित्यर्थः । द्विषतीताप इति । कर्मण्यण् ।

वाचि । व्रतमिति शास्त्रीयो नियमः ।

वाचं । न च वाच्यं प्रत्ययो निपातनादेव
पचाद्यचा नियमे सिद्धे निपातस्यासंभवात् । एवं च
उपपदसमासो न स्यात् । तस्मात् प्रत्ययश्च निपातनं च
दारीति । दॄ विदारणे । अस्य णिचा निर्देशः । षह म
इति । 'खचि' इति ह्रस्वः । 'वाचंयम—' इति मुम

---

१. Dropped N₁. २. After it—व्रते किम् । वाग्यामः ।

**सर्वकूलाभ्रकरीषेषु कषः ॥३।२।४२॥**

एषु कषः खच् स्यात् ॥ सर्वङ्कषः । इत्यादि ।

**मेघर्तिभयेषु कृञः ॥३।२।४३॥**

एषु कृञः खच् स्यात् ॥ मेघङ्करः । इत्यादि ।

अभयादौ च ॥ *अभयङ्करः ।[1]

**क्षेमप्रियमद्रेण् च ॥३।२।४४॥**

एषु कृञोण् स्यात् खच् च ॥ क्षेमकारः । क्षेमङ्करः[2] इत्यादि । अणुक्तेर्हेत्वादौ टो न ।

**आशिते भुवः करणभावयोः ॥३।२।४५॥**

आशिते सुपि भवतेः खच् स्यात्[3] करणे भावे चार्थे । आशितो भवत्यनेन आशितम्भव ओदनः । आशितम्भवो[4] वर्तते ।

---

सर्व । कष हिंसार्थः । आदिना कूलङ्कषा नदी । अभ्रङ्कषा वायुः । करीषङ्कषा वात्या ।

मेघ । अपवादत्वादणं बाधते । हेत्वादिविवक्षायां परत्वात् टो भवति । आदिना ऋतिङ्करः । भयङ्करः । अभयादौ चेत्यादिग्रहण तदन्तविधिं सूचयति ।

क्षेम । ननु वेति खचि विकल्पिते पक्षेण् सिद्धः किमर्थं वाग्रहणं परित्यज्याण्ग्रहणं कृतमित्याशङ्क्याह—अणुक्तेरिति ।

आशिते । अत्र 'सुपि' इत्युपतिष्ठते न 'कर्मणि' इति । भवतेरकर्मकत्वादित्यभिप्रेत्याह—आशिते सुपीति । ल्युट्घञोरपवादोयम् वासरूपविधानाद् ल्युड् भवत्येव । आशितं भवति आशितम्भवनम्

---

१. कषः $D_2$. २. After it—इत्यादि N. ३. $D_2$, $B_2$ drop क्षेमङ्करः ४. $D_2$ drops it. ५. °म्भवं P, C, $N_1$.

**संज्ञायां भृतॄवृजिधारिसहितपिदमः ॥३।२।४६**

एभ्यः सुपि खच् स्यान्नाम्नि ॥ विश्वम्भरः । रथन्तरं साम । पतिंवरा । धनञ्जयः । वसुन्धरा । शत्रुंसहः । शत्रुन्तपः अरिन्दमः ।[२]

**गमश्च ॥३।२।४७॥**[३]

गमः[४] खच् स्यान्नाम्नि ॥ सुतङ्गमः ।

**अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः॥३।२।४८**

[५]एषु गमेर्डः स्यात् । डित्त्वकरणसामर्थ्यात् टिलोपः अन्तगः । इत्यादि । सर्वत्रपन्नयोश्च ॥* सर्वत्रगः । पन्नगः [६]उरसो लोपश्च ॥* उरसा ग[७]च्छति उरगः । उरङ्गमोपीति केचित् ।

---

**संज्ञायाम्** । यथायोगं कर्मणि सुपीति संबध्यते । **विश्वम्भर** इति विश्वं बिभर्ति । रथेन तरति । पतिं वृणोति । धनं जयति । वसु धारयति । शत्रुं सहते । शत्रुं तपति । अरिं दाम्यतीति यथायथं विग्रहाः

**गमः** । योगविभागो गमेरेवोत्तरानुवृत्त्यर्थः ।

**अन्ता** । ननु डित्करणेप्यभत्वात् टिलोपो न स्यादित्याशङ्क्याह डित्त्वकरणसामर्थ्यादिति । आदिना अत्यन्तगादि । **पन्नग** इति पद्भ्यां न गच्छति । [८]उरङ्गमोपीति । तथा च कौमारे वदः खप्रिय—वशयोरित्यनुवर्तमाने 'उरोविहायसोरविहौ वा' इत्युक्तम् ।

---

१. After it—शत्रुञ्जयः $D_4$. २. After it—संज्ञायां किम् । कुटुम्बभारः। ३. गमेश्च $D_2$. ४. गमेः $D_3$. ५. Before it—संज्ञायामिति नानुवर्तते । N. ६. उरसोन्तलोपश्च $D_1$; उरसः सलोपश्च $D_2$. ७. गच्छतीति $D_2$. ८. From उरङ्गमो°...to इत्युक्तम् dropped in PC., $Dc_3$; PC. has आदिना अन्तङ्गेति । विहङ्गत्यादि । $Dc_3$ has विहगेत्यादि ।

सुदुरोरधिकरणे ॥* सुखेन गम्यतेऽत्र[1] सुगः । दुःखेन गम्यतेऽत्र दुर्गः[2] ॥ निरो[3] देशे ॥* निर्गो देशः । अन्यत्रापि दृश्यते ॥* ग्रामगः[4] । विहगतुरगभुजगपतगप्लवगादयोऽप्येवं[5] ज्ञेयाः ॥

**आशिषि हनः ॥३।२।४९॥**

कर्मणि हन्तेर्डः स्यादाशिषि ॥ शत्रुं वध्यात् शत्रुहः । दारावाहनोणन्त्यस्य च टः संज्ञायाम् ॥*[6] दारावाङ्पूर्वाद्धन्तेरण् प्रत्ययः स्यादन्त्यस्य च टो नाम्नि ॥ (दार्वाहन्तीति दार्वाघाटः ।) कर्मणि समि च ॥* कर्मण्युपपदे संपूर्वस्य हन्तेरण्प्रत्ययः स्यात् अन्त्यस्य च टो वा । वर्णान् संहन्तीति वर्णसंघाटः । वर्णसंघातः ।

---

विहगेत्यादि । विहायसा गच्छतीति विहगः । विहायसो विह च । तुरया वेगेन गच्छतीति तुरगः । भुजेन कौटिल्येन गच्छतीति भुजगः । पतेन गच्छतीति पतगः । प्लव उत्पतनं तेन गच्छति प्लवगः । आदिना प्रवगादयः ।

आशिषि । अप्रसिद्धत्वात् तज्जनितशब्दानामुपेक्षितं वक्तव्यत्रयं व्याख्यायते । 'दारावाहनोणन्त्यस्य च टः संज्ञायाम्' । चारौ वा टः । दार्वाघाटः । चार्वाघाटः । चार्वाघातः । 'कर्मणि समि च' ॥ कर्मणि संपूर्वाद्धन्तेरण् वा च टोन्त्यस्य । वर्णसंघाटः । वर्णसंघातः ।

---

१. अस्मिन् for अत्र $D_2$, $B_2$. २. दुःखेन गम्यतेऽत्र–Dropped $B_2$, N, $D_4$. ३. निसो N. ४. Before it—गुरुतल्पगः N. ५. विहगः । तुरगः । भुजगः । पतगः । प्रवगप्लवगा° C; विहगः । तुरगः । भुजगः । पतगः । प्लवगा° $D_2$, $D_4$. ६. P, $B_2$, $N_1$ drop from दारा° to वर्णसंघातः ७. दाराशब्दे आङ्पूर्वा° $D_2$. ८. पतन् गच्छति पतङ्गः $Do_3$; पतन् गच्छति पतगः PC. ९. After —दाराद्युपपदे आङ्पूर्वाद्धन्तेरण् वक्तव्यः अन्त्यस्य च टो वक्तव्यः । दार्वाघाटः । दाराद्युपपदे आङ्पूर्वाद्धन्तेरण् अन्त्यस्य च वा टः । चार्वाघाटः &c. PC.

**अपे क्लेशतमसोः ॥३।२।५०॥**

एनयोरपपूर्वाद्धन्तेर्डः स्यात् ॥ क्लेशापहः । तमोपहः ॥

**लक्षणे जायापत्योष्टक् ॥३।२।५२॥**

अनयोर्हन्तेष्टक् स्याल्लक्षणे द्योत्ये ॥ जायाघ्नो ना । पतिघ्नी स्त्री ।

---

अपे । अनाशीरर्थ आरम्भः । स्पष्टत्वात् त्यक्तं सूत्र¹सङ्गाद्व्याख्यायते—'कुमारशीर्षयोर्णिनिः' ॥३।२।५१॥ कुमार-शीर्षयोरुपपदयोर्हन्तेर्णिनिः स्यात् । निपातनाच्छिरसः³ शीर्षभावः । कुमारघाती । शीर्षघाती ।

लक्षणे । जायाघ्न इति । कित्वात् 'गमहन—' इत्यादिनोपधा-लोपः । 'हो हन्तेः—' इति कुत्वम् । पतिघ्नीति । टित्वात् ङीप् ।

---

१. After this the Sûtra—'कुमारशीर्षयोर्णिनिः' ॥३।२।५१॥—एतयोरुप-पदयोर्हन्तेर्णिनिः स्यात् ॥ कुमारघाती । शीर्षघाती । निपातनात् शिरसः शीर्षभावः $D_1$, $D_3$, $B_1$, $C_1$, N ($D_1$ drops the Vritti, and has कुमारघाती and शीर्षघाती after शीर्षभावः; After शीर्षभावः N has—दारावाहनोणन्तस्य च टः संज्ञायाम् ॥ दारौ उपपदे सति आङ्पूर्वाद्धन्तेरण् व्यक्तव्यः । अन्तस्य च टो वक्तव्यः । दारौ आहन्ति दार्वाघाटः । चारौ वान्तस्य च टः । आङ्पूर्वाद्धन्तेश्च रुशब्दे उपपदे अण् स्यात् अन्तस्य च टो वा । चार्वाघाटः । चार्वाघातः । कर्मणि सामि च ॥ कर्मण्युपपदे संपूर्वाद्धन्तेरण् स्यात् वा च टोन्त्यस्य । वर्णान् संहन्ति वर्णसंघातः । वर्णसंघाटः. २. This is given after the Sûtra कुमार and is as under:—स्पष्टत्वात् पूर्वसूत्रव्याख्यानेनैव व्याख्यातत्वाचोपेक्षितं सूत्रं व्याख्यायते $Dc_3$; PC omits from स्पष्ट° to व्याख्यायते. ३. निपातान्छि° $Dc_3$.

## अमनुष्यकर्तृके च ॥३।२।५३॥

कर्मणि हन्तेष्टक् स्यात् अमनुष्यकर्तृकेर्थे ॥ पित्तघ्नं घृतम् ।[1] मनुष्ये तु आखुघातः शूद्रः ।[2] बाहुल्याच्चोरघातं हस्ती ।[2]

## ( शक्तौ हस्तिकपाटयोः ॥३।२।५४॥

[4]एतयोरुपपदयोर्हन्तेष्टक् स्यात् शक्तौ गम्यमानायाम् [5]मनुष्यकर्तृकार्थमारम्भः ।[6] हस्तिघ्नः । कपाटघ्नः । )

## पाणिघताडघौ शिल्पिनि ॥३।२।५५॥

[7]एतौ निपात्यौ शिल्पिनि ॥ राजघश्च ॥ * [8]राजानं हन्ति राजघः ।[9]

---

अम । बाहुल्यादिति । 'कृत्यल्युटो बहुलम्' इति ।

[10]स्पष्टत्वात् त्यक्तमेकम्—' शक्तौ हस्तिकपाटयोः ' ॥३।२।५४। हस्तिकपाटयोः कर्मणोरुपपदयोर्हन्तेष्टक् स्यात् शक्तौ गम्यायाम् मनुष्यकर्तृकार्थं आरम्भः । हस्तिघ्नः । कपाटघ्नः । यस्तु स्वः शक्तः स उच्यते । यस्तूपायान्तरेण हन्ति हस्तिघात एव सः ।

पाणि । टक् घत्वं टिलोपश्च निपात्यते । शिल्पिनि किम् । पाणिघातः

---

१. After it—वातघ्नं तैलम् $D_2$, $B_2$, $D_4$. २. $D_2$, $B_2$, $D_4$ drop बाहु...हस्ती. ३. The Sûtra and its Vritti are omitted in P, C, N. ४. D omits एतयो :...गम्यमानायाम्. ५. °र्थमेतत् $D_2$ $D_4$, $B_2$. ६. हस्तिनं हन् समर्थो हस्तिघ्नो ना । कपाटघ्नः । शक्तौ किम् । विषेण हास्तिनं हन्ति हस्तिघात बाहुल्याचौरघातो हस्ती $D_2$, $D_4$, $B_2$ (After °चौरघातो हस्ती $B_2$ has- ब्रह्मवृत्रशत्रुकृतादिषु च टक् । ब्रह्मघ्नः) ७. Before it—ब्रह्मवृत्रशत्रुकृतादि च टक् । N. ८. राज्ञो $D_2$, $B_2$. ९. After it—कुमारशीर्षयोर्णिनिः कुमारघाती $B_2$, $D_1$. १०. This is after the Sûtra as follows:- एतदपि स्पष्टत्वादुपेक्षितम् PC., $Dc_3$.

आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थे-
ष्वच्वौ कृञः करणे ख्युन् ॥३।२।५६॥

एषु च्व्यर्थेष्वच्व्यन्तेषु कृञः करणेर्थे ख्युन् स्यात् ॥
अनाढ्यमाढ्यं कुर्वन्त्यनेन आढ्यंकरणम्। सुभगंकरणम्। स्थूलं-
करणम्। प्रियंकरणम्। अच्वौ किम्। आढ्यीकुर्वन्त्यनेन।
प्रतिषेधसामर्थ्याल्ल्युडपि न। न ह्यत्र ख्युन्ल्युटो रूपभेदः।
च्व्यन्तस्याव्ययत्वेन मुमोभावात्।[2]

कर्तरि भुवः खिष्णुच्खुकञौ ॥३।२।५७॥

आढ्यादिषु च्व्यर्थेष्वच्व्यन्तेषु[3] भुवः कर्त्रर्थे खिष्णुच्-
खुकञ् एतौ स्तः।[5] अनाढ्यः आढ्यो भवति[6] आढ्यंभविष्णुः।

---

आढ्यसुभगेति। आढ्यंकरणमिति। 'अरुर्द्विषदजन्त—' इति
मुम्। 'टिड्ढाणञ्—' इति ङीप्। प्रत्याहारन्यायेन पलितंकरणम्
नग्नंकरणम् अन्धंकरणम् एतान्यप्युदाहरणानि ज्ञातव्यानीत्यभिप्रायेण
प्रियंकरणमित्युदाहृतम्। ननु आढ्यीकरणमिति न भाव्यमच्वाविति
प्रतिषेधः कृतः। तत्र ख्युनि प्रतिषिद्धेपि ल्युट् भविष्यत्येव किं
प्रतिषेधेनेत्याशङ्क्याह—प्रतिषेधसामर्थ्यादिति। तदेवोपपादयति—
नहीति। उत्तरार्थश्च प्रतिषेध इति भाष्यकारमतम्। च्व्यर्थेषु किम्।
अनाढ्यं कुर्वन्ति। अभ्यञ्जयन्तीत्यर्थः। धातूनामनेकार्थत्वात्।

कर्तरि। आदिना सुभगंभविष्णुः। सुभगंभावुकः। स्थूलं-
भविष्णुः। स्थूलंभावुकः। पलितंभविष्णुः। पलितंभावुकः। नग्नं-
भविष्णुः। नग्नंभावुकः। अन्धंभविष्णुः। अन्धंभावुकः। प्रियंभविष्णुः।

---

१. P drops अर्थे. २. Dropped in $D_1$. ३. After it—च्व्यर्थेष्विति। आढ्यं तैलेन कुर्वन्ति अभ्यञ्जयतीत्यर्थः। धातूनामनेकार्थत्वात्। $N_1$. ४. च्व्यन्तेषु is dropped in $D_{2}$, $D_4$. ५. °खुकञौ स्तः C; °खुकञौ स्तः $D_1$. ६. भवतीति C. ७. निषेधः PC., $Dc_3$.

आढ्यंभावुकः । इत्यादि । त्यदादिषु दृश इति कञ्क्विनौ । तादृशः । तादृक् । समानान्ययोश्च ॥ सदृशः । सदृक् । अन्यादृशः । अन्यादृक् । दृशेः क्सश्च । सदृक्षः । तादृक्षः । अन्यादृक्षः ।

**सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् ॥३।२।६१॥**

एभ्यः सुप्युपपदे[1] उपसर्गे सत्यपि[2] क्विप् स्यात् ॥

---

प्रियंभावुकः । कर्तरि किम् । करणे मा भूत् । च्व्यर्थे किम् । आढ्यो भविता । अच्वौ किम् । आढ्यी भविता ।

‘ उदात्तत्वाद् भुवः सिद्धमिकारादित्वमिष्णुचः ।
नञस्तु स्वरसिद्ध्यर्थमिकारादित्वमिष्यते ॥ ’

भवतेरुदात्तत्वात् प्रतिषेधाभावात् तुलादिलक्षण इट् स्यात् । किमर्थमिष्णुच इकारेण । अत्रोत्तरम् । नञस्तु इति । नञ उत्तरस्य अनाढ्यंभविष्णुरस्य ‘कृत्योकेष्णुच्चार्वादयश्च’ इति अन्तोदात्तार्थमिकारादित्वमन्यथा लाक्षणिकत्वादस्य ग्रहणं न स्यादित्यर्थः । ‘स्पृशोऽनुदके क्विन्’ ‘ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च’ इति सूत्रद्वयं सुबन्त एव व्याख्यातमितीह नोक्तम् । ‘त्यदादिषु—’ इति व्याख्यातमपि पुनरुच्यते । तत्र सर्वोदाहरणानामनुक्तत्वात् । तादृश इति । स इव दृश्यते । ‘आ सर्वनाम्नः—’ इत्यात्वम् । सदृक् इति । ‘समानस्य सः’ इत्यनुवर्तमाने ‘दृग्दृशवतुषु’ इति सः ।

सत्सू । षद्लृ विशरणगत्यवसादनेषु । सू इति षूङ् प्राणिगर्भविमोचने इत्यस्यादादिकस्य ग्रहणम् । द्विषा साहचर्यात् । न सुवतेस्तौदादिकस्य न वा सूयतेः । द्विष अप्रीतौ । द्रुह जिघांसायाम् ।

---

१. Before it—सुपीति वर्तते । कर्मग्रहणं ‘स्पृशोऽनुदके क्विन्’ इत्यतः प्रभृति व्याम्रियते । N. २. उपसर्गे सत्यसत्यपि C, $B_2$, $N_1$, उपसर्गे सत्यसति P.

उपसर्गोक्तेर्ज्ञायते अन्यत्र सुबुक्तौ प्रादिग्रः
क्यप् च सुपि च इत्यादौ । वेर्लोपः । शुचि
अण्डसूः । प्रसूः । मित्रद्विट् ॥ अग्रग्रामाभ्यां
अग्रणीः । ग्रामणीः । देवराट् ।

भजो ण्विः ॥३।२।६२॥

सुपि प्रादौ च भजेर्ण्विः स्यात् ॥ सु

---

दुह प्रपूरणे । युज समाधौ । युजिर्योगे वा
विचारणे । विद सत्तायां वा । न विद्लृ लाभे
त्वात् । भिदिर् विदारणे । छिदिर् द्वैधीकर
प्रापणे । राजृ दीप्तौ । सुपीति वर्तते । कर्मग्रह
इत्यतः प्रभृति न व्याप्रियते इत्यभिप्रेत्याह—
'सुपि' इति वर्तमाने किमुपसर्गग्रहणेनेत्याश
रिति । वेर्लोप इति । 'वेरपृक्तस्य' इत्य
ककारो गुणप्रतिषेधार्थः । इकारो वेरिति
शुचिषदिति । 'पूर्वपदात्—' इति षत्वम् । 
प्रतेः' इति षत्वम् । 'स एषां ग्रामणीः' इति 
संज्ञायां णत्वं भवतीति वाच्यमित्याह—अग्रग्रा
प्रद्विट् । मित्रधुक् । गोधुक् । अश्वयुक् ।
रज्जुच्छित् । मित्राजित् । विराट् इत्याद्युदाहरण

भजो । सुखभागिति । 'वेरपृक्त
प्रत्ययलक्षणेन 'अत उपधायाः' इति वृद्धिः । '
णो वृद्ध्यर्थः । इरिति सामान्यार्थः ।

---

१. सुपिस्थ $B_2$, $D_4$, N. २. शुचिषत् $B_2$.
मित्रध्रुक् । गोधुक् । अश्वयुक् । वेदवित् । काष्ठ
$B_2$, $D_4$; अमित्रजित् N. ४. Dropped N,
६. Dropped in C, $D_1$.

**छन्दसि सहः ॥३।२।६३॥**

सहेर्ण्विः स्यात् प्राग्वत् छन्दसि ॥ लोकेपीति केचित् ॥ येषामपि दृश्यते इति पूर्वपदस्य दीर्घः । तुराषाट् ।[१]

**वहश्च ॥३।२।६४॥**

पृष्ठवाट् ॥

परौ व्रजेः षः पदान्ते इति क्विप् तेनैव षः । परिव्राट् ॥ सि वहेः क्विप् अनसो डश्च ॥ संप्रसारणम् । अनो वहती-नड्वान् ।

---

छन्द । लोकेप्येतान् प्रयोगान् केचिदिच्छन्तीति तत्प्रदर्शनार्थ-ानि सूत्राण्यत्र पठ्यन्ते । अन्यथा वैदिकप्रक्रियायामेवापठिष्यत् ॥ । च कुमारसंभवे प्रयोगः । 'तुरासाहं पुरोधाय धाम स्वायंभुवं ः' इति । तुराषाडिति । 'हो ढः' इति ढत्वम् । 'सहेः साडः' इति षत्वम् । चर्त्वम् ।

वहः । योगविभाग उत्तरार्थः । 'पृष्ठवाड् युगपार्श्वगः' मरकोशेभिधानात् लोकेपि प्रयोगः । तथा नैषधेपि । 'धरातुरासाहि र्ययाज्ञा कार्या न कार्यान्तरचुम्बिचित्ते' इति ।

परौ व्रजेरिति । 'परौ व्रजेः षः पदान्ते' इति पञ्चपाद्युणादि-षु पठ्यते ।

---

. After it—जलाषाट् C, $B_2$, N, $D_4$; लाषराट् $D_2$. २. From तथा ति dropped $Do_3$, PC.

**जनसनखनक्रमगमो विट् ॥३।२।६७॥**

उपसर्गे[1] सुप्येभ्यो[2] विट् स्यात् छन्दसि ॥

**विड्वनोरनुनासिकस्यात् ॥६।४।४१॥**

अनुनासिकस्यात्[3] विटि वनि च ॥ अब्जाः ।[4]

**सनोतेरनः ॥८।३।१०८॥**

पूर्वपदस्थान्निमित्तात् परस्य सनोतेः सस्य षः स्या
तु नान्तस्य ।[5] गोषाः । कूपखाः । उदधिक्राः । अग्रेगाः ।

---

जन । जन जनने । जनी प्रादुर्भावे । द्वयोरपि ग्रह
विशेषानुपादानात् । षैण दाने । षण संभक्ताविति द्वावपि
खनु[7] अवदारणे । क्रम[8] पादविक्षेपे । गम्लृ गतौ । इकारो
पृक्तस्य' इति सामान्यग्रहणाविघातार्थः । 'विड्वनोः' इति विशेषण

विड्व । 'अनुदात्तोपदेश—' इत्यतोनुनासिकग्रहणेनुवर्त
पुनर्ग्रहणमनुनासिकमात्रस्य[10] परिग्रहार्थम् । अन्यथा ह्यनुदात्तोपदे
तितनोत्यादीनामेव स्यात् । अब्जा इति । अप्सु जायन्त इत्य

सनो । अनः किम् । गोसनिं वाचमुदीरयन् । पूर्वपदा
सिद्धे नियमार्थं वचनम् । सनोतेरनकारस्यैवेति । तत्र
सवनादिपाठात् गोसनीति नियमस्य फलं नेति सिसानयिषतीति
प्रत्युदाहरन्ति । न सिसनिषतीति । तत्र 'स्तौतिण्योरेव' इति नियम
नेति । सिसनिषतेः क्विप् । सिसनीरित्यपरे प्रत्युदाहरन्ति ।
इत्यादि । गां सनोतीति कूपं खनतीति उदधिं क्रामतीति
गच्छतीति विग्रहाः । अग्रेगा इति । 'तत्पुरुषे कृति—' इति स

---

१. अनुपसर्गे B₂, D₄. २. सुप्युपपदे जनादिभ्यो D₁. ३. After स्यात् D₁, D₂, N. ४. After it—चन्द्रः B₂. ५. Before it—षण ६. After it—अग्रेगाः B₂. ७. षणु PC. ८. क्रमु PC. ९. °ग्रहणा Dc₃. १०. मात्रग्रहार्थम् PC., Dc₃.

**अदोऽनन्ने ॥३।२।६८॥**

छन्दसीति निवृत्तम् । अदो विट् स्यात् अनन्ने सुपि[1] । आमात् । सस्यात् । अन्ने तु । अन्नादः ।[2]

**दुहः कब् घश्च ॥३।२।७०॥**

दुहः[4] सुपि कप् स्यात् घश्चान्तादेशः । कामदुघा ।

**मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ॥३।२।७१॥**

एभ्यो ण्विन् स्यान्मन्त्रे ॥ अलाक्षणिककार्यार्थं समुदाय निपात्यन्ते । ण्विन् विधीयते । श्वेता एनं वहन्ति श्वेतवाः इन्द्रः

---

अलुक् । सर्वत्र 'वेरपृक्तस्य' इति वकारलोपे कृते 'विड्वनोः—' इत्यात्वम् ।

अदः । **सस्यादिति** । सस्यमत्ति । पूर्वेणैव व्याख्यातप्रायत्वादुपेक्षितमेकं सूत्रं व्याख्यायते—'क्रव्ये च' ॥३।२।६९॥ क्रव्यशब्दे उपपदे अत्तेर्विट् स्यात् । क्रव्यमत्ति क्रव्यात् । पूर्वेणैव सिद्धे वचनमसरूपबाधार्थम् । तेनाण् न । तर्हि कथं क्रव्यादः । कृत्तविकृत्तशब्दे उपपदे अदेरण् कृत्तविकृत्तस्य च पृषोदरादित्वात् क्रव्यभावः । ततश्च कृत्तविकृत्तं पक्वं मांसमदन् क्रव्यादः अपक्वं तु क्रव्यादिति विशेषः ।

दुहः । पकारः 'अनुदात्तौ सुप्पितौ' इति स्वरार्थः । **कामदुघेति** । कामान् दुग्धे ।

**मन्त्रे** । **श्वेतवा इति** । श्वेतः कर्ता उपपदं प्रत्ययस्तु कर्मणि । **उक्थशा** इति । उक्थशब्दे कर्मणि करणे वोपपदे ण्विन् नलोपश्च

---

१. सुप्युपपदे D1. २. Dropped in C; आममत्ति आमात् B2; आममात्ति आमात् D4. ३. After it—क्रव्ये च । कृत्तविकृतं मांसं तस्य क्रव्यभावो ऽत्र क्रव्यात् । क्रव्यादः । N1. ४. दुहेः D4.

उक्थानि उक्थैर्वा शंसति[1] उक्थशाः । पुरो दाशन्ते[2] एनं पु

**अवे यजः ॥३।२।७२॥**

अवयाः ।

**आतो मनिन्क्वनिब्वनिपश्च ॥३।२।७४॥**

सुपि धातौ च आदन्तादेते स्युः विच्[3] च छन्दसि
ददातीति सुदामा । घुमास्थेतीत्वम् । सुपीवा । वनिप्
पीवा । भूरिदावा । विच् । सोमपाः । अन्यभ्योपि दृ
अनादन्तेभ्योप्येते स्युः । भाषायामपि ।

**नेड्वशि कृति ॥७।२।८॥**

वशादेः कृत इण्न स्यात् ॥ [6]सुशर्मा । म्वोश्चे
सुजन्मा । क्वनिप् । प्रातरित्वा । वनिप् । विड्वनोरित्य

---

निपात्यते । पुरोडाश इति । दाशृ दाने । अस्य पुरस्पूर्वस
कर्मणि च प्रत्ययः । एषु सर्वेषु श्वेतवाहुक्थशास्पुरोडाश
डस्पदान्त इति वक्तव्येन डस् । 'अत्वसन्तस्य' इति

अवे । योगविभागो 'विजुपे छन्दसि' इत्यत्र यजेरनुवृत्त्य
आतः । मनिनो नकार आद्युदात्तार्थः । क्वनिब्वनिपोः पकारावनुद
इकार उच्चारणार्थः । ककारः कित्कार्यार्थः । सुपीवेति
पिबति । घृतपीवेति । घृतं पिबति । भूरिदावेति । भूरि ददा

नेड् । वशीति प्रत्याहारग्रहणम् । सुशर्मेति । शॄ हिंस
शोभनं शृणाति । प्रातरित्वेति । इणः प्रातःशब्दे उपपदे ।

---

१. शंसतीति $D_1$. २. डाशन्ते C, $N_1$. ३. चाद्विच् $D_2$, $D_4$. ४.
$B_2$, $N_1$. ५. चकाराद्विच् C; चाद्विच् (च् dropped) $B_2$. ६. Be
शॄहिंसायाम् । शृणातीति $D_1$ ; शृणातीति $N_1$. ७. Before it—आत

विजावा ॥ ओणृ[1] । अवावा । वनो रच । अवावरी । विच्
रेट् । अपिशब्दान्निरुपपदेभ्योपि[3] । सुत्वा । धीवा । द
प्रयोगानुसारार्था ।

**क्विप् च ॥३।२।७६॥**

उपपदे सत्यसति च[4] धातोः क्विप् स्यात् सर्वत्र ॥
स्रत्[5] । पर्णध्वत् । वाहभ्रट्[6] ।

**अन्तः ॥८।४।२०॥**

पदान्ते[8] नस्याप्यनितेर्णत्वं स्यान्निमित्ते ॥ हे प्राण् ।

---

'ह्रस्वस्य—' इति तुक् । **विजावेति** । जनी प्रादुर्भावे ।
अपसारणे । **अवावेति** । ओणो णकारस्यात्वम् । अवादेशः ।
रच' इति ङीब्रौ । **रोट्** रेट् इति । रुषरिष हिंसायाम् ।

**क्विप् स्यात्सर्वत्रेति** । सर्वधातुभ्यः छन्दसि भाषायां वे
एतत् 'अन्येभ्योपि दृश्यन्ते' इत्यतोपिशब्दस्य सर्वविधिव्यभिचारा
नुवृत्तेर्लभ्यते ।[10] उखास्रत् । पर्णध्वत् । वाहभ्रट् इति । उ
स्रंसते । पर्णात् ध्वंसते । वाहात् भ्रश्यति । स्रंसु ध्वंसु अवस्रंसने
अधः पतने । 'अनिदिताम्—' इति न्लोपः । 'वसुस्रंसु—
दत्वम् । 'वावसाने' इति चर्त्वम् । वाहभ्राडित्यत्र 'व्रश्च—' इति

अन्तः । 'पदान्तस्य' इति प्रतिषेधापवादोयम् । अन्तश
पेक्षया गृह्यत इत्यभिप्रेत्याह—**पदान्ते नस्यापीति** । अक्षद्यू

---

१. ओणृ अपनयने $D_2$, $D_4$, $B_2$ ओण् वृद्धौ C. २. पदेपि $N_1$. ३
drops it; धीवा । पीवा $B_2$, $N_1$. ४. C drops it. ५. After it—
$D_1$. ६. वाहान् भ्रश्यति Before it in $D_1$; वाहभ्रट् $B_2$. $N_1$. ७. 
$B_2$. ८. पदान्तनस्या° $B_2$. ९. °स्यात्वे अवादेशः PC. १०.
this-अन्यथा 'विजुपे छन्दसि' इत्यतः 'छन्दसि' इत्यनुवृत्तेः '
मनिन्—' इत्यतः 'आतः' इत्यनुवृत्तेरादन्तादेव छान्दस्यैव च स्यात् PC.

छ्वोः शूडित्यूठ् । [1]अक्षद्यूः । शास आशासश्च इत्वं वाच्यम् ॥* मित्राणि शास्ति [2]मित्रशीः । आशीः अस्यैव प्रपञ्चः । सत्सूद्विषेति ।

[3]असुन् ।

[4]अयं प्रत्ययो धातोः स्यात् ॥ उरुव्यचाः [5]रजः ।

अर्चि[6]शुचिहुसृपि[7]छादिछृदिभ्य [8]ईसुन् ॥ [9][10]शोचिः । सर्पिः ।

---

अक्षैर्दीव्यतीति । मित्रशीरिति । शासु अनुशिष्टौ । आङः शासु इच्छायाम् । गीरिति । गॄ शब्दे । क्विप् । रपरः । 'र्वोरुपधाया—' इति दीर्घः । 'असुन्' इत्या सूत्राणि औणादिकानि । अत्र तेषां पाठः प्रक्रियां उरुव्यचा इति । व्यच व्याजीकरणे । 'व्यचेः कु वक्तव्यम्' इति ङित्त्वाभावः । नृचक्षा इति । 'असि चक्षिङः ख्याञ् नेति वाच्यम् ।' इति ख्याञभावः । रञ्ज रागे । असि अके अने घिनुणि च रञ्जेर्नलोपो वाच्यः' अर्चिः । शोचिः । हविः । छदिः । छर्दिः ।

---

१. अक्षैर्दीव्यतीत्यक्षद्यूः $D_1$. २. शास्तीति C. ३. असून् $B_1$, $B_2$. ४. असुन् प्रत्ययो $D_2$, N. ५. Before it—असि न $N_1$. ६. रुचिशुचि $D_2$, $B_2$, $D_4$. ७. छादि $D_2$, $B_2$ $N_1$, D. इस् P, $B_2$, $D_4$, $N_1$. ९. After it—रोचिः । शोचिः । छर्दिः । सर्पिः । N. १०. P and $D_1$ and $D_2$, $B_2$, D. ११. क्रियाविशेषणार्थः D. $C_1$. १२. °सीति वक्तव्यात् वि

धनर्तिचक्षिवपितपिजनियजेरुस् ॥ धनुः । चक्षुः ।[1]
सर्वधातुभ्यष्ट्रन्[3] ॥ तन्त्रम् ।[3]

**छादेर्घेऽद्व्युपसर्गस्य** — **इस्मन्त्रन्क्विषु च ॥६।४।९७॥**

एषु परेषु छादेर्ह्रस्वः स्यात् ॥ छदिः । छद्म । छत्रम् ।[4]
[अ]नुछत् । अनुनासिकस्य क्विझलोः क्ङिति । मो नो धातोः ।
[प्र]शान् । प्रतान् ।

**ज्वरत्वरस्रिव्यविमवामुपधायाश्च ॥६।४।२०॥**[6]

एषामुपधाया वकारस्य च ऊठ् स्यात् क्वौ झलादौ
[7]क्ङिति ॥ जूः । जूरौ । तूः[8] । स्रूः । स्रुवौ । ऊः । ऊठ् ।
[वृ]द्धिश्च । जनानवतीति जनौः । जनावौ । मूः ।[9,10]

---

धन । धन शब्दे । अरुः । वपुः । तपुः । जनुः । यजुः ।
सर्व । तन्त्रमिति । तनु विस्तारे । 'तितुत्र—' इति नेट् ।
[ए]तान्यौणादिकानि ।

इस् । छद अपवारणे । चुरादिर्णिजन्तः । प्रशानिति । शमु
[उ]पशमे । प्रतानिति । तनु तमु ग्लानौ ।

ज्वर । जूरिति । ज्वर रोगे । तूरिति । ञित्वरा संभ्रमे ।
[स्रू]रिति । स्रिवु गतिशोषणयोः । ऊरिति । अव रक्षणे । जनौरिति ।
[अ]त एव । 'एत्येधत्यूठ्सु' इति वृद्धिः । मूरिति । मव बन्धने ।

---

१. चक्षिङ् त्रपिवपि $B_2$; चक्षिङ् $D_4$. २. Before it—अरुः N.
३. After it—शास्त्रम् N. ४. Before it—छादिभ्म् संवृतौ $D_1$; छ (द?)
[सं]वरणे $N_1$. ५. Before it—मनिप् । धातोर्मनिप् स्यात् $N_1$. ६. ञिव्य N.
७. अनुनासिके च क्ङिति । $D_4$. ८. C, $B_2$ have तुरौ after it स्रुः ।
[स्र]ावौ । ऊः । ऊटि वृद्धौ $D_4$. ९. स्नूः । स्रुवौ । ऊः । ऊठि वृद्धौ $B_2$, N ( N
[d]rops ऊः) for स्रुवौ...वृद्धिश्च. १०. After it-मुवौ । मुवः । मूर्तिः $D_2$ ; मुवौ ।
[म]ुवः । मूर्तिः । ऊरत्वं रउपधावकारस्य स्रिव्यवमवामन्तभूतवकारस्य ऊठ् । $B_2$,
$D_4$ (ज्वरत्वर° $D_4$.)

**राल्लोपः ॥६।४।२१॥**

रेफादुत्तरयोश्छ्वोर्लोपः[1] स्यात् क्वौ झलादौ च क्ङिति[2] मूर्च्छा[3]। मूः। धुर्वी[4]। धूः।[5] विरुहः[6] धोन्तादेशो[7] वेर्दीर्घं केचित्। वीरुत्।

**गमः क्वौ ॥६।४।४०॥**

गमः क्वौ परेनुनासिकस्य लोपः स्यात् ॥ ह्रस्वेति[8] तु अङ्गगत्। यममनतनां[9] च वाच्यः ॥* संयत्। परिमत्। परि[10]

ऊ च गमादीनाम्।[11] अग्रेगूः ॥[12] अग्रेभ्रूः।

---

रात्। राल्लोपे सतुक्कस्य छस्याभावात् केवलो गृह्य मूरिति। मूर्च्छा मोहसमुच्छ्राययोः। धुर्वीति। तुर्वी धुर्वी हिंसाया विरुहः ध इति। विपूर्वस्य रुह जन्मनि प्रादुर्भावे चेत्य

गमः। अज्झलार्थोयमारम्भः। ऊ च गमादीनामिति। अ न्त्यपरिभाषयान्त्यस्य। अग्रेगूः अग्रेभ्रूरिति। गमेर्भ्रमेश्चानुनासिक कृते अकारस्य ऊ आदेशः। स्पष्टत्वादुपेक्षितम्[13] 'स्थः क च ३।२।७७॥ सुपि उपसर्गे च स्थः कः स्यात् क्विप् च। किमर्थमिव यतः 'सुपि स्थः' इति कः सिद्धः। अन्येभ्योपि क्विप्। बा बाधनार्थं पुनर्वचनम्। शमि धातोः संज्ञायामचं बाधते। शंस्थ शंस्थाः। 'आतो लोपः' इत्यालोपः।

---

१. रेफात्परयोः $D_2$, P. २. क्ङिति च P, $D_2$. ३. मूर्च्छा मोहसमुच्छ $D_1$. ४ धुर्वी हिंसायाम् $D_1$; धुर्वी $D_4$, P., $D_2$. ५. After it—पुर्वी C. ६ त्रिरुहः क्वौ N. ७. धान्ता° $D_1$, $N_1$. ८. ह्रस्वस्येति $D_2$, P, $B_2$. ९. यमुमनु° C, $N_1$ जनयममनुतनां वाच्यः। प्रजत्। संयत्, &c., $D_4$. १०. Dropped N. ११. After it—गमादीनां स्यात्। अनुनासिकलो अग्रेगूः। अग्रेयूः। N. १२. After it—अग्रेभ्रुः $D_1$; अग्रेभ्रुः $D_2$; अग्रे अग्रेयूः। अभ्रेमूः। अग्रेनूः। अग्रेभूः। $B_2$. १३. After the Sutra—एतत् स्पष्टत्वादुपेक्षितम् PC.

## सुप्यजातौ णिनिस्ताच्छील्ये ॥३।२।७८॥

अजात्यर्थे सुपि धातोर्णिनिः स्यात् ताच्छील्ये ॥ उष्ण भोजी । सुबुक्तिः प्रादिनिवृत्त्यर्था ।

---

सुपि । उष्णभोजीति । उष्णं भोक्तुं शीलमस्य उष्णभोजी अजाताविति किम् । ब्राह्मणानामन्त्रयिता । ननु 'सुपि स्थः' इत्यत 'सुपि' इत्यनुवर्तते । किं पुनः सुब्ग्रहणेनेत्याशङ्क्याह—सुबुक्ति रिति । उत्प्रतिभ्यामाङि सर्तेरुपसंख्यानम् । उदासारिणी²। उपसर्गार्थम् साधुकारिणि । अताच्छील्यार्थं जात्यर्थं वासरूपनिवृत्त्यर्थं च । साधु दायी । ब्रह्मणि वदः । ब्रह्मवादी । अताच्छील्यार्थं जात्यर्थं वासरूप निवृत्त्यर्थं च । अतो न ब्रह्मवाद इति । त्रीणि सूत्राणि पूर्वसूत्रव्याख्याने नैव व्याख्यातप्रायत्वादुपेक्षितानि—'कर्तर्युपमाने' ॥३।२।७९॥ कर्तृ वाचिन्युपपदे धातोर्णिनिः स्यात् । उपपदकर्ता प्रत्ययार्थकर्तुरुपमानम् उष्ट्र इव क्रोशति उष्ट्रक्रोशी । अताच्छील्यार्थो जात्यर्थो वारम्भः कर्तरि किम् । अपूपानिव भक्षयति मनुष्यान् । उपमाने किम् । उष्ट्र क्रोशति । 'व्रते' ॥३।२।८०॥ सुपि धातोर्णिनिः स्यात् धातूपपदप्रत्यय समुदायेन चेद्व्रतं गम्यते । सति शयने स्थण्डिल एव शेते स्थण्डिल शायी । व्रते किम् । स्थण्डिले शेते मैत्रः । जात्यर्थमताच्छील्यार्थं वा 'बहुलमाभीक्ष्ण्ये' ॥३।२।८१॥ आभीक्ष्ण्यं पौनःपुन्यं ताच्छील्याद न्यत् । सुप्युपपदे आभीक्ष्ण्ये गम्ये धातोर्णिनिः । कषायपायिण गान्धारा इति । तत्र देशे कषायादिकं पुनः पुनः पिबतां सामर्थ्य स्यादतस्ते कषायं पिबन्ति न ताच्छील्यात् । बहुलग्रहणा कुल्माषखाद इत्यत्र न ।

---

१. सुप्यजातौ णिनिः स्यात् ताच्छील्ये । D₁. २. After it प्रत्यासारिणी Pc, Dc₂. ३. After it—इत्यादीनि त्रीणि सूत्राणि & Pc, Dc₂.

मनः ॥३।२।८२॥

सुपि मन्यतेर्णिनिः स्यात् ताच्छील्येपि ॥ दृश्यमा॰

आत्ममाने खश् च ॥३।२।८३॥

मनः सुपि खश् स्यादात्ममाने चाण्णिनिः ॥
श्यन् । आत्मानं[४] पण्डितं मन्यते[५] पण्डितम्मन्यः । पण्डित
खित्यनव्ययस्य ।[६] कालिम्मन्या । अनव्ययस्य किम् । दिवा

---

**मनः** । मन मनने इत्यस्य दैवादिकस्य ग्रहणं न म॰
इत्यस्य तानादिकस्य । णिनौ रूपान्तराभावेपि उत्तरसूत्रे
मन्येर्दिवादित्वात् श्यन् स्यात् मनुतेस्तनादित्वादुप्रत्ययः
विशेष इति सर्वं चेतसि कृत्वा श्यना निर्दिशति—**मन्यं**
**दृश्यमानीति** । दृश्यं मन्यते । णित्वात् ' अत उपधायाः ' इति

**आत्म** । यदा प्रत्ययार्थः कर्ता आत्मानमेव पण्डितत्वादि॰
मन्यते तदायं विधिः । **पण्डितंमन्य** इति । ' अरुर्द्विषदजन्त—
मुम् । खशः खकारो मुमर्थः । शकारः सार्वधातुकार्थः । अ
किम् । पण्डितमानी देवदत्तस्य । **खित्यनव्ययस्येत्यादि** ।
मन्येत्यत्र ' क्यङ्मानिनोश्च ' इति प्राप्तात् पुंवद्भावाद्धि॰
' खित्यनव्ययस्य ' इति ह्रस्व एव स्यादित्यर्थः ।

---

१. Before it–' उपप्रतिभ्यामाङि सर्तेः ॥ उपसारिण्यः । प्रत्यास
न्साधौ च णिनिः' ॥ साधुकारी । साधुदायी ॥ 'ब्रह्मणि वदो णि
ब्रह्मवादी । 'कर्तर्युपमाने ॥' कर्तृवाचिन्युपमाने धातोर्णिनिः । उ॰
प्रत्ययार्थस्य कर्तुरुपमानम् । उष्ट्र इव क्रोशति । उष्ट्रक्रोशी । अ॰
ताच्छील्यार्थे । जात्यर्थश्च । 'व्रते' ॥ व्रते गम्यमाने धातोर्णिनिः । स्थण्डि॰
अश्राद्धभोजी । 'बहुलमाभीक्ष्ण्ये' ॥ आभीक्ष्ण्ये गम्यमाने धातोर्बहुलं ।
क्षीरपायिण उशीनराः । कुल्माषखादा । अत्र न ॥ N. २. अताच्छील्ये
D4. ३. आत्ममाने dropped C. ४. पण्डितमात्मानं P. ५.
it—असौ D1; इति C. ६. After it—इति ह्रस्वः C.

**इच एकाचोऽम्प्रत्ययवच्च ॥६।३।६८॥**

इजन्तादेकाचोम् स्यात् स च स्वाद्यम्वत् खिदन्ते परे। औतोम् शसोः। गाम्मन्यः। वाम्शसोः। स्त्रींमन्यः स्त्रियंमन्यः। नृ। नरंमन्यः। भुवंमन्यः।

**भूते ॥३।२।८४॥**

एतदधिक्रियते।

---

इच। 'अम्' इति हि द्विरावर्तते। तेनाम् स्यात् स च द्वितीयैकवचनवत् स्यादित्याह—**अम् स्यात् स च स्वाद्यम्वदिति** अतिदेशादात्वपूर्वसवर्णगुणेयङुवङादेशाः स्युः। 'औतोम् शसोः' इत्योकारस्याकारः। 'वाम्शसोः' इतीयङ्। **नरंमन्य इति**। 'ऋतो ङिसर्वनामस्थानयोः' इति गुणः। **भुवम्मन्य इति**। 'अचि श्नुधातु—' इत्युवङ्। श्रियमात्मानं मन्यते श्रिमन्यं ब्राह्मणकुलमित्यत्र किमित्यमून अत्रेदं भाष्यकारवचनम्। अत्र विषये परित्यक्तस्वलिङ्गः श्रीशब्दो ब्राह्मणकुले वर्तते यथा प्रस्थादयः स्त्रियाम्। तस्मात् 'स्वमोर्नपुंसका इत्यमो लुक्' इति। ननु यथा 'सुपो धातुप्रातिपदिकयोः' इति लुक् बाधते तथामुमपि बाधते। मध्येपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरानिति 'सुपो धातु—' इतीमं लुकमम् प्रत्ययो बाधते 'स्वमोर्नपुंसकात्' इति।

**भूते**। धात्वधिकाराद् धात्वर्थे भूते इति विज्ञायते। एतदधिक्रियते इति। 'वर्तमाने लट्' इति पर्यन्तम्।

**करणे यजः ॥३।२।८५॥**

करणे उपपदे यजेर्णिनिः स्याद् भूते ॥ सोमयाजी ।

**कर्मणि हनः ॥३।२।८६॥**

पितृघाती । निन्दायामेव । चौरं हतवान् ।

**ब्रह्मभ्रूणवृत्रेषु क्विप् ॥३।२।८७॥**

एषु हन्तेः क्विप् स्याद्भूते ॥ ब्रह्महा । भ्रूणहा नलोपः सुप्स्वरेति नलोपस्यासिद्धत्वात् न ह्रस्वस्य वृत्रहभ्याम् । ब्रह्मादिष्वेव हन्तेरेव क्विबेव भूते एवेति सूत्रम् ।

---

करणे । स्वरितत्वात् 'णिनिः' अनुवर्तते न खश् वानिति । सोमयाजीति । सोमयागः फलोत्पादनाख्ये व्य भवति । ननु फलोत्पादनलक्षणं व्यापारं प्रति साधनत्वेनेप्सि यमानो यागः कर्म भवति । सत्यम् । तथापि शक्तिभेदा स्यादेव । यथा निपीयमानेन मधुना मत्त इत्यत्र कर्म मधुनः । तस्मात् सोमयाजीत्यस्यायमर्थः । सोमेन क भावितवानिति । स्वर्गशब्दो वृत्तावन्तर्भूतत्वान्न प्रयुज्यते

**कर्मणि** । पितृघातीति । 'हनस्त च' इति तत हन्तेः—' इति कुत्वम् । 'सौ च' इति दीर्घः । चौरं ह अत्र निन्दाया अभावान्न णिनिः ।

**ब्रह्म** । ननु च 'सर्वधातुभ्यः क्विब्वा' इति क्विप् सि सूत्रेणेत्याशङ्क्याह—ब्रह्मादिष्वेवेति । धातुनियमः यत्रैवकारस्ततोऽन्यत्रावधारणमित्युपपदेभ्यः पर एवकार हन्ति नियमयतीति धातुनियमः । तेन पुरुषं हतवान्

---

१. Before it—नेह $B_2$. २. ह्रस्वस्येति न तुक् P., $D_2$, $B_2$; स्येति तुक् न N. ३. °यागीति $Dc_1$.

## सुकर्मपापमन्त्रपुण्येषु कृञः ॥३।२।८९॥

एषु कृञः क्विप् भूते ॥ सुकृत् । इत्यादि । उपपदान्तरे
ऽपि । शास्त्रकृत् ।

## सोमे सुञः ॥३।२।९०॥

[1]सोमसुत् । अत्र चतुर्विधो नियमः ।

---

हन्तेरेवेत्युपपदनियमः । तेन ब्रह्माधीतवानित्यत्र न । क्विबेवे
[2]कालनियमः । यदि क्विबेवेति नियमः निष्ठापि न स्यात् । ब्राह्म
हतवानिति । मध्यापवादत्वात् पूर्वानणादीनेव बाधते न निष्ठाम् । ए
मपि वृत्रस्य हन्तुरिति तृच् न स्यात् । प्रायिकत्वान्नियमस्यादोषः
भूत एवेति प्रत्ययनियमः । तेन ब्रह्माणं हन्ति हनिष्यति वेत्यत्र न
एष सर्वोऽपि नियमः प्रायिकः । तेन मधुहत्यादि सिद्धम्
प्रायिकत्वं 'बहुलं छन्दसि' इति उत्तरत्र बहुलग्रहणात् नियमो
बहुलग्रहणात् ।

**सुक** । अत्र त्रिविधो नियमो बहुलग्रहणात् । आदिना कर्मकृत
पापकृत् । मन्त्रकृत् । पुण्यकृत् । अत्र सूत्रे धातुनियमं वर्जयि
कालोपपदप्रत्ययविषय एव नियमो बहुलग्रहणानुवृत्तेस्तेनोपपदान्तरे
कृञः क्विप् स्यादित्याह—**उपपदान्तरेऽपीति** ।

**सोमे** । **चतुर्विध इति** । कालधातूपपदप्रत्ययविषयः ।

---

१. Before it—षुञ् मन्थे । सुनोति स्म । $D_1$. २. कालनियमः $Dc_3$.

**अग्नौ चेः ॥३।२।९१॥**

आग्निचित् । [1]नियमः प्राग्वत् ।

**[2]दृशेः क्वनिप् ॥३।२।९४॥**

कर्मणि दृशेः [3]क्वनिबेव स्याद्भूते ॥ पारदृश्वा ।

**राजनि युधिकृञः ॥३।२।९५॥**

राजनि कर्मणि युधिकृ[4]ञोः क्वनिप् स्यात् भूते ॥
भाविताण्यर्थो युधिः । राजानं योधितवान् राजयुध्वा । रा

---

**अग्नौ चेः** । **नियम** इति । कालधातूपपदप्रत्ययनि
स्पष्टत्वात् त्यक्ते—'कर्मण्यग्न्याख्यायाम्' ॥३।२।९२॥ कं
चिनोतेः कर्मण्येवार्थे क्विप् स्यात् धातूपपदप्रत्ययसमुदायेन चे
गम्यते । श्येन इव चीयते श्येनचित् । कङ्कचित् । अग्न्यर्थ
रचनाविशेषः । 'कर्मणीनि विक्रियः' ॥३।२।९३॥ क
विपूर्वात् क्रीणातेरिनिः स्यात् । 'कर्मणि' इति वर्तम
कर्मग्रहणं कर्तुः कुत्सानिमित्ते कर्मणि यथा स्यात् । सोम
तिलविक्रयी । घृतविक्रयी । तैलविक्रयी । इह न । धान्य

दृशेः । 'अन्येभ्योऽपि दृश्यन्ते' इति सिद्धेऽपि प्रत्ययान्तर
पुनर्वचनमित्यभिप्रेत्याह—**क्वनिबेव स्यादि**ति । न प्रत्ययान्तर।

**राजनि** । ननु युधिरकर्मकस्तत्कथं कर्मवाच्युपप
इत्याशङ्क्याह—**अन्तर्भावित** इति । तस्मात् सकर्मक इ।

---

१. अत्र before it N. २. Before this Sûtra—**कर्मण्यग्न्या**
३।२।९२॥ कर्मणि चिनोतेः क्विप् स्यात् धातूपपदप्रत्ययसमुदायेन चेदग्नि
(चेदग्न्याख्याया गम्यते । N.)। श्येन इव चीयते श्येनचित् ॥ **कर्मणी**
कर्मणि विपूर्वात् क्रीणातेरिनिः स्यात् कुत्साख्यायाम् ॥ सोमविक्रयी
घृतविक्रयी $N_1$) इह न । धान्यविक्रायः । (विक्रयः N) $D_2$, $D_4$, $B_2$
$D_4$, $B_2$, N.), N. ३. क्वनिप् स्यादेव $D_2$. ४. कृञः $D_2$. ५. इति be
६. Dropped N. ७. After it—इति द्वे सूत्रे स्पष्टत्वादुपेक्षिते P

**सहे च ॥३।२।९६॥**

सहयुध्वा[1] । सहकृत्वा ।

**सप्तम्यां जनेर्डः ॥३।२।९७॥**

अम्बुजम् । तत्पुरुषेति[2] ङेरलुक् । सरासिजम् । बहुलं सरोजम् ।

**पञ्चम्यामजातौ ॥३।२।९८॥**

जातिवर्जे पञ्चम्यन्ते जनेर्डः स्यात् भूते ॥ पद्म अजातौ किम् । अश्वाज्जातः ।

**उपसर्गे च संज्ञायाम् ॥३।२।९९॥**

प्रजा ।

**अन्येष्वपि दृश्यते ॥३।२।१०१॥**

अन्येषूपपदेषु जनेर्डो[4] दृश्यते ॥ अजः । द्विजः ।

---

**सहे** । एतच्च कर्मणा न विशेष्यते । तस्यासत्त्ववचनस्य त्वानुपपत्तेः ।

**सप्त** । सप्तम्यन्ते उपपदे जनेर्डः स्यात् । डित्त्वाट्टिलोपः ।

**पञ्च** । पद्माज्जातः पद्मजः । पद्यते मा लक्ष्मीरस्मि क्रियावाची पद्मशब्दो न जातिवाचीत्यभिप्रेत्योदाहृतम् ।

**उपस** । उपसर्गे चोपपदे जनेर्डः स्यात् । समुदायेन चेत् गम्यत इत्यर्थः । स्पष्टत्वादुपेक्षितम्—'अनौ कर्मणि' ॥३।२।१ अनुपूर्वाज्जनेः कर्मण्युपपदे डः स्यात् । पुमांसमनुजातः पुमनु स्त्रियमनुजातः स्त्र्यनुजः ।

---

१. $D_2$ $D_4$ drop सहयुध्वा; $B_2$ has सहकृत्वा । सहयुध्वा । २. त कृति बहुलमिति N. ३. After it—संस्कारजः $D_1$, $B_2$; बुद्धिजः । संक N. ४. जातिर्डो C; $D_1$ drops जने; ५. This is after the PC, $Dc_3$.

**सुयजोर्ङ्वनिप् ॥३।२।१०३॥**

आभ्यां ङ्वनिप् स्याद् भूते ॥ सुत्वा । यज्वा ।

**जीर्यतेरतृन् ॥३।२।१०४॥**

जरन् ।

**क्तक्तवतू निष्ठा ॥१।१।२६॥**

एतौ निष्ठासंज्ञौ स्तः ॥

**निष्ठा ॥३।२।१०२॥**

धातोर्निष्ठा स्याद्भूते ॥ तयोरेव कृत्येति भावकर्मणोः क्तः ।
ोरि कृदिति कर्तरि क्तवतुः । उकावितौ । स्नातं मया ।

---

**सुय** । अग्रिमे अप्येते सूत्रे 'निष्ठा' इत्येतस्मात् तथापि
स्मिन् सूत्रे बहु वक्तव्यमस्ति । अतस्तत् परित्यज्य एते उक्ते ।
वेति । 'ह्रस्वस्य—' इति तुक् । 'सर्वनामस्थाने च' इति
र्घः । नलोपः ।

**जीर्यतेः** । नित्त्वादाद्युदात्तं पदम् । 'उगिदचाम्—' इति नुम् ।

**क्त**[3] ।

**निष्ठा** । ननु च निष्ठासंज्ञायां क्तक्तवत्वोः सिद्धिस्तत्सिद्धौ च
ष्ठासंज्ञा । असिद्धयोः संज्ञाभावादित्यन्योन्याश्रयत्वम् । नैवम् ।
विनी संज्ञा विज्ञायते । स भूते स्यात् यस्य उत्पन्नस्य निष्ठेत्येषा
ज्ञा स्यात् । सामर्थ्यात् क्तक्तवत्वोर्विधिः यथा सूत्रस्य शाटकं
येति । उकावितावितेि । 'उपदेशेऽजनुनासिकः—' इति उकारः
ऽशक्तद्धित' इति ककार इत्यर्थः । **स्नातं मयेति** । ष्णा शौचे ।

---

१. क्तवतुः कर्तरि N, D4. २. प्रथमत उक्ते PC., Dc3. ३. क्त क्तवतू
ष्ठा । Dc3, PC.

स्तुतस्त्वया विष्णुः । विष्णुर्विश्वं कृतवान् ।

**निष्ठायामण्यदर्थे** ॥६।४।६०॥

ण्यदर्थो भावकर्मणी । ततोऽन्यत्र निष्ठायां क्षियो स्यात् ॥

**क्षियो दीर्घात्** ॥८।२।४६॥

दीर्घात् क्षियो निष्ठातकारस्य नः स्यात् ॥ क्षीणे भावकर्मणोस्तु क्षितः कामो मया ।

---

अस्माद्भावे क्तः । **स्तुत** इति । ष्टुञ् स्तुतौ । कर्मणि कृता क्तेन कर्मणा उक्तत्वात् कर्मणि विष्णौ प्रथमैव जाता । वि कृतवानिति । कृञः क्तवतुः कर्तरि । ततः कर्तरि प्रथमा क्तत्वात् । 'न लोकाव्यय—' इति विश्वमित्यत्र न षष्ठी ।

**निष्ठायामण्यदर्थे** इति । 'ऋहलोर्ण्यत्' इति ण्यत् ण्यतोर्थो ण्यदर्थः । **भावकर्मणी** इति । 'तयोरेव' इति वचनादि

**क्षियः** । ननु क्षेरिति निर्देशो कार्ये क्षिय इति इयङा नि दीर्घः प्रतीयते । किं दीर्घग्रहणेन । मैवम् । क्षियः निष्ठायामण्यद ह्रस्वान्तस्यापि धातुकरणस्येयङा निर्देशो दृश्यते । दीर्घग्रहणम् । 'विपराभ्यां जेः' इत्येवमादौ तु धातुत्वमनु जेरित्यनुकरणे विद्यमानमप्यविवक्षितत्वाद्रूपसामान्यस्यानुव तेनेयङा न निर्देशः ।

---

१. Before it—क्षीणः $D_1$. २. निष्ठायां ण्यदिति ऋहलोर्ण्यत् इ $Dc_3$, PC.

श्र्युकः किति ॥७।२।११॥

श्रिय एकाच उगन्ताच्च परस्य कितः इण्न स्यात्
श्रितवान् । भूतः । भूतवती । क्षुतः ॥[4] ऊर्णोते
वाच्यः ॥* तेनैकाच्त्वान्नेट् । ऊर्णुतः । वृतः ।

रदाभ्यां निष्ठातो नः पूर्वस्य च दः ॥८

रेफदकाराभ्यां परस्य निष्ठातो नः स्यात् पूर्वस्य
शॄ । शीर्णः । भिन्नः ।

---

श्र्युकः । क्किलीति द्विककारको निर्देशस्तेन गक
भूष्णुरित्यत्रापि इट्निषेधार्थम् । सौत्रत्वाच्च निर्देशस्य 'श्र्यु
इत्यत्र चर्त्वस्यासिद्धत्वमनाश्रित्य रोरुत्वं न कृतम् । '
इत्यत्रापि गकारप्रश्लेषात् भूष्णुरित्यत्र गुणोपि न । उ
गकारप्रश्लेषः 'ग्लाजिस्थश्च ग्स्नुः' इति ग्स्नोर्गित्वस्या
गित्वं च स्थास्नुरित्यत्रेत्वाभावार्थमाश्रीयते इति केचिन्न
अन्ये तु 'ग्लाजिस्थश्च ग्स्नुः' इत्यत्र स्था इत्या
स्थास्नोः सिद्धत्वात् न कुत्रापि गकारनिर्देश इति वर्णयन्ति
वतीति । 'उगितश्च' इति ङीप् । ऊर्णु इति । तथा च

"वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् ।
आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात् ॥" इति ।

रदा । रेफदकाराभ्यां तकारो विशिष्यते न निष्ठ
णाह—रेफदकाराभ्यां परस्य निष्ठातस्येति । अन्य
मुदितमित्यत्रापि स्यात् । शीर्ण इति । शॄ हिंसायाम् । '
रपरः । रदाभ्या किम् । कृतः । कृतवान् । निष्ठाग्रह

---

१. D, and C drop परस्य. २. भूतम् N. ३. भूतवान् $B_2$.
it—क्षुतवान् $B_2$, $D_4$, क्षुतः dropped N. ५. निष्ठातस्य
६. °तस्य $D_4$. ७. पूर्वदकारस्य च P., $D_2$, $B_2$, $D_4$; पूर्वद
८. स्थः $Dc_3$.

संयोगादेरातो धातोर्यण्वतः ॥८।२।४३॥

यण्संयोगादेरादन्ताद् धातोर्निष्ठातस्य नः स्यात् ॥ द्रा
ग्लानः ।

ल्वादिभ्यः[2] ॥८।२।४४॥

एकविंशतेर्लूञादिभ्यो निष्ठातो[3] नः स्यात् ॥ लून
ज्या। ग्रहिज्या।[4] जीनः । दुग्वोर्दीर्घश्च ॥* दूनः । गू
पूञो विनाशे ॥* पूना यवाः । पूतमन्यत् ।

सिनोतेर्ग्रासकर्मकर्तृकस्य ॥* सिनो ग्रासः स्वयमेव ।

---

कर्ता । तः किम् । चरितम् । अत्र इटो नत्वं न । पूर्वस्य वि
परस्य मा भूत् । भिन्नवद्भ्यामिति । कृतस्यापत्यं कार्तिरि
वृद्धेर्बहिरङ्गत्वादन्तरङ्गे नत्वे क्रियमाणे रेफस्यासिद्धत्वान्नत्वं न ।

संयो । संयोग आदिर्यस्य स तथा । द्राण इति ।
कुत्सायां गतौ । संयोगादेः किम् । यातः । आतः किम् । च्यु
धातोः किम् । निर्यातः । यण्वतः किम् । स्नातः ।

ल्वादि । एकविंशतेरिति । पूञ्यतिरिक्ता ल्वादय एव ल्वाद
एते च एकविंशतिः । ते क्र्यादिगणे 'प्वादीनां ह्रस्वः' इत्यत्र
कथिताः । 'ग्रहिज्या—' इति संप्रसारणम् । जीन इति । हल
दीर्घः । दुग्वोरिति । दु गतौ । गु विष्ठोत्सर्गे । चकारान्निष्ठातस्य
पूना इति । तस्य नः । पूना यवाः । विनष्टा इत्यर्थः । सिन इ
षिञ् बन्धने । ग्रासकर्मकर्तृकस्य किम् । सिता पाशेन सूक
ग्रासोपि यदा कर्मैव स्यात् न कर्ता तदापि न । सितो ग्रासो देवद

---

१. भ्राणः D4. २. ल्वादिभ्यश्च D2, D4 B2. ३. निष्ठातस्य B2,
४. ज्या-जीनः । D4. ५. ते च PC. ६. नष्टा Dc3, Pc.

**ओदितश्च ॥८।२।४५॥**

ओदितो धातोर्निष्ठातस्य नः स्यात् ॥ भुजो[2] । भु
ओहाक् । प्रहीणः ।[3] स्वादय ओदितः । षूङ् दूङ् दीङ्
धीङ् मीङ् रीङ् लीङ् व्रीङ् नवैते ओदितः स्युः । सु
सूनवान् । दूनः । ओदिन्मध्ये पाठबलान्नेट् । उड्डीनः ।

**स्फायः स्फी निष्ठायाम् ॥६।१।२२॥**

स्फायः स्फी स्यान्निष्ठायाम् ॥ स्फीतः । वेति केचि
स्फातः ।

**द्रवमूर्तिस्पर्शयोः श्यः ॥६।१।२४॥**

द्रवस्य मूर्तौ काठिन्ये स्पर्शे चार्थे श्यैङः संप्रस
स्यान्निष्ठायाम् ॥

---

**ओदि** । प्रहीण इति । 'घुमास्था' इतीत्वम् । **स्वादय**
धातुसूत्रम् । षूङ् प्राणिप्रसवे । दूङ् परितापे । दीङ् क्षये ।
विहायसा गतौ । धीङ् अनादरे । मी हिंसायाम् । रीङ् स्रव
लीङ् श्लेषणे । व्रीङ् वरणे । **ओदिन्मध्य** इति । अयं भ
यदा डीङ इट् स्यात् तदेटा व्यवहितत्वात्तकारस्य धातोः पर
स्यात् । तदा तस्य नत्वं न स्यात् । तत ओदिन्मध्ये पाठो
स्यादिति । दीनः । धीनः । मीनः । रीणः । लीनः । व्रीणः ।

**स्फायः** । स्फायी वृद्धौ । **वेति केचिदिति** । त
**मुग्धबोधे** । 'स्फायः स्फी वा' इति ।

**द्रव** । द्रवावस्थया उत्तरावस्थाविशेषः काठिन्य
द्रवशब्देनोच्यत इत्याह—**द्रवस्य मूर्तौ काठिन्य** इति ।

---

१. तो D₁, N. २. भुजो कौटिल्ये D₂, D₄. N₁. ३. After it—कु
इति णत्वम् B₂, D₄. ४. डीङ् वीङ् । D₂. ५. Dropped N. ६.
dropped B₂. ७. Dropped N₁.

श्योऽस्पर्शे ॥८।२।४३॥

श्यैङो निष्ठातस्य नः स्यादस्पर्शेऽर्थे ॥ हल इति दीर्घः । ोनं घृतम् । अस्पर्शे किम् । शीतं जलम् । द्रवमूर्तिस्पर्शयोः केम् । संश्यानो वृश्चिकः । शीतात् संकुचित इत्यर्थः ।

प्रतेश्च ॥६।१।२५॥

प्रतिपूर्वस्य श्यः संप्रसारणं स्यान्निष्ठायां काठिन्ये स्पर्शे ॥[1] तिशीनः ।

विभाषाभ्यवपूर्वस्य ॥६।१।२६॥

अभ्यवपूर्वस्य श्यो निष्ठायां वा संप्रसारणं स्यात् ॥ आभि-यानमभिशीनं घृतम् । अवश्यानः अवशीनो वृश्चिकः । अभ्यवे-युक्तेर्नेह । समवश्यानः ।

---

श्यः । श्यैङ् गतौ । अस्य ।

**विभाषा** । द्रवमूर्तिविषये प्राप्ते पूर्वेणान्यत्राप्राप्ते च विभाषेयम् । भ्यवेत्युक्तेरिति । पदैकदेशेन पदं लक्ष्यते । अभ्यवपूर्वस्येत्यु-क्तरित्यर्थः । अयं भावः । पूर्वग्रहणाद्यत्र समुदायस्याभ्यवपूर्वता तत्रैव यात् । अन्यथा विभाषाभ्यवाभ्यामित्येवोच्येत । समवश्यान इत्यत्र [ श्यैङो यद्यपि अवपूर्वता तथापि समुदायस्य नावपूर्वता । तस्य पूर्वत्वात् । तस्मादत्र संप्रसारणं न । वृत्तिकारमतेन नेदं पूर्वग्रहण-योजनम् । किंतु अभिसंशीनम् । अभिसंश्यानम् । अवसंशीनम् नवसंश्यानमिति । एवं चेत् समवश्यान इत्यत्रापि विकल्प यात् । नैवम् । विभाषाग्रहणस्य व्यवस्थितविकल्पत्वान्नेति ।

---

१. निष्ठायाः तस्य $D_1$. २. After it—च $D_1$; वाच्ये P.

**अञ्चोऽनपादाने ॥८।२।४८॥**

अञ्चो [1]निष्ठातस्य नः स्यान्न त्वपादाने । पादाने किम् । उदक्तमुदकं कूपात् ।

**दिवोऽविजिगीषायाम् ॥८।२।४९**

दिवो निष्ठातस्य नः स्यादविजिगीषायाम् विकल्पितेट्कत्वात्—

**यस्य विभाषा ॥७।२।१५॥**

यस्य क्वचिद् [2]विभाषया इड् विहितस्ततं स्यात् ॥ द्यूनः । विजिगीषायां तु द्यूतम् । ओव्र स्कोरिति [4]सलोपः । [5]नत्वम् । तस्यासिद्धत्वात् निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वक्त भावान्न षत्वम् । [6]वृक्णः ।

---

अञ्चः । अक्तमित्येतत्तु अञ्जे रूपम् ।

दिवः ।

यस्य । द्यून इति । 'च्छ्वोः शूट्—' इ तत्र हि जिगीषयाक्षपातनादिकं क्रियते । ' संप्रसारणमिति भावः । नत्वमिति । ' तस्यासिद्धत्वादिति । पूर्वत्रासिद्धन्यायेन । षत्वे 'व्रश्च—' आदिना । कुत्वं 'चोः कुः' इति । च विधीयमाने प्राप्ते । तत्र 'निष्ठादेश—' इत्यनेन सिद्धत्वात् झलोभावात् न भवति । कुत्वं तु भवत स्यासिद्धत्वादेवेत्याह—**निष्ठादेश** इत्यादिना ।

---

१. निष्ठायास्तस्य $D_1$. २. विभाषा इड् $D_4$, D
३. After it—इति संप्रसारणम् $B_2$. ४. लोपः $D_4$,
$D_1$, $D_3$, C, $B_1$, $B_2$, N. ६. After it—कुत्वं प्र

**निर्वाणोवाते ॥८।२।५०॥**

अयं निष्ठायां निपात्यते न तु वाते वाच्ये ॥ निर्वा
णुनिर्वा । वाते तु निर्वातो वातः ।

**शुषः कः ॥८।२।५१॥**

शुषो निष्ठातस्य कः स्यात् ॥ शुष्कः ।

**पचो वः ॥८।२।५२॥**

पचेर्निष्ठातस्य वः स्यात् ॥ पक्वः ।[२]

**क्षायो मः ॥८।२।५३॥**

[३]क्षायः परस्य निष्ठातस्य मः स्यात् ॥ क्षामः । क्षाम

**प्रस्त्योऽन्यतरस्याम् ॥८।२।५४॥**

प्रपूर्वात् स्त्यायतेर्निष्ठातस्य मो वा स्यात् ॥[४]

**स्त्यः प्रपूर्वस्य ॥६।१।२३॥**

प्रात् स्त्यः संप्रसारणं स्यान्निष्ठायाम् ॥ प्रस्तीमः ।

---

निर्वा । निस् पूर्वस्य वा इत्यस्य नत्वं निपात्यते । यत
वाच्य इति व्याख्यातम् ततो निर्वाणो दीपो वातेनेति सिद्धम् ।[६]

शुषः । शुष शोषणे ।

क्षायः । क्षै क्षये ।

स्त्यः । स्त्य इति । स्त्यै ष्ट्यै शब्दसंघातयोरि
द्वयोर्धात्वोः स्त्यारूपापन्नयोर्निर्देशः । मत्वेत्यादि । 'यण्वतः' 
'संयोगादेरातो धातोर्यण्वतः' इति सूत्रं लक्ष्यते । तस्य त्रिपादीपठि

---

१. Dropped N. २. After it—क्षै क्षये $D_1$. ३. क्षै इत्यस्मात्
C; क्षैपरस्य P. ४. After it—स्त्यै संहतौ ध्वनौ च $D_1$. ५. Befo
हल इति दीर्घः । $D_2$, $B_2$, $D_4$. ६. After it—भवति PC., $Dc_3$.

भावपक्षे यण्वत इत्यस्य संप्रसारणं प्रत्यसिद्धत्वान्ने
प्रस्तीतः । प्रात् किम् । स्त्यानः ।

**अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः ॥**

एते निष्ठान्ता निपात्यन्ते न चेत् प्रादेः परे
ञिफला । फुल्लः । क्षीबो मत्तः । कृशस्तनुः । परिकृशश्च
नीरोगः । अनुपसर्गात् किम् ।

**आदितश्च ॥७।२।१६॥**

आकारेतो निष्ठाया इण् न स्यात् ॥

**ति च ॥७।४।८९॥**

तादौ किति परे चरफलोरत उत् स्यात् ॥

---

दसिद्धत्वम् । तस्मात् पूर्वं संप्रसारणं तस्मिञ्ज्ञाते यण्व
नत्वं नेति भावः । पूर्वग्रहणं प्रसंस्तीत इत्यत्र यथा स्यादि
तस्मिन् हि सति ग्रन्थाधिक्यादर्थाधिक्यमिति प्रपूर्वस्य
स्यापि स्यात् ।

अनु । फुल्ल इति । ञिफला विशरणे । अस्मात्परस
लकारो निपात्यते उत्वमिडभावश्च । क्तवत्वन्तस्याप्य
फुल्लवान् । क्षीबकृशोल्लाघा इति । क्षीबृ मदे । कृश
आभ्यां लाघृ शक्तौ अस्माच्च उत्पूर्वात्परस्य निष्ठातस्य लो
निपात्यते । कृते वा इटि इत् इत्यस्य लोपो निपात्यते । प
अयं भावः । परिकृश इत्यत्र यः परिशब्दः स क्रियान्तर
प्रकृतिं प्रत्यनुपसर्ग एव । तथा हि । परिगतः कृशः परि

आदि । चकारोनुक्तसमुच्चयार्थः । तेन आश्वस्तः
योगविभागः किम् । 'आदितश्च विभाषा भावादिकर्म

---

१. नाभाव: $B_2$. $D_4$. २. Before it—परेश्च $D_3$, $D_4$, $B_2$ परिकृशः N. ३. °फलयो° $D_2$. ४. लो $Dc_3$.

वितः । प्रक्लशितः । प्रलावितः ॥ उत्फुल्लसंफुल्लयोरुप-
ानम् ॥

**नुदविदोन्दत्राघ्राह्रीभ्योन्यतरस्याम् ॥८।२।५६॥**

एभ्यो निष्ठातस्य नो वा स्यात् ॥ नुन्नः । नुत्तः । विद
रणे । विन्नः । वित्तः । उन्दी क्लेदने ।

**श्वीदितो निष्ठायाम् ॥७।२।१४॥**

श्वयतेरीदितश्च निष्ठायामिण् न स्यात् ॥ उन्नः । उत्तः ।
: । त्रातः । घ्राणः । घ्रातः । ह्रीणः । ह्रीतः । वेत्तेस्तु
तः । विद्यतेस्तु विन्नः ।

---

यम् । अन्यत्र भावादिकर्मभ्यां 'यस्य विभाषा' इति निषेधः
। सत्यं ज्ञापनार्थमेतज् ज्ञाप्यते यदर्थस्य विभाषा तदर्थस्यैव
धः "। तेन 'विभाषा गमहनविदविशाम्' इत्यत्र विदेर्लाभार्थस्य
श्रेति ज्ञानार्थस्य निषेधो न । विदितः । विदितवानिति । प्रक्षीवित
ो 'आर्धधातुकस्य—' इतीट् ।

नुद । ह्रीत्यस्याप्राप्तमितरेषां च नित्यप्राप्तं विकल्प्यते । उन्दी
ईदित्वप्रदर्शनार्थमस्य पाठः ।

श्वीदितः । वेत्तेस्त्विवति । विद ज्ञाने अस्य । विद्यतेरिति ।
सत्तायाम् अस्य । तथोक्तम्—

"वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते ।
विन्तेर्विन्नश्च वित्तश्च भोगे वित्तश्च विन्दतेः ॥" इति ।

---

Before it—लाघ सामर्थ्ये N. २. विचारे N. ३. तु dropped N, ४. हि वक्तव्यम् PC., $Dc_3$. ५. After it इति $Dc_3$.

न ध्याख्यापॄमूर्छिमदाम् ॥८।२।५

एभ्यो निष्ठातस्य नो न स्यात् ॥ ध्या
पूर्तः । राल्लोपः । मूर्तः । मत्तः ।

वित्तो भोगप्रत्यययोः ॥८।२।५८।

विन्दतेर्निष्ठान्तस्य निपातोयम् भोग्ये प्रत
धनम् । वित्तः पुरुषः । अनयोः किम् । विन्नः ।

भित्तं शकलम् ॥८।२।५९॥

भिन्नमन्यत् ॥

ऋणमाधमर्ण्ये ॥८।२।६०॥

एतन्निपात्यमाधमर्ण्यव्यवहारे ॥ ऋतमन्यत

---

न ध्या । 'रदाभ्याम्—' इति 'संयोगादेः—
नत्वस्य निषेधोयम् ।

वित्तः । विद्लृ लाभे । अस्यैव ग्रहणमित्याह-
भुज्यत इति भोगः । प्रतीयत इति प्रत्ययः । इत्येवं वि
भोग्ये प्रतीते चार्थे इति । वित्तं धनमिति । ता
भोग्यं भवति ।

ऋण । ऋ इत्येतस्माद्धातोर्निष्ठातकारस्य नक
आधमर्ण्य इति । अधम ऋणे अधमर्णः । अस्म
सप्तम्यन्तोत्तरपदे समासः । तस्य भाव आधमर्ण्यम् ।
पलक्षितो व्यवहारो लक्ष्यत इत्याह—आधमर्ण्ये इ
इत्यपि सिद्धम् । ऋतमन्यदिति । सत्यमित्यर्थः ।

---

१. भोगे $B_3$, $D_4$. २. विन्नम् $D_3$, $B_2$.

**इण् निष्ठायाम्** ॥७।२।४७॥

निरः कुषो निष्ठाया इट् स्यात् ॥ निःकुषितः[2] ।

**वसतिक्षुधोरिट्** ॥७।२।५२॥

आभ्यां क्त्वानिष्ठयोर्नित्यमिट् स्यात् ॥ उषितः । क्षुधितः ।

**अञ्चेः पूजायाम्** ॥७।२।५३॥

पूजार्थादञ्चेः[4] क्त्वानिष्ठयोरिट् स्यात् ॥ अञ्चितः । गतौ
क्तः ।

**लुभो विमोहने** ॥७।२।५४॥

लुभः क्त्वानिष्ठयोरिट् स्यान्न तु गार्ध्ये[6] ॥ लुभितः ।
र्ध्ये लुब्धः ।

---

इण् । कुषि निष्कर्षे । 'इड्' इत्यनुवर्तमानेऽपि इड्ग्रहणं
र्थम् । सूत्रारम्भस्तु 'यस्य विभाषा' इत्यस्य बाधार्थः ।

वसति । वस निवासे । क्षुध बुभुक्षायाम् । अनुदात्तत्वादिट्—
धे प्राप्ते वचनम् । पुनरिड्ग्रहणं नित्यत्वार्थम् । विकरणो
र्थ एव । वस्तेस्तूदात्तत्वाद् भवितव्यमेवेटा । उषित इति ।
दित्वात् संप्रसारणम् । 'शासिवसि—' इति षः ।

अञ्चेः । 'उदितो वा' इति क्त्वाप्रत्यये विकल्पे प्राप्ते निष्ठा-
त्र 'यस्य विभाषा' इति निषेधे प्राप्ते वचनम् । अञ्चित इति ।
ञ्चेः पूजायाम्' इति न्लोपाभावः ।

लुभः । 'तीषसह—' इति क्त्वायां विकल्पे निष्ठायां निषेधे
वचनम् ।

---

निष्ठायां C. २. निष्कुषितः D₂, P, N. ३. D₁, drops it. ४. °दञ्चतेः
५. D₂ drops it. ६. गार्ध्ये तु B₂, N, D₄.

**क्लिशः क्त्वानिष्ठयोः ॥७।२।५०॥**

क्लिशः परयोरेतयोरिड् वा स्यात् ॥ क्लिशितः । क्लिष्टः ।
वमूजप्‍याश्वसो निष्ठाया इड् वेति केचित् ॥ वमितः । अनुनासिकस्य क्वीति दीर्घः । वान्तः । जापितः । जप्तः । विश्वसितः
विश्वस्तः । आश्वसितः । आश्वस्तः ।

**पूङश्च ॥७।२।५१॥**

पूङः क्त्वानिष्ठयोरिड् वा स्यात् ॥

**पूङः क्त्वा च ॥१।२।२२॥**

पूङः क्त्वा निष्ठा च सेट् किन्न स्यात् ॥ पवितः । पूतः ।

---

क्लिशः । क्लिशू विबाधने इत्यस्य क्त्वायां विकल्पः सिद्धः । निष्ठायां 'यस्य विभाषा' इति निषेधः स्यात् तदर्थं निष्ठाग्रहणम् । [1]क्लिश उपतापे इत्यस्य क्त्वायां निष्ठायां च नित्यमिट् स्यात् तदर्थं क्त्वाग्रहणम् । वमूजपीति । विपूर्व आङ्पूर्वश्च श्वसिः ।

पूङ । 'श्र्युकः किति' इति उगित्त्वान्निषेधे प्राप्ते विकल्पार्थं वचनम् । सानुबन्धोच्चारणं पूञ्निवृत्त्यर्थम् ।

पूङः । द्वयोर्विभाषयोर्मध्ये विधिः स नित्य इति नित्योऽयं विधिः । क्त्वाग्रहणमुत्तरार्थम् । अस्मात् परस्य क्त्वाप्रत्ययस्य 'न क्त्वा सेट्' इत्येव निषेधः सिद्धः । सानुबन्धग्रहणं पवितः पवितवान् इत्यत्र यङ्लुगन्तात् प्रतिषेधो मा भूदित्येवमर्थं न तु पूञ्निवृत्त्यर्थम् । यतस्तस्मात् परयोः क्त्वानिष्ठयोः सेटोरसंभवः । 'श्र्युकः किति' इतीट्प्रतिषेधात् ।

---

१. यत् क्लिश PC.

**निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः ॥१।२।१९॥**

एभ्यः सेण्निष्ठा किन्न स्यात् ॥ शयितः ।[1]

आदिकर्मणि निष्ठा वक्तव्या ॥*

**आदिकर्मणि क्तः कर्तरि च ॥३।४।७१॥**

आदिकर्मणि यः क्तः स कर्तरि स्यात् चाद् भावकर्मणोः॥

**विभाषा भावादिकर्मणोः ॥७।२।१७॥**

भावे आदिकर्मणि च आदितो निष्ठाया[2] इड् वा स्यात् ॥ प्रस्वेदितश्चैत्रः । स्वेदितं तेन । मेदितम् । क्ष्वेदितम् । धर्षितम् । पक्षे । प्रस्विन्नः । स्विन्नं तेनेत्यादि ।[3]

---

**निष्ठा** । शीङ् स्वप्ने । ञिष्विदा गात्रप्रक्षरणे । ञिमिदा स्नेहने । ञिक्ष्विदा[4] स्नेहमोचनयोः । ञिधृषा प्रागल्भ्ये । यङ्-लुक्ग्रहणं मा भूदिति शीङ् अनुबन्धेन निर्दिष्टः । शयितः । **आदिकर्मणीति** । आदिभूतक्रियाक्षण आदिकर्म । **प्रस्वेदितश्चैत्र** इति । कर्तरि क्तः । अनेन कर्तुरुक्तत्वात् चैत्र इत्यस्य प्रथमा । प्रशब्द आदिकर्म द्योतयति । **स्वेदितं तेनेत्यादि** । भावे क्तः । किन्त्वाभावात् सर्वत्र गुणः । भावक्तत्वादिट् । **पक्षे** इति । इडभावपक्षे इत्यर्थः । **प्रस्विन्न** इति । कर्तरि क्तः । इडभावात् केत्वनिषेधो न । **स्विन्नं तेनेति** । भावे क्तः । आदिना प्रमिन्नः । प्रमिन्नं तेन । प्रक्ष्विण्णः । प्रक्ष्विण्णं तेन । प्रधृष्टः । प्रधृष्टं तेन ।

---

१. After it—प्रस्वेदितः । प्रमेदितः । प्रक्ष्वेदितः । प्रधर्षितः । $D_2$, $B_2$, $D_4$. २. निष्ठायां $B_2$. ३. For प्रस्विन्नः । स्विन्नं तेनेत्यादि प्रस्विन्नं तेनेत्यादि $D_1$, $D_3$, C, $B_1$. ४. ञिष्विदा $Dc_1$.

मृषस्तितिक्षायाम् ॥१।२।२०॥

क्षमार्थान्मृषेः सेण्निष्ठा किन्न स्यात् ॥ म
तितिक्षायां किम् । अपमृषितं वाक्यम् ॥

उदुपधाद् भावादिकर्मणोरन्यतरस्याम्
॥१

उकारोपधात् परा भावादिकर्मणोः सेण्निष्ठा किन्न
द्योतितम् । द्युतितं तेन । प्रद्योतितः । प्रद्युतितः । म
मिष्टिः । नेह । गुधितम् ।

निष्ठायां सेटि ॥६।४।५२॥

सेटि निष्ठायां परतो णेर्लोपः स्यात् ॥ भ

---

मृष । क्षमार्थादिति । क्षान्त्यर्थादित्यर्थः । अपमृ
अपमृष्टमित्यर्थः । अनेकार्थत्वाद्धातूनामेतल्लभ्यते । अनेकार्थ
तितिक्षाग्रहणाल्लभ्यते । अन्यथा तद् व्यर्थं स्यात् । व्यवच्छेद

उदु । द्योतितमिति । भावे क्तः । प्रद्योतित इति । क
गुधितमिति । गुध परिवेष्टने । दैवादिकः ।

निष्ठा । सेटि किम् । संज्ञपितः पशुः । 'सनी
इति ज्ञपेरिटि विकल्पिते 'यस्य विभाषा' इति इण्निषेधः ।
'णेरनिटि' इति णिलोपः स्यात् । मैवम् । सेड्ग्रहणसाम
न । ननु 'यस्य विभाषा' इत्यत्रैकाच इत्यनुवृत्तेर्नित्यमत्रे
ततश्च सेड्ग्रहणं व्यर्थं स्यात् । एवं तर्हि कालावधारण
कृते णिलोपो यथा स्यादिति । यदि सेड्ग्रहणं न स्यात्तद

---

१. °न्मृषः C., P, N. २. किन्ना स्यात् C., वा किन्न स्यात
३. प्रद्युतितो वा D4. ४. °रिड्विकल्पात् PC., Dc3. ५.
PC., Dc3. ६. °ग्रहणं PC., Dc3. ७. °सामर्थ्यात्तत्रापि न.

ाविितवान् । श्वीदित इति नेट् । संप्रसारणम् । शूनः । दीप्तः ।
ढ़ । गूढः । वेनु । उदितो वेति विकल्पितेट्त्वात् निष्ठायां नेट् ।
तः ।[2] ततः । पेतः सनि वेट्[4]कत्वादिडभावे प्राप्ते श्रि[5]तातीत-
तितेति निपातनादिट् । पतितः । अनेकाच्त्वादिट् । दरिद्रितः ।
ाग्रोविचिण्णाति गुणः । जागरितः । आदिकर्मणि निष्ठायां
किरनिड्वेति शौ[6]नगाः । शक्तः शकितोऽचितुं शिवस्तेन ।

---

सङ्क्त्वेनेटि अकृते एव णिलोपः स्यात् । एवं च सति कारित-
ात्यत्र 'एकाच उपदेशेऽनुदात्तात्' इतीण्निषेधः प्रसज्येत ।
प्रसारणमिति । 'वचिस्वपि—' इति । शून इति । टुओश्वि
तिवृद्ध्योः । 'ओदितश्च' इति नः । 'हलः' इति दीर्घः ।
प्त इति । दीपी दीप्तौ । गूढ इति । गुहू संवरणे । ऊदित्वेन वेट्त्वात्
यस्य विभाषा' इतीट्प्रतिषेधः । वनु इति । वनु बोधने । उदित्त्व-
र्शनार्थं पाठः । वत इति । 'अनुदात्तोपदेश—' इति नलोपः ।
र इति । तनु विस्तारे । पूर्ववत् । पतेरिति । 'तनिपतिदरिद्रातिभ्यः
नो वा इड् वाच्यः' इति वेट्त्वादित्यर्थः । अनेकाच्त्वादिति ।
रेद्रातेः सनि वेट्त्वेपि 'यस्य विभाषा' इति निषेधो न । तत्र
एकाचः' इत्यनुवृत्तेरिति भावः । जागरित इति । जागृ निद्राक्षये ।
क्त इति । शक्लृ शक्तौ । कर्मणि क्तः ।

---

१. वनु उदितो वेति क्त्वि विकल्पित उदित्वान्निष्ठायां नेट् $D_1$; वनु उदितो
ते क्त्वि विकल्पितेट्त्वा° $D_4$. २. After it—मतः $D_2$; मतः । सतः $B_2$;
ः । यतः । N; मतः before पतेः $D_4$. ३. पतेः dropped $B_2$, $D_4$
वेट्त्वा° $B_2$. ५. द्वितीयाश्रिता° $B_2$, ६. सौनगः C; भसौनागः $D_1$;
नागाः $B_2$, N; शौनागः $D_4$. ७. °तीट्प्रतिषेधः $Dc_3$, PC.

**क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्ट-**
**बाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु ॥७।२।१८**

मन्थादिष्वर्थेषु[1] क्षुब्धादयोऽष्टौ क्तान्ता निपात्यन्ते ॥ फाण्टमनायासः कषायभेदः[2] ।[3] अन्यत्र क्षुभितम् । स्वनितम् । ध्वनितम् । लगितम् । म्लेच्छितम् । विरेभितम्[4] । फाणितम् । वाहितम् ।

**धृषिशसी वैयात्ये ॥७।२।१९॥**

एतौ निष्ठायामविनये अनिटौ स्तः ॥ धृष्टः[5] । विशस्तः[6]

---

क्षुब्ध । क्षुभ संचलने । अस्य इडभावो निपात्यते मन्थे वाच्ये एवमुत्तरेष्वपि निपात्यते इडभावः । क्षुब्धो मन्थः । क्षुब्धा गिरिनदीत्याद्युपमानात् । स्वन शब्दे । स्वान्तं मनः । ध्वन शब्दे । ध्वान्तं तमः । लगिर्गत्यर्थः । लग्नं सक्तम् । निपातनादेनत्वम् । म्लेच्छ अव्यक्तायां वाचि । इत्वं निपातनादेव । म्लिष्टमविस्पष्टम् । रेभृ शब्दे । इत्वं निपातनात् । विरिब्धः स्वरः । फण गतौ । फाण्टमनायासः कषायभेद इति । त्रिफलादीनां कषायसाधनमित्यर्थः । यदपक्वमपिष्टमुदकसंपर्काद्विभक्तरसमीषदुष्णं तदिहानायासशब्देनोपलक्ष्यते । अल्पप्रयाससाध्यत्वादित्यर्थः । बाहृ प्रयत्ने बाढम् भृशम् । अन्यत्रेति । अर्थान्यत्व इत्यर्थः ।

धृषि । अविनये धृष्टत्वे इत्यर्थः । विशस्त इति । शसु हिंसायाम् । तत्र धृषेः 'आदितश्च' इति शसेरुदितः 'यस्य विभाषा' इति निषेधे सिद्धे नियमार्थं वचनम् । वैयात्ये एव नान्यत्रेति वैयात्ये किम् । धर्षितः । विशसितः ।

---

१. मन्थादिष्वष्टसु $D_1$, P. २. काषाय° $D_2$. ३. Before it—क्षुभ संचलने । स्वन शब्दे । ध्वन शब्दे । लगे संगे । म्लेच्छ अव्यक्ते शब्दे । रिभ सौत्रो विपूर्वः । फण गतौ । वाह प्रयत्ने । $D_2$, $B_2$, $D_4$ ( रिभ for रि & for वाह $D_4$.) ४. विरिभितम् । फणितम् । $D_4$. ५. Before it—ञिधृष प्रागल्भ्ये । $B_2$, $D_4$. ६. Before it—शसु हिंसायां विपूर्वः $B_2$, $D_4$.

दृढः स्थूलबलयोः ॥७।२।२०॥

स्थूले बलवति चायं निपातः ॥ दृंहितोन्यः ।[1]

प्रभौ परिवृढः ॥७।२।२१॥

परिवृंहितोन्यः ।[2]

कृच्छ्रगहनयोः कषः ॥७।२।२२॥

कषो निष्ठायामिण् न स्यात् कृच्छ्रगहनयोः ॥ कष्टोग्निः । वनम् ।[3] कषितमन्यत् ।

---

दृढः । बलवतीति । मतुब्निर्देशेन सूत्रे बलशब्दो मत्वर्थी-
ारान्त इति दर्शयति । दृहि वृद्धौ इत्यस्य धातोः क्तप्रत्यये
ावः । हकारनकारयोर्लोपः परस्य ढत्वं च निपात्यते । ननु
पः किमिति निपात्यते परस्य ढत्वे 'हो ढः' इति च ढत्वे
ढे लोपः' इति लोपः स्यादेव । मैवम् । ढलोपे हि सति द्रढिमे-
ौ पूर्वत्रासिद्धन्यायेनासिद्धत्वात् 'र ऋतो हलादेर्लघोः' इति रत्वं
ात् । इह च परिद्रढय्य गत इति 'ल्यपि लघु पूर्वात्—' इत्य-
शो न स्यात् । इह च परिवृढस्यापत्यं पारिवृढी कन्येति गुरूपोत्तम-
गः ष्यँङ् स्यात् । तस्मात् पूर्वत्रासिद्धनिवृत्त्यर्थं हलोपनिपातनम् ।

प्रभौ । पूर्वेण समानमेतन्निपातनम् । वृहि वृद्धौ । अस्य प्रभौ
र । संग्रामयतेरेव सोपसर्गादुत्पत्तिरिष्यते नान्यस्मात् । तथा सति
वृढयतीति 'तिङ् तिङः' इति निघातः परिव्रढय्य गत इत्यत्र च
ाब्दस्य क्त्वाप्रत्ययान्तेन सह समासे सति ल्यबादेशश्च सिध्यति ।

कृच्छ्र । कष हिंसार्थः । कृच्छ्रं दुःखं तत्करणं च । कषित-
दिति । सुवर्णादिकम् ।

---

After it—दृहि वीसौ $D_2$; दृंहितोन्यः । दृहि वीसौ $D_4$, $B_2$ (वृद्धौ $B_2$);
न्यः । N. २. After it—वाहि वृद्धौ । परिपूर्वः $D_4$ $D_3$, $B_2$. ३. After
कष हिंसायाम् $D_2$, $B_2$, $D_4$. ४. ष्यङ् $Dc_3$, PC.

## घुषिरविशब्दने ॥७।२।२३॥

घुषेर्निष्ठायामिण् न स्यात् ॥ घुष्टा रज्जुः ।[2] अविशब्द किम् । घुषितं वाक्यम् ।

## अर्देः संनिविभ्यः ॥७।२।२४॥

एतत्पूर्वादर्देर्तेर्निष्ठायामिण् न स्यात् ॥ समर्ण्णः । न्यर्ण्णः व्यर्ण्णः । अर्दितोन्यः ।

## अभेश्चाविदूर्ये ॥७।२।२५॥

अभिपूर्वादर्देर्निष्ठायामिण् न स्यात् सामीप्ये ॥ अभ्यर्णम् अभ्यर्दितमन्यत् ।

---

घुषि । घुषिर् विशब्दने इति चुरादिः । घुषिर् शब्दार्थे इति भ्वादिः । द्वयोरपि ग्रहणम् । विशब्दनं स्वाभिप्रायस्य शब्देनाविष्करणम् । विशब्दनप्रतिषेधश्च ज्ञापकश्चुरादिणिच् विशब्दनार्थस्यानित्य इति । तेनायमपि प्रयोगः सिद्धः । जुघुषुः पुष्पमाणवा इति । अपघुषितं वाक्यमिति । शब्देन प्रकटीकृताभिप्रायमित्यर्थः ।

अर्देः । अर्द गतौ याचने च ।

अभेः । विदूरं विप्रकृष्टम् । ततोन्यदविदूरम् । तस्य भाव आविदूर्यम् । ब्राह्मणादित्वात् ष्यञ् । एतस्मादेव निपातनात् ' न नञ्पूर्वात् तत्पुरुषात् ' इति ष्यञः प्रतिषेधो नेति चेतसि कृत्वाह—सामीप्ये इति ।

---

१. घुषिर्निष्ठायामनिट् स्यात् D₂. २. After it—घुष स्तुतौ D₂, D₄ ३. °दर्देर्नि° D₂, P. ४. D₂ drops it. ५. °दर्देतोर्नि° C. ६. स्यान्न D₂; स्यात् dropped D₄ ७. [illegible]र्णः । N. ८. शब्दने PC, Dc₃.

**णेरध्ययने वृत्तम् ॥७।२।२६॥**

ण्यन्ताद्वर्ततेर्वृत्तमिति निपात्यते अध्ययनेर्थे ॥ वृत्तं छन्द-
श्छात्रेण । वर्तितमन्यत् ।

**शृतं पाके ॥६।१।२७॥**

श्रा इत्यस्य शृभावो निपात्यते निष्ठायां क्षीरहविषोः
के ॥ शृतं क्षीरम् । श्राणमन्यत् ।

**वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः**
**॥७।२।२७॥**

एते णिचि निष्ठान्ता वा निपात्यन्ते ॥ पक्षे । दमितः ।
मितः । पूरितः । दासितः । स्पाशितः । छादितः । ज्ञापितः ।

**रुष्यमत्वरसंघुषास्वनाम् ॥७।२।२८॥**

एभ्यो निष्ठायामिण् न स्याद्वा ॥ रुष्टः । रुषितः ।

---

णेः । इडभावो णिलुक् च निपात्यते ।

शृतं । श्रा पाके ।

वा दान्त । इट्प्रतिषेधो णिलुक् च निपात्यते । क्वचिदुपधा-
ह्रस्वं च । दमु शमु उपशमे । पूरी आप्यायने । दसु उपक्षये ।
[illegible] बाधनस्पर्शनयोः । छद अपवारणे । ज्ञप मारणतोषणनिशामनेषु ।
मित इति । 'मितां ह्रस्वः' इति ह्रस्वः । 'निष्ठायां सेटि'
णिलोपः ।

रुष्य । रुष रोगे । अम गत्यादिषु । अम रोगे अस्य चौरादिकस्य ग्रहणं
'एकाचः' इत्यधिकारात् । ञित्वरा संभ्रमे । संपूर्वः पूर्वोक्तो

---

१. क्षीरं हविर्वा $B_2$. २. Dropped in $D_1$, P. ३. संपूर्वोक्तो घुषिः PC.

आन्तः । अमितः । तूर्णः । त्वरितः । संघुष्टः । 
आस्वान्तः । आस्वनितः ।

हृषेर्लोमसु ॥७।२।२९ ॥

हृषेर्निष्ठायामिड्वा स्याल्लोमस्वर्थे ॥ हृष्टं हृषि
विस्मितप्रतिघातयोश्च ॥* हृष्टो हृषितो मैत्रः ।
प्रतिहतो वेत्यर्थः ।

अपचितश्च ॥७।२।३०॥

चायतेर्निपातोयं वा । अपचितः । अपचायितः

---

घुषिः । आङ्पूर्वः स्वनिः । आन्त इति । अनुनासिकस्य 
तूर्ण इति । 'ज्वरत्वर—' इत्यूठ् । संपूर्वस्य घुषेरपि 
परत्वादयं विकल्पः स्यात् । संघुष्टौ दम्यौ । संघुषितौ दम्यौ
पूर्वस्य आस्वान्तः । आङ्पूर्वस्य स्वनेरपि परत्वादयं विकल
स्वान्त—' इति निपातनं बाधते । आस्वनितं मनः । आस्व

हृषेः । हृषु अलीके इत्युदित्त्वान्निष्ठायामनिट् । हृष तु
तयोर्द्वयोर्ग्रहणमित्युभयत्र विभाषेयम् । लोमानि मूर्धजानि 
सामान्येन गृह्यन्ते । यथा लोमनखे स्पृष्ट्वा शौचं क
तद्विषये हर्षे वर्तमानो हृषिर्लोमसु वर्तत इत्युच्यते । हृष्टमि
र्थाकर्मक—' इति कर्तरि क्तः ।

अप । चायृ पूजानिशामनयोः । अयं योगश्चिनो
वृत्तियो नेच्छति तं प्रत्यारभ्यते । यस्त्विच्छति तं प्रति न ।
चिनोतेरपचितः स्यात् चायतेस्त्वपचायित इति ।

---

१. आमितः N. २. °निष्ठाया P. ३. °मिण् न स्याद्वा D
४. हृषितो वा $D_2$. ५. तथा चोक्तं PC, $Dc_3$.

प्यायः पी ॥६।१।२८॥

प्यायतेर्निष्ठायां पीभावः स्यात् ॥ पीनं मुखम् । स्वाङ्गा-यत्र वा ॥ प्यानः पीनः स्वेदः । सोपसर्गस्य न ॥ प्रप्यानः । ङ्पूर्वस्यान्धूधसोः स्यादेव । आपीनोन्धुः । आपीनमूधः ।

ह्लादो निष्ठायाम् ॥६।४।९५॥

ह्लादो ह्रस्वः स्यान्निष्ठायाम् ॥ प्रह्लन्नः ॥[1]

द्यतिस्यतिमास्थामित्ति किति ॥७।४।४०॥

एषामिकारोन्तादेशः स्यात्तादौ किति परे ॥ दितः । तः । मितः । स्थितः ।

---

प्यायः । ओप्यायी वृद्धौ । स्वाङ्गादित्यादि व्यवस्थितविभाषा-तानात् लभ्यते ।

ह्लादः । ह्लाद सुखे । प्रह्लन्न इति । 'रदाभ्याम्—' इति नः ।

द्यति । दो अवखण्डने । षोन्तकर्मणि । मा माने । माङ् । मेङ् प्रतिदाने ।[3] त्रयाणां ग्रहणम् । गामादाग्रहणेष्वविशेषात् । गतिनिवृत्तौ । आद्यस्य 'दो दद्—' इति दद्भावे शेषाणां 'मास्था—' इतीत्वे प्राप्ते इत्त्वविधिः । तपरकरणं मुखसुखार्थम् । दीर्घनिवृत्त्यर्थम् । भाव्यमानत्वादेव तन्निवृत्तिसिद्धेः । श्तिपा निर्देशो लुङ्निवृत्त्यर्थः । दादत्तः ।

---

१. ह्लादेर्ह्रस्वः D4. २. After it—योगविभागः कर्तव्यः । प्रह्लुत्तिः D2, B2, . ३. इति त्रयाणां Dc3, PC. ४. ग्रहेष्व° Dc3.

शाच्छोरन्यतरस्याम् ॥७।४।४१॥

शितः । शातः । छितः । छातः । श्यतेर्नित्यमित्व संशितं व्रतम् ।

दधातेर्हिः ॥७।४।४२॥

धाञो हिः स्यात्तादौ किति ॥ हितः ।

दो दद् घोः ॥७।४।४६॥

घुसंज्ञस्य दा इत्यस्य दत् स्यात्तादौ किति ॥ तान्तत्वे दस्तीति दीर्घत्वं दोषः । दान्तत्वे निष्ठा धान्तत्वे भष्भावः स्यात् । तस्मात् थान्तः । चर्त्वम् घोः किम् । दातः ।

---

शाच्छोः । शो तनूकरणे । छो छेदने ।

दधातेः । 'घुमास्था—' इतीत्वे प्राप्ते हिरादेशः निर्देशो यङ्लुङ्निवृत्त्यर्थः । दाधीतः ।

दो दद् । दस्तीति दीर्घत्वं दोष इति । .यिदः उपसर्गस्येत्यर्थः । निष्ठानत्वम् । 'रदाभ्याम्—' इति । भष्भ 'झषस्तथोः—' इति धत्वं लक्ष्यते । अथवा तान्तादावपि भाष्ये प्रतिपादितम् । दात इति । दाप् लवने । अदाप् इति घुसंज्ञाभावः । दः किम् । धीतम् । धेट् पाने ।

---

१. Before it—उपसर्गात् C; $D_2$ has—श्यतेर्व्रतेति नित्यमित्वम् शितं व्रतम् |; $B_3$ follows $D_2$ but has श्यते व्रते नित्य° &c. २. इत्वम्; $D_4$ drops व्रते. ३. After it धात्वम् | $B_3$. ४. $Dc_3$, PC.

**अच उपसर्गात् तः ॥७।४।४७॥**

अजन्तादुपसर्गात् परस्य दा इत्यस्य घोस्तः स्यात्तादौ । प्रत्तम् । अवत्तः ।

अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि ।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते ॥

**दस्ति ॥६।३।१२४॥**

इगन्तस्योपसर्गस्य दीर्घः स्यात् दादेशे तकारे परे ॥ । सूत्तम् । घुमास्थेतीत्वम् । धेट् । धीतम् । गीतम् । जनसनेत्यात्वम् । जातम् । सातम् । खातम् ।

---

: । प्रत्तमिति । अलोन्त्यपरिभाषया आकारस्य तत्वे कृते चर्त्वं तकारः । अचः किम् । निर्दत्तम् । उपसर्गात् किम् । म् । घोः किम् । अवदातम् । दैप् । 'उपसर्गात्' इति र्देशादादेरलः प्राप्नोति । अत्र उत्तरम् । 'अचः' इत्येतद् ं । तत्रैकं पञ्चम्यन्तमुपसर्ग[illegible]णार्थम् । द्वितीयं षष्ठ्यन्तं शार्थम् । तेनाकारस्य तकारः । द्वितकारको वा निर्देशस्तेन ःवात् सर्वस्य स्यात् । अवदत्त[illegible] । ताभावार्थं निपात्यते । सर्गा एते क्रियान्तर[illegible] । यत्क्रियायुक्तास्तां प्रति संज्ञे भवत इति । [illegible]र्गप्रतिरूपकाण्यव्ययानि ।

स्ते । 'अच उपसर्गात् तः' [illegible]न्त्यस्य तकारः क्रियते र्त्वभूतस्याश्रयणात् [illegible]दित्वम् । अथवा द्वित- मादेशः । धेडिति । [illegible]र्थमुक्तम् । तस्य हि व स्यात् । गीतमिति । [illegible] । पीतम् । पा पाने । ादि । जन जनने । षण [illegible] । [illegible]दारणे ।

---

pped $B_2$, $D_4$. २. तादे[illegible] $D_{[illegible]}$. [illegible] $B_2$. ४. Dropped $D_4$.

अदो जग्धिर्ल्यप्ति किति ॥२।४।३६॥

अदो जग्धिः स्याल्ल्यपि तादौ किति च ॥ इकार इ
धत्वम् । झरो झरि सवर्णे । जग्धः । आदिकर्मणि क्तः कर्
च । प्रकृतः कटं सः । प्रकृतः कटस्तेन । निष्ठायामण्यदर्
प्रक्षीणः सः ।

वाक्रोशदैन्ययोः ॥६।४।६१॥

क्षियो निष्ठायां दीर्घो वा स्यात् आक्रोशे दैन्ये
गम्ये ॥ क्षीणायुर्भवान् क्षितायुर्वा । क्षीणोयं तपस्वी क्षि
वा । भावे दीर्घो वेति केचित् । प्रक्षितं प्रक्षीणं तेन ।

निनदीभ्यां स्नातेः कौशले ॥८।३।८९॥

आभ्यां स्नातेः सस्य षः स्यात् कौशले गम्ये ॥ निष्णा
शास्त्रेषु । नदीष्णः । सुपीति कः ।

---

अदः । इकार उच्चारणार्थः । तेन नुम् न । धत्वमिति ' झषस्तथोर्धोधः ' इति । प्रकृतः कटं स इति । कर्तुः क्तेनोक्तत्व कर्तरि प्रथमा । कर्मणि द्वितीया अनभिहितत्वात् । प्रकृतः कटस्तेनेति कर्मणि क्तः । प्रक्षीणः स इति । ' आदिकर्मणि—' इति क्तः कर्तरि ' निष्ठायाम्—' इति दीर्घः । ' क्षियो दीर्घात् ' इति नत्वम् ।

निनदी । कौशले किम् । निस्नातः । नद्यां स्नातो नदीस्नातः

---

१. दीर्घो वा स्यान्निष्ठायां $D_1$. २. $D_3$ drops it; P, $B_2$ has गम्ये
३. क्षीणायुर्भव क्षितायुर्वा $B_2$; क्षीणायुर्भव । क्षितायुर्भव । $N_1$. ४. $D_2$ dro
it. ५. Before it—'निष्ठायाम्' इत्यनेन दीर्घः । PC, $Dc_3$. ६. निष्ठा...
दीर्घः dropped $Dc_3$, PC.

गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्य-
तिभ्यश्च ॥३।४।७२॥

एभ्यः कर्तरि क्तः स्याद्भावकर्मणोश्च ॥ गङ्गां गतः। ां प्राप्तः । ग्लानः सः । लक्ष्मीमाश्लिष्टो हरिः । शेषमधि- ातो विष्णुः । वैकुण्ठमधिष्ठितः । शिवमुपासितः । हरि- ामुपोषितः । राममनुजातोऽच्युतः । गरुडमारूढो गोविन्दः । ामनुजीर्णोऽनन्तः । पक्षे प्राप्ता गङ्गा तेने त्यादि । शीङादेर- कत्वेपि उपसृष्टस्य सकर्मकत्वात् पृथगुक्तिः ।

क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः
॥३।४।७६॥

निश्चलार्थाद् गत्यर्थाद् भोजनार्थाच्चाधिकरणे क्तः स्याद् ाप्राप्तं च ।

---

गत्यर्थ । गत इति । 'अनुदात्तोपदेश—' इति मलोपः । न इति । 'संयोगादेः—' इति नत्वम् । शेषमित्यादि । धिशीङ्—' इत्याधारस्य कर्मत्वात् कर्मणि द्वितीया । अधिष्ठित । 'द्यतिस्यति—' इतीत्वम् । 'उपसर्गात् सुनोति—' इति षः । षित इति । 'वसतिक्षुधोरिट्' । 'वचिस्वपि—' इति संप्रसारणम् । 'सिवसि—' इति षः । अनुजात इति । 'जनसन—' इत्यात्वम् । रूढ इति । 'हो ढः' । धत्वम् । ष्टुत्वम् । 'ढो ढे लोपः' । ोप—' इति दीर्घः । अनुजीर्ण इति । जॄष ॠत इत् । 'हलि च' दीर्घः । 'रदाभ्याम्'— इति नत्वम् । णत्वम् । ननु श्लिषादीनाम- कत्वादेव कर्तरि स्यात् किमेषां ग्रहणेनेत्याशङ्क्याह—शीङादेरिति ।

क्तोऽधि । यथाप्राप्तं चेति । ध्रौव्यार्थेकर्मकत्वात् कर्तरि भावे गत्यर्थेभ्यः कर्तरि कर्मणि भावे च प्रत्यवसानार्थेभ्यः कर्मणि च क्तः स्यादित्यर्थः ।

---

म्लानः $D_2$, $B_2$. २. पक्षे च C. ३. ननु च $Do_3$, PC.

मुकुन्दस्यासितमिदमिदं यातं रमापतेः ।
भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः ॥

भुक्तमेषामस्तीति मत्वर्थीयाकारेण भुक्ताः पीत स्यात् ।

**ञीतः क्तः ॥३।२।१८७॥**

ञीतो धातोर्वर्तमाने क्तः स्यात् ॥ ञिक्ष्विदा । ञिइन्धी । इद्धः ।

**मतिबुद्धिपूजार्थेभ्यश्च ॥३।२।१८८॥**

एतदर्थेभ्यो वर्तमाने क्तः स्यात् ॥ राज्ञां मतः विदितः । पूजितः । अर्चितः । चादनुक्तमपि ।

---

'मुकुन्दस्य' इत्यादि । आसितमित्यादौ सर्वत्राधि 'अधिकरणवाचिनश्च' इति मुकुन्दस्येत्यादौ षष्ठी । कारेणेति । 'अर्शआदिभ्योच्' इत्यनेन । भावादावुद

ञीतः । ञिक्ष्विदेति । मोक्षस्नेहयोर्वर्तते । ' इति नेट् ।

मति । मतिः संमतिः । बुद्धिर्ज्ञानम् । राज्ञां : 'क्तस्य च वर्तमाने' इति षष्ठी । इष्ट इति । इष

---

१. °मेतच्च कृष्णस्येत्यूचु° B₂, D₄. २. Before it— बुद्धिर्ज्ञानम् । पूजा सत्कारः । N₁. ३. दृष्टः C. ४. Dropped °दनुक्तानामपि । B₂.

शीलितो रक्षितः क्षान्तः आकृष्टो जुष्ट इत्यपि ।[1] सुप्तः ।
ायितः । तृप्तः । इत्याद्या वर्तमाने ज्ञेयाः ।

**नपुंसके भावे क्तः ॥३।३।११४॥**

धातोः क्तः स्याद् भावेर्थे स च क्लीबे ॥ हसितं
ाल्पितं शयितं छात्रस्य ।

**लिटः कानज्वा ॥३।२।१०६॥**

लिटः कानजादेशो वा स्याच्छन्दसि । प्रयोगवशात्
ोकेपीति केचित् । तङानावात्मनेपदम् । द्वित्वादि । चक्राणः ।

---

तीषसह—' इति वेट्त्वात् 'यस्य विभाषा' इतीण्निषेधः । शीलित
त्यादि । शील समाधौ । रक्ष पालने । क्षमूष् सहने । क्रुश आह्वाने
ोदने च । जुषी प्रीतिसेवनयोः ।

नपुं । 'तयोरेव—' इत्येव भावे क्तः सिद्धः । नपुंसकविशेष-
ोहितेन ल्युटा बाधा मा भूदिति सूत्रारम्भः । शयितं छात्रस्येति ।
पुंसके भावे क्तस्य योगे शेषविवक्षायां वेति षष्ठी ।

लिटः । चित्करणमन्तोदात्तार्थं कित्करणं कित्कार्यार्थम् ।
छन्दसि लिट्' अतो लिट्ग्रहणेनुवर्तमानेपि पुनर्लिट्ग्रहणं सर्वस्य
ेट आदेशो यथा स्यादित्येवमर्थम् । अन्यथा तस्यैव स्यात् । प्रयोगे-
ि । तथा चामरसिंहे कानचः प्रयोगः । 'शिश्रिदानोकृष्णकर्मा'
ति । क्षीरस्वामिना च व्याख्यातम् । श्विदि श्वैत्ये । लिट् । कान-
ेति । द्वित्वादीति । 'लिटि धातोः—' इति द्वित्वम् । आदिना
ाभ्यासकार्यं च । चक्राण इति । कृञः परोक्षे लिट् । तस्य कर्तरि
ाले विवक्षिते कानच् । यणादेशः । 'द्विर्वचनेचि' इति द्वित्वे कर्तव्ये
ानिवद्भावः । 'उरत्' इत्यत्वम् । 'कुहोश्चुः' ।

---

१. इत्यादि $D_2$; जुष्टः सुप्तः शयितः तृप्त इत्यपि इत्याद्या &c. $B_2$; इत्याद्या
र्तमाने ज्ञेयाः for इत्यपि । $D_4$ (*i. e.* सुप्तः to तृप्तः dropped $D_4$.)
After it—हृष्टश्चरुषितश्चाभावभिव्याहृत इत्यपि । हृष्टतुष्टौ तथा-
ृष्टस्तथोभौ संयतोद्यतौ ॥ N. ३. इत्याद्यो C.

**क्वसुश्च ॥३।२।१०७॥**

लिटः क्वसुरादेशो वा स्यात् ॥ बेभज्वान् । जाग्रोविच्च इकार उच्चारणार्थः । तेन क्वसावपि न गुणः । जजागृव येषां नोच्चारणार्थस्तेषां क्वसौ गुणः । जजागर्वान् ।

**वस्वेकाजाद्धसाम् ॥७।२।६७॥**

कृतद्विर्वचनानामेकाचामादन्तानां घसेश्च वसोरिट् स्य न्येषाम् ॥ आदिवान् । आरिवान् । ददिवान् । दरिद्रातेरा

---

**क्वसुः** । किच्त्वं संयोगान्तानां नलोपार्थमन्येषां तु 'असंयोगा कित्' इत्येव सिद्धत्वात् । ऋकारान्तानां क्ङिति प्राप्तगुणनिषेधार्थं उकारो नुमर्थो ङीबर्थश्च । योगविभागादुत्तरत्र क्वसोरेवानुवृ बभज्वानिति । भञ्जो आमर्दने । द्वित्वादि । **जाग्र** इति । वृत्तिकारादिभिः पक्षद्वयं दर्शितम् । वीत्यत्र इकार उच्चारणार्थ वकारादौ क्वसावपि न गुणः । केषांचिन्नोच्चारणार्थस्तेषां क्वसौ गु

**वस्वे । कृतद्विर्वचनानामेकाचामिति** । कृतं द्वित्वं येषां ते तश द्वित्वे कृते ये एकाचस्तेषामित्यर्थः । क्रादिनियमात् प्रतिषेधाभावात इट् प्रसक्तः स नियम्यते । **आदिवान्** । **आरिवानिति** । अद भक्ष धात्वभ्यासयोरेकादेशे कृते कृतद्वित्वोयमेकाच् । ऋ गतौ 'ऋच्छत्यृताम्' इति गुणत्वे धात्वभ्यासयोरेकादेशे कृते कृतद्वि यमेकाच् । **ददिवानिति** । डुदाञ् दाने । अयं कृतद्वित्वोनेकाजित्य इट् आद्ग्रहणेन प्राप्यते । ननु चात्र लोपे कृते एकाजेवायं कृतद्वि स्तद् व्यर्थमाद्ग्रहणम् । मैवम् । इटि सति पश्चात् 'आतो लोप च' इत्यातो लोपः । तस्मादनेकाजेव । दरिद्रातेस्त्वनेकाचूत्वादा

---

१. चक्रवान् $D_2$, $D_4$; बभञ्ज्वानिति मौलः पाठः । चक्रवान् $B_2$. २. क्वस पि. $B_2$. ३. °रिडागमः $D_1$.

नेत्याल्लोपित्वेनादन्तत्वाभावान्नेट् । ददरिद्वान् । जक्षिवान् । एषां किम् । बभूवान् । वसोः संप्रसारणम् । वुगागमः । बभूवुषः । बभूवुषी । वसुस्रंस्विति दः । बभूवत् । वकारादौ कुति च्छ्वोः शूठौ वेति केचित् । दुद्यूवान् । दिदिवान् । देदिवुषः । विविश्वान् । विविच्छ्वान् ।

**विभाषा गमहनविदविशाम् ॥७।२।६८॥**

एभ्यो वसोरिड् वा स्यात् ॥ जग्मिवान् । जगन्वान् ।

---

...र्थ्यं दरिद्रांचकृवानिति । केषांचिन्मतेन वाम् । तेषां मते यदाम् न ...दा कथमित्याशङ्क्याह—दरिद्रातेरिति । जक्षिवानिति । घस्लृ ...दने । ननु 'घसिभसोर्हलि च' इति उपधालोपे कृते कृतद्वित्वोयमेकाच् । ...त् किमस्य ग्रहणेन । नैवम् । परत्वात् द्वित्वात् पूर्वमुपधालोपः स्यात् ...तस्त्वनच्कत्वात् द्वित्वमेव न स्यात् । इह हि घसिग्रहणादुपधा- ...ोपमपि परत्वादिडागमो बाधते । 'गमहन—' इति पश्चादुपधालोपः । ...त च द्वित्वे कर्तव्ये स्थानिवद् भवति । तेन जक्षिवानिति स्यात् । ...भूवुषीति । 'उगितश्च' इति ङीप् । बभूवदिति क्लीबे प्रथमैक- ...चनम् । दुद्यूवानिति । प्रथममूठ् पश्चाद् द्वित्वम् ।

**विभाषा** । 'वस्वेकाच्—' इति नियमाद् गमादीनां ... स्यादिति विभाषेयमारभ्यते । जग्मिवानिति । परत्वादिट् ...तो 'गमहन—' इत्युपधालोपः । ततो द्वित्वम् । जगन्वा- नेति । 'मो नो धातोः ।' 'म्वोश्च' इति नत्वम् ।

---

१. Before it—बभूवुषा $D_2$, $D_4$. २. बभूवद्भ्याम् $D_2$, $B_2$, $D_4$. ... दिद्यूवान् $N_1$. ४. Dropped PC. ५. °दिडभावो $Dc_3$, PC. ६. Before ...—दिवु PC, $Dc_3$.

जघ्निवान् । जघन्वान् । तौदादिकौ विद्विशी[1] । वि
विविद्वान् । विविशिवान् । विविश्वान् । दृशेश्चेति व
ददृश्वान् । ददृशिवान् ।

**दाश्वान् साह्वान् मीढ्वांश्च ॥ ६।१।१**

एते क्वस्वन्ता निपात्यन्ते ॥

---

जघ्निवानिति । 'अभ्यासाच्च' इति कुत्वम् । ।
**विद्विशी** इति । विशस्तौदादिकत्वात् तेन साहचर्या
लाभार्थस्य तौदादिकस्यैव ग्रहणं न ज्ञानाद्यर्थस्येत्यः
ज्ञानाद्यर्थस्य विविद्वानित्येव स्यात् ।

दाश्वान् । छन्दसि भाषायां वाविशेषेण
दाश्वानिति । दाशृ दाने । अस्य क्वसावद्वित्वमनिट्त्वं च
एवं सर्वत्र[4] निपात्यते । **साह्वानिति** । षह मर्षणे । अस
पदमुपधाया दीर्घश्च[5] । **मीढ्वानिति** । मिह सेचने । अस
ढश्च । 'क्वसुश्च' इत्यनेनैव व्याख्यातप्रायत्वादुपेक्षितं व्या
'भाषायां सदवसश्रुवः' ॥३।२।१०८॥ सदादिभ्यः क्व
भाषायाम् । आदेशविधानाद् भूतमात्रे भाषायामपि लि
उपसेदिवान् । अनूषिवान् । उपशुश्रुवान् । लुङ्लङ्लि
पुरस्तादनुवृत्तेः क्वसुः स्यात् । पक्षे उपासदत् । उपासीद
ससाद । अन्ववात्सीत् । अन्ववसत् । अनूवास । उपाश्रौष
शृणोत् । उपशुश्राव ।

---

१. °विशौ B₂. २. वक्तव्यम् D₂. ३. ददृशिवान् । ददृश
४. सर्वत्रैते निपात्यन्ते PC, Dc₃. ५. °मुपधादीर्घश्च PC, Dc₃.

## उपेयिवाननाश्वाननूचानश्च ॥३।२।१०९॥

ा निपात्यन्ते । नात्रोपसर्गस्तन्त्रम् ॥ समीयिवान् । जाग्रः कानचि गुणो वेति केचित् । जजाग्राणः । ाः ।

## लटः शतृशानचावप्रथमासमानाधिकरणे ॥ ॥३।२।१२४॥

ः स्थाने शतृशानचौ स्तः प्रथमया चेदेकार्थता न ावादि । पचन्तं चैत्रं पश्य । पचता चैत्रेण कृतम् । यात्मनेपदसंज्ञा । कर्तृगे फले शानच् ।

---

। उपपूर्वादिणो लिटः क्वसुर्द्वित्वमभ्यासस्य दीर्घस्तत्सा- र्णदीर्घाभावः । क्रादिनियमात् प्राप्तस्य 'वस्वेकाजाद् घसाम्' येटः प्रतिप्रसवो निपात्यतेनेन । अजादौ न । उपेयुषः । नात्रेति । उपेत्युपसर्गोत्र प्रधानं न । तेनोपसर्गान्तरादप्य- भवति । वानुवृत्तेः पक्षे लुङादयोपि । उपागात् । पेयाय । अश्नातेर्नञ्पूर्वात् क्वसुरिडभावश्च निपात्यते । नाशीत् । नाश्नात् । नाश । अनुपूर्वाद्ब्रूञः कर्तरि कानच् अनूचानः । अन्ववोचत् । अन्वब्रवीत् । अनूवाच ।

। शकारः सार्वधातुकत्वार्थः । ऋकार उगित्त्वार्थः । चकारो- । अप्रथमासमानाधिकरणे इति पर्युदासोयम् । प्रथमाया ोयादिका विभक्तिरप्रथमा । तया चेदेकार्थता तस्येति । ' । डुपचष् पाके । 'उगिदचाम्—' इति नुम् ।

---

it—समुपसर्गपूर्वान्निरुपसर्गाच्च भवत्येव $B_2$; अन्योपसर्गपूर्वात् भवत्येव । N. २. केचित् dropped $D_4$. ३. अप्रथमया चेदे- ा P, N. ४. कर्तृफले $N_1$. ५. निपात्यते । तेनाजादौ

## आने मुक् ॥७।२।८२॥

आने परे अदन्ताङ्गस्य मुगागमः स्यात् ॥ ।
पश्य । पचमानेन चैत्रेण कृतम् । लेङुक्तेः प्रथम
करणेपि क्वचित् । सन् द्विजः ।

माङ्याक्रोशे ॥* मा पचन् । मा पचम
पचत्वित्यर्थः ।

---

आने । ननु चादन्താङ्गस्य चेन्मुगुच्यते पच
'ङिददुपदेशाल्लसार्वधातुकानुदात्तत्वं न प्राप्नोति । मुक
त्वात् । अङ्गभक्तोयमङ्गस्यैवावयवत्वाच्च व्यवधायकः ।
व्यवधायक एव । तथा च **काशिकायामुक्तम्**—'अङ्ग
तथा चाकारमात्रभक्तोयं मुक् अदुपदेशग्रहणेन गृह्यत इत्य
लस्य सार्वधातुकमनुदात्तं भवति' इति । अतोङ्गस्यात
भाव्यं न त्वदन्ताङ्गस्येति । एवं मन्यते । स्वरविधौ व्यञ्ज
वदितीयं परिभाषास्ति । तेन मुकोविद्यमानत्वेन व्य
स्यादेवानुदात्तत्वम् । **काशिकाकारस्त्वियं** परिभाषा नास्ती
उक्तवान् । लङुक्तेरिति । 'वर्तमाने लट्' इत्यतो लड्ग्रह
पुनर्लड्ग्रहणमर्थाधिक्यार्थम् । तेन प्रथमासमानाधिकर
त्यर्थः । **सन् द्विज** इति । अस् भुवि । 'श्नसोः—'
**माङीति** । माङि उपपदे आक्रोशे गम्यमानेपि शतृ स्य
'नन्वोर्विभाषा' इत्यतो विभाषाग्रहणमनुवर्तयन्ति । सा च
विभाषा । तेन कुर्वद्भक्तिः कुर्वाणभक्तिः कुर्वत्तर इत्यादौ नित
विद्यते विद्यमान इत्यादौ पाक्षिकौ । पचतितरामित्यादौ आभि

---

१. लडिति वर्तमाने पुनर्लङुक्तेः &c. $B_2$, $N_1$. २. P, $N_1$, a
it. ३. °क्वोप: $Dc_3$.

**संबोधने च ॥३।२।१२५॥**

हे[1] पचन् । हे पचमान ।

**लक्षणहेत्वोः क्रियायाः ॥३।२।१२६॥**

क्रियाया लक्षणे हेतौ चार्थे सतो धातोर्लटः शतृशानचौ स्तः । शयाना भुञ्जते ।[2] अर्जयन् वसति ।

**कृत्यचः ॥८।४।२९॥**

प्रपीयमाणः ।[3]

---

संबो । प्रथमासमानाधिकरणार्थ एवारम्भः ।

लक्षण । लक्ष्यते चिह्न्यते येन तल्लक्षणम् । जनको हेतु **सतो धातोरिति** । वर्तमानाद्धातोरित्यर्थः । **शयाना** इति । उ भुजिक्रियायाः शयनं लक्षणम् । **अर्जयन्निति** । अत्रार्जनं वासक्रि हेतुः । लक्षणहेत्वोः किम् । पचति पठति च । क्रियाग्रहणात् द्रव्यगु योर्न । यः कम्पते सोऽश्वत्थः । यत् प्लवते तल्लघु । ननु वर्षती धावति हन्तीति पलायते अत्र शतृशानचौ किमिति न भवतः । इति कारणहेतुत्वस्य द्योतितत्वात् । व्यवस्थितविभाषानुवृत्तेर्वा । लक्ष हेत्वोरिति निर्देशः पूर्वनिपातस्य व्यभिचारे लिङ्गम् ।

**कृत्यचः** । इति णत्वम् । **प्रपीयमाण** इति । पा पाने कर्मणि लट् । यक् । 'घुमास्था—' इतीत्वम् । मुक् ।

---

१. Before it—प्रथमा समानाधिकरणार्थोऽयमारम्भः $B_3$, $D_4$. २. Af it—यवनाः $N_1$, $D_4$. ३. After it—सोमः $N_1$, $D_4$, $D_2$, $B_2$ ; लक्षणहे किम् । पचति च पठति च । क्रियायाः किम् । द्रव्यगुणयोर्मा भूत् । कम्पते सोऽश्वत्थः । यत् प्लवते तल्लघु । लक्षणहेतुनिर्देशः पूर्वनिपातव्यभिचारलिङ्ग हन्तीति पलायते । वर्षतीति धावतीत्यादौ न । $C_1$, $B_2$ (सोऽश्वस्थः, पूर्वमिमीतः भिचार° $B_2$). ४. स्तः PC, $Dc_3$.

**ईदासः ॥७।२।८३॥**

आसः परस्य ईत् स्यात् ॥ आदेः परस्येत्यादेरेव

**विदेः शतुर्वसुः ॥७।१।३६॥**

वेत्तेः परस्य शतुर्वसुरादेशः स्याद्वा ॥ विदन् विदुषी ।

**तौ सत् ॥३।२।१२७॥**

तौ शतृशानचौ सत्संज्ञौ स्तः ॥

**लृटः सद्वा ॥३।३।१४॥**

लृटः सत्संज्ञावादेशौ स्तो वा ॥ व्यवस्थितवि

---

ईदासः । आस उपवेशने ।

विदेः । विद ज्ञाने । स्थानिवत्त्वादेव उगित्कार्ये उकारकरणं 'वसोः संप्रसारणम्' इत्यत्र क्वसोरपि ग्रहणार्थम् । तेनैकानुबन्धग्रहणे न द्व्यनुबन्धकस्येत्येत सत्युकारकरणमनर्थकं स्यात् । विदुषीति । 'उगि ङीप् । 'वसोः संप्रसारणम्' ।

तौ सत् । तौग्रहणं वर्तमानलक्षणोपाध्यसंसर्गात् मात्रस्य संज्ञा यथा स्यादित्येवमर्थम् । तेन ब्राह्मणस्य का सत्संज्ञासद्भावात् 'पूरणगुण—' इति षष्ठीसमास स्यात् ।

लृटः । 'लृट् शेषे च' इत्यतो लृड्ग्रहणेनुवर्तमाने ग्रहणं स्थानिनिर्देशार्थम् । तेन सत्संज्ञयोः प्रत्ययान्तरत्वं न

---

१. परस्यानस्य $B_2$, $D_4$. २. °रादेशौ वा स्यात् P, $D_2$, $B_2$, $N_1$ $D_1$. ४. °स्येत्युत्वं न $Dc_1$. ५. °निषेधः सिद्धः स्यात् $Dc_3$,

ैकार्थादिषु नित्यमन्यत्र वा । करिष्यन्तम् । करिष्यमाणम् ।
[.करिष्यन् । अर्जयिष्यन् वसति । प्रथमैकार्थत्वे । करिष्यति
करिष्यन् ।

**पूङ्यजोः शानन् ॥३।२।१२८॥**

आभ्यां शानन्प्रत्ययः स्यात् ॥ पवमानः । यजमानः ।

**ताच्छील्यवयोवचनशक्तिषु चानश्**
**॥३।२।१२९॥**

एषु गम्येषु धातोश्चानश् स्यात् ॥ भोगं भुञ्जानः । कवचं
बिभ्राणः । शत्रुं निघ्नानः ।

---

ैकार्थादिष्विति । आदिशब्देन 'संबोधने च' 'लक्षणहेत्वोः
क्रियायाः' इत्यस्मिन् विषये प्रत्ययोत्तरपदयोश्च । करिष्यतोपत्यं
कारिष्यतः । कारिष्यमाणिः । करिष्यतो भक्तिः । करिष्यद्भक्तिः ।
करिष्यमाणभक्तिः ।

**पूङ्यजोः** । पूङ् पवने । यज देवपूजादौ । शानन् अयं यदि
लादेशः स्यात् तदा पवते यजते इति तिङोपि श्रवणार्थं वेत्यानियम् ।
प्रत्ययत्वे वासरूपविधिना तिङपि स्यात् । अन्यच्च लादेशत्वे
भावकर्मणोरपि स्यात् । कर्तरि चेष्यते । निघातोपि तास्यनुदात्तेदिति
स्यात् । आत्मनेपदत्वं च स्यादित्येते दोषाः प्रसज्येरन्निति चेतसि
कृत्वाह—**शानन् प्रत्ययः स्यादिति** । शकारः सार्वधातुकत्वार्थः ।
नकार आद्युदात्तार्थः ।

**ताच्छील्य** । ताच्छील्यं तत्स्वभावता । वयः शरीरावस्था
यौवनादिः । शक्तिः सामर्थ्यम् । **भोगमित्यादि** । ताच्छील्ये ।
**कवचमिति** । वयसि । **शत्रुमिति** । शक्तौ ।

---

१. विकल्पः $D_2$, $B_2$, $D_4$. २. Before it सति $D_4$. ३. पुङ्यजोः
1. ४. एतेषु C.

**इङ्धार्योः शत्रकृच्छ्रिणि ॥३।२।१३०॥**

आभ्यां शतृ स्यादकृच्छ्रिणि कर्तरि ॥ अधीयन् । धारयन्

**द्विषोऽमित्रे ॥३।२।१३१॥**

द्विषन् ।[1]

**अर्हः प्रशंसायाम् ॥३।२।१३३॥**

अर्हन् ।

**आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ॥३।२।१३४**

इतः परं क्विपमभिव्याप्य ये प्रत्ययास्ते तच्छीलादि ज्ञेयाः ।

---

इङ् । अकृच्छ्रः सुखसाध्यो धात्वर्थः । स विद्यते यः सोऽकृच्छ्री । तस्मिन् कर्तरीत्यर्थः । अकृच्छ्रिणि किम् । कृच्छ्रेणाधी धारयति च ।

द्विषः । अमित्रः शत्रुः । अमित्रे किम् । पतिं द्वेष्टि स्पष्टत्वादुपेक्षितं व्याख्यायते—'सुञो यज्ञसंयोगे'[2] ।३।२।१३ यज्ञेन संयोगो यज्ञसंयोगः । यज्ञयुक्ते[3] अभिषवे वर्तमानात् सुनो शतृ स्यात् । सुन्वन्तो यजमानाः । संयोगग्रहणं प्रधानप्रतिपत्त्यर्थम् याजकेषु मा भूत् । यज्ञसंयोगे[4] किम् । सुनोति इक्षुम् ।

अर्हः । प्रशंसा स्तुतिः । प्रशंसायां किम् । अर्हति चौरो[5] वधम्

आक्वेः । 'भ्राजभास—' इति क्विपं च वक्ष्यति । तदन्तोऽयमधिकारः ।

---

१. After it—अमित्रे इति किम् । भार्या पतिं द्वेष्टि । D₂, D₄, B₂ (द्वे पतिं भार्या B₂, D₄.) २. The Sûtra 'सुञो &c.' precedes this D PC. ३. यज्ञसंयोगे Dc₃; यज्ञसंयुक्ते PC. ४. योगे Dc₁, इक्षुन् D PC. ५. चौरो PC.

**तृन् ॥३।२।१३५॥**

धातोस्तृन् स्यात्तच्छीलादिषु ॥ कर्ता कटान् ।

**अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यप-त्रपवृतुवृधुसहचर इष्णुच् ॥३।२।१३६॥**

एभ्य इष्णुच् स्यात् तच्छीलादौ ॥ अलंकरिष्णुः ।

---

**तृन्** । नकार आद्युदात्तार्थः । **कर्ता कटानिति** । ताच्छील्ये । लोक—' इति षष्ठीनिषेधः । तद्धर्मणि वधूमूढां मुण्डयितारः ष्ठायनाः । तत्साधुकारिणि वसित्रीव वसनमक्रुना । तृन्-वृत्विक्षु चानुपसर्गस्य । अताच्छील्यार्थं वक्तव्यम् । होता । । अनुपसर्गस्य किम् । उद्गाता । तृजेव । तृच् अन्तोदात्तं तृन् दात्तं पदमिति विशेषः । नयतेः षुक् च । तृनि कृते गुणो व्यः । नेष्टा । त्विषेर्देवतायामकारश्चोपधाया अनिट्त्वं च । । क्षदेश्च नियुक्ते । क्षत्ता । उणादिनिपातनाद्वा होत्रादिसिद्धिः ।

**अलम्** । अलंपूर्वः करोतिः निराङ्पूर्वश्च । जनी प्रादुर्भावे ः । पच व्यक्तीकरणे । पत्लृ पथे गतौ च । मदिमन्ये पठन्ति । तृप्तिशोभने । एते उत्पूर्वाः । रुच दीप्तौ । त्रपूष् लज्जाया-र्थः । वृतु वर्तने । वृधु वृद्धौ । षह मर्षणे । चर गतौ । तृनो-ोयम् ।

' निराकरिष्णू वर्तिष्णू वर्धिष्णू परितोषणम् ।
उत्पतिष्णू सहिष्णू च चेरतुः खरदूषणौ ॥ '

प्रजनिष्णुः । उत्पचिष्णुः । उन्मदिष्णुः । रोचिष्णुः । अपत्रपिष्णुः

---

वत्स्र° Dc₃, PC. २. द्दानि Dc₃, PC. ३. गुणे Dc₃, PC. ४. From ···to त्वष्टा dropped Dc₁. ५. च गतौ Dc₃, PC.

चेरिष्णुः इत्यादि । ताच्छीलिकेषु वासर
अलंकर्तीति न ।

**णेश्छन्दसि ॥३।२।१३७॥**

ण्यन्तादिष्णुच् स्याच्छन्दसि । लो
कारयिष्णुः ।

**भुवश्च ॥३।२।१३८॥**

भविष्णुः । चादनुक्तेपि । भ्राजिष्णुः ।

**ग्लाजिस्थश्च ग्स्नुः ॥३।२।१३**

एभ्यो ग्स्नुः स्यात्तच्छीलादौ । चाद्
गित्वान्न गुणः । जिष्णुः । स्थास्नुः ।
गकारप्रश्लेषान्नेट् । भूष्णुः ।

---

इत्यादिशब्दात् । ताच्छीलिकेष्विति । ' निन्दहिं
वुञ्विधानं ताच्छीलिकेषु वासरूपन्यायाभावज्ञ

णेः । कारयिष्णुरिति । हेतुमण्णिच् । ' अय

भुवः । योगविभाग उत्तरत्र भवतेरेवानुव

ग्लाजि । अयं च गित् इति केषांचित् पक्ष
तत्र पूर्वः पक्षः आचार्याणामभिप्रेतः । त

' ग्स्नोर्गित्वान्न स्थ ईकारः क्ङितोरीत्त्
गुणाभावस्त्रिषु स्मार्यः श्र्युकोनिट्त्वं गक

येष कित् तैर्गकारप्रश्लेषो न कार्यस्त्रिषु । स्थ
कार्यः ' घुमास्था—' इतीत्वप्रतिषेधार्थम् ।

---

१. निराकरिष्णुः $D_2$, $D_4$, $B_2$. २. ताच्छीलादिषु
C; चादनुक्तमपि $D_1$. ४. ताच्छील्यादौ $D_1$, $N_1$; शी
it—गित्वात्तिष्ठतेरीत्वं न $D_2$, $B_2$, $D_4$. ६. Droppe

त्रसिगृधिधृषिक्षिपेः क्नुः ॥३।२।१४०॥

एभ्यः क्नुः स्यादुक्तेऽर्थे ॥ त्रस्नुः इत्यादि । ग्लाक्षिपच्-रेमृजः स्नुरिति केचित् । ग्लास्नुः । क्षेप्णुः । पक्ष्णुः । रेमाक्ष्णुः ।

---

त्रसि । त्रसी उद्वेगे । गृधु अभिकाङ्क्षायाम् । ञिधृषा ालभ्ये । क्षिप प्रेरणे । त्रस्नुरिति । 'नेड्वशि—' इतीण्णिषेधः । दिना गृध्नुः । धृष्णुः । क्षिप्नुः । ग्लेति । ग्लै कान्तिसंक्षये । क्षये । डुपचष् पाके । मृजूष् शुद्धौ । परिपूर्वः । परिमाक्ष्णुरिति । र्वृद्धिः । स्पष्टत्वादुपेक्षितं सूत्रसप्तकं व्याख्यायते—'शमित्यष्टाभ्यो ुण्' ॥३।२।१४१॥ शमादिभ्योऽष्टाभ्यो घिनुण् प्रत्ययः स्यात् । ुदमु उपशमे । शमी । दमी । तमु काङ्क्षायाम् । तमी । श्रमु से खेदे च । श्रमी । भ्रमु अनवस्थाने । भ्रमी । क्षमूष् सहने । ी । क्लम ग्लानौ । क्लमी । मदी हर्षे । उन्मादी । प्रमादी । ाभ्यः किम् । असिता । तृन्नेव स्यात् । घः कुत्वार्थः । उकार ारणार्थः । अनुबन्धत्वे हि उगित्वान्नुमादिप्रसङ्गः । 'संपृचानुरुधाङ्-ाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरि-ुषाद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याह — ' ॥३।२।१४२॥ एभ्यस्तच्छीलादौ घिनुण् स्यात् । पृची संपर्के । दिः । संपर्की । 'चजोः—' इति कुत्वम् । अदादिकस्य चेत्येव । रुधिर् । अनुरोधी । यमु । आयामी । यसु । आयासी । परिसारी । सृज । संसर्गी । देवृ देवने । भ्वादिः । परिदेवी । ।र । संज्वारी । क्षिप प्रेरणे । दिवादिस्तुदादिश्च । परिक्षेपी । । परिराटी । वद । परिवादी । दह । परिदाही । मुह ।

---

. Before it—नेड्वशीति नेट् $N_1$. २. After it असु क्षेपणे PC, $Dc_3$. )ropped PC, $Dc_3$. ४. संपर्किते° $Dc_1$. ५. संज्वरी PC, $Dc_3$.

ाही। दुष। दोषी। द्विष। द्वेषी। द्रुह। द्रोही। दुह। दोही।
समाधौ। युजिर् योगे। योगी। क्रीड। आक्रीडी।
र्। विवेकी। त्यज। त्यागी। रञ्ज। रागी। निपातनादनु-
कलोपः। भज। भागी। चर। अतिचारी। अपचारी। मुष।
ाषी। अभ्याहन। अभ्याघाती। 'वौ कषलसकत्थस्रम्भः'
३।२।१४३॥ एभ्यो व्युपपदे घिनुण्। कष हिंसायाम्। विकाषी।
श्लेषणक्रीडनयोः। विलासी। कत्थ श्लाघायाम्। विकत्थी।
विश्वासे। विस्रम्भी। 'अपे च लषः।' ३।२।१४४॥ लष
ाौ। अस्मादपे वौ चोपपदे घिनुण्। अपलाषी। विलाषी।
ऽपसृद्रुमथवदवसः।' ३।२।१४५॥ एभ्यः प्र उपपदे घिनुण्।
पी। प्रसारी। प्रद्रावी। प्रमाथी। मन्थ विलोडने। निपातनात्
ाः। प्रवादी। प्रवासी। वस निवासे। नाच्छादनार्थः।
लुग्विकरणत्वात्। 'निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरट-
ादिव्याभाषासूयो वुञ्।' ३।२।१४६॥ एभ्यो वुञ् स्यात्
ीलादौ। णिदि। निन्दकः। हिसि। हिंसकः। क्लिश उपतापे।
( विबाधे। क्लेशकः। खाद। खादकः। णश। विपूर्वः
णिजन्तः। विनाशकः। क्षिप। परिक्षेपकः। रट।
ाटकः। वदिर्हेतुमण्ण्यन्तः। परिवादकः। भाष। व्याभाषकः।
य। कण्ड्वादिषु यगन्तः। कण्ड्वादौ हि असूञ् इति पठ्यते।
यकः। ण्वुलासिद्धे वुञ्विधिर्ज्ञापको न तच्छीलादिषु वासरूपविधि-
। 'देविक्रुशोश्चोपसर्गे'। ३।२।१४७॥ दिवेर्ण्यन्तात् क्रुशेश्चोपसर्गे
दे वुञ् स्यात्। परिदेवकः। आक्रोशकः। उपसर्गे किम्।
येता। क्रोष्टा।

हन। PC, $Dc_3$. २. असूञ् $Dc_1$.

**चलनशब्दार्थादकर्मकाद्युच् ॥३।२।१४८॥**

चलनार्थाच्छब्दार्थादकर्मकाद्युच् स्यादुक्तेर्थे ॥ चलनः । कम्पनः । शब्दनः । रवणः । अकर्मकात् किम् । पठिता विद्याम् ।

**अनुदात्तेतश्च हलादेः ॥३।२।१४९॥**

हलादेरनुदात्तेतो युच् स्यात् ॥ वर्तनः ।

---

**चलन** । चलनं देशान्तरप्राप्तिहेतुः क्रियाविशेषः । शब्दः श्रोत्रविषयोर्थः । चलनः । चल कम्पने । कम्पनः । कपि चलने । शब्दनः । शब्द शब्दे आविष्करणे च । रवणः । रु शब्दे । पठितेति । तृन् ।

**अनु** । वर्तनः । वृतु वर्तने । अनुदात्तेतः किम् । भविता । हलादेः किम् । एधिता । ननु सर्वोनुदात्तेत् हलन्त एवेति हल्ग्रहणस्य व्यावर्त्याभावात् हल्ग्रहणादेव हलादेरित्यर्थसिद्धौ आदिग्रहणं व्यापादेः सन्नन्तस्याजन्तस्य 'पूर्ववत् सनः' इति निमित्तातिदेशेनानुदात्तेतो व्यावृत्तिर्मा भूदित्येवमर्थम् । एतच्च 'अतो लोपः' 'आर्धधातुके' परसप्तमीयमिति पक्षस्य ज्ञापकम् । जुगुप्सनः । अकर्मकादेव । वसिता वस्त्रम् । स्पष्टत्वादुपेक्षितं सूत्रचतुष्टयं व्याख्यायते—'जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः' ॥३।२।१५०॥ एभ्यो युच् स्यात् । जवनः । चङ्क्रमणः । दन्द्रमणः । सरणः । गर्धनः । ज्वलनः । शोचनः । लषणः । पतनः । पदनः । चलनार्थानां पदेश्चोक्तिः सकर्मकार्था । 'क्रुधमण्डार्थेभ्यश्च' ॥३।२।१५१॥ क्रोधार्थेभ्यो भूषणार्थेभ्यश्च युच् तच्छीलादौ । तृनोपवादः । क्रोधनः । मण्डनः । 'न यः' ॥३।२।१५२॥ यकारान्ताद्धातोर्युच् न । क्नूयिता ।

---

१.° द्यकर्मकात् $D_2$; $D_1$ drops अकर्मकात्; $N_1$ has अकर्मकात् in the beginning of the Vritti. २. प्रत्ययः स्यात् C. ३. After —उक्तेर्थे $D_1$. ४. शब्दने PC. ५. देर्व्यावृत्तिसि $Dc_3$.

**लषपतपदस्थाभूवृषहनकमगमशॄभ्**
|

एभ्य उकञ् स्यादुक्तेर्थे ॥ लाषुकः । पातुक
घातुकः । शारुकः । इत्यादि ।

**जल्पभिक्षकुट्टलुण्टवृङः षाकन्** ॥

एभ्यः षाकन् स्यादुक्तेर्थे ॥ जल्पाकः ।
वराकः । वराकी । इत्यादि ।

---

क्ष्मायिता । 'सूददीपदीक्षश्च' ॥३।२।१५३॥ षूद
दीप्तौ । दीक्ष मौण्ड्ये । इत्येतेभ्यो युच् न । सूदिता
दीक्षिता । दीपेर्युचो रेण विशेषविहितेन बाधितस्
ज्ञापकस्ताच्छीलिकेष्वपि क्वचिद्वासरूपविधिरस्तीत्यस्य
युञ्चयोः समावेशो दृश्यते । कम्रा युवतिः । कमः
कथं मधुसूदनः । अनित्योयं निषेध इति योगविभाग
अथवा नन्द्यादिषु मधुसूदनादयो द्रक्ष्यन्ते ।

लष । **स्थायुक** इति । 'आतो युक् चिण्कृतो
इति । 'हो हन्तेः—' इति कुत्वम् । 'हनस्तो चिण्णलो
शब्दात् । पादुकः । भावुकः । वर्षुकः । कामुकः
तच्छीलादौ समावेशः क्वाप्यस्ति इत्यपालाषी पतनः प
कम्प्र इति घिनुणादयोपि ।

**जल्पभिक्षकुट्ट** । **जल्पाकी**ति । 'षिद्गौर—'
कुट्ट छेदने । लुण्ट स्तेये । चौरादिकः । आदिना भिक्षाकः
लुण्टाकः । जल्पेः 'चलनशब्दार्थ—' इति भिक्षेः 'अ
इति युचः प्राप्तौ कुट्टलुण्टाभ्यां 'णेश्छन्दसि' इति

---

१. Before it—भावुकः । कर्षुकः । $D_4$. २. Before
गमुकः । C. ३. षाकञ् $D_4$. ४. षाकञ् $D_4$. ५. $D_2$ drops i
PC. ७. समावेशोपि PC, $Dc_3$. ८. कम्र PC.

**स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् ॥३।२।१५८॥**

एभ्य आलुच् स्यादुक्तेर्थे ॥ स्पृहयालुः । गृह ग्रहणे ।
लुः । पतयालुः । एते त्रयश्चुरादावदन्ताः । दयालुः ।
ी द्रातिः । निद्रालुः । तत्पूर्वो द्रा तदो नान्तता निपात्यते ।
लुः । श्रद्धालुः । शीङो वाच्यः ॥ शयालुः ।

**दाधेट्सिशदसदो रुः ॥३।२।१५९॥**

एभ्यो रुः स्यादुक्तेर्थे ॥ दारुः । धारुः । सेरुः ।
। सद्रुः ॥

---

ाम—' इति किकिनोः प्राप्तौ षाकन् । व्याख्यातप्रायत्वादुपेक्षितं
ं व्याख्यायते । 'प्रजोरिनिः' ॥३।२।१५६॥ प्रपूर्वाज्जवतेरिनिः
। प्रजवी । 'जुचङ्क्रम्य—' इति युचि प्राप्ते । 'जिदृक्षिविश्री-
व्यथाभ्यमपरिभूप्रसूभ्यश्च' ॥३।२।१५७॥ एभ्य इनिः स्यात् ।
जयी । दृङ् आदरे । दरी । क्षि । क्षयी । श्रिञ् । विश्रयी ।
अत्ययी । टुवम् । वमी । व्यथ भयचलनयोः । अव्यथी ।
ोगे । अभ्यमी । भू । परिभवी । षू प्रेरणे । न षूङ् ।
ानुबन्धकत्वात् । प्रसवी ।

स्पृहिगृहि । स्पृहि ईप्सायाम् । गृह ग्रहे । पत गतौ । दय
ेहिंसादानेषु । द्रा कुत्सायां गतौ । डुधाञ् श्रत्पूर्वः । एते त्रय
अदन्तत्वे सति अल्लोपस्य स्थानिवत्त्वाद् गुणवृद्धी नेति भावः

दाधेट् । दाञ् दाने । दो अवखण्डने । देङ् रक्षणे । धेट्
षिञ् बन्धने । शद्लृ शातने । षद्लृ विशरणगत्यवसादनेषु ।
क—' इत्युकारान्तप्रत्ययप्रयोगे षष्ठीनिषेधः । तेन धारुर्वत्सो
मेति सिध्यति ।

---

· तु PC.

**सृघस्यदः क्मरच् ॥३।२।१६०॥**

एभ्यः क्मरच् स्यादुक्तेर्थे ॥ सृमरः । घस्मरः । अद्मरः

**भञ्जभासमिदो घुरच् ॥३।२।१६१॥**

एभ्यो घुरच् स्यात् ॥ भञ्जेः कर्मकर्तरि । घित्त्वं कुत्वम् । भङ्गुरः । भासुरः । मेदुरः ।

**विदिभिदिच्छिदेः कुरच् ॥३।२।१६२॥**

एभ्यः कुरच् स्यात् ॥ वेत्तेरत्र ग्रहणम् । विदुरः भिदिच्छिदोः कर्मकर्तरि । भिदुरः । छिदुरः ।[2]

---

सृघ । सृ गतौ । घसिः प्रकृत्यन्तरम् । परिसारी । प्रसारी 'संपृच—' 'प्रे लप—' इति सूत्रसामर्थ्याद् घिनुण् च ।

भञ्ज । भञ्जो आमर्दने । भासृ दीप्तौ । ञिमिदा स्नेहने भञ्जेरिति । तथोक्तं **पाणिनीयमतदर्पणे**—

'कर्मकर्तारमेवास्मादभिधत्ते स्वभावतः ।

न कर्ममात्रमित्येष प्रत्ययः कर्मकर्तरि ॥' इति ।

भज्यते स्वयमेव । तथा भट्टिः—

'समरो भङ्गुरप्रज्ञो गृहीत्वा भासुरं धनुः ।' इति ।

विदि । वेत्तेरिति । ज्ञानार्थस्येत्यर्थः । एतच्चाभिधानसामर्थ्यात् ।

---

१. भिदुरा । छिदुरा । $D_1$; भिदुरं काष्ठम् । छिदुरम् $D_2$. २. After it—ज्य संप्रसारणं घुरच् । विधुरः । $B_2$.

**इण्नशजिसर्तिभ्यः क्वरप् ॥३।२।१६३॥**

एभ्यः क्वरप् स्यादुक्तेऽर्थे ॥ पित्त्वात्तुक् । इत्वरः । नश्वरः
जित्वरः । सृत्वरः । सृत्वरी ।

**गत्वरश्च ॥३।२।१६४॥**

अयं निपात्यते ॥ गत्वरी ।

**जागुरूकः ॥३।२।१६५॥**

जागर्तेरूकः स्यात् ॥ जागरूकः ।

**यजजपदशां यङः ॥३।२।१६६॥**

एभ्यो यङन्तेभ्य ऊकः स्यात् ॥ यस्य हलः । यायजूक
जञ्जपूकः । दंदशूकः ॥ वदेश्च ॥* वावदूकः ।

**नमिकम्पिस्म्यजसकमहिंसदीपो रः**

**॥३।२।१६७**

एभ्यो रः स्यात् ॥ नम्रः । कम्प्रः । स्मेरः । जसु मोक्षणे
नञ्पूर्वः । अजस्रम् । सततमित्यर्थः । कम्रः । हिंस्रः । दीप्रः

---

इण्न । पित्त्वात्तुगिति । 'ह्रस्वस्य पिति—' इति । सृत्वरीति
'टिड्ढाणञ्—' इति ङीप् ।

गत्वरः । गमेः । गत्वरीति । पूर्ववत् ङीप् ।

जागुः । वासरूपविधेस्तृन्नपि ।

यज । 'यस्य हलः' इति । यलोपः । यायजूक इति
यजेर्यङ् । 'दीर्घोऽकितः' इति दीर्घः । 'अतो लोपः ।' जञ्ज
इति । 'जपजभ—' इत्यभ्यासस्य नुक् ।

नमि । णम प्रह्वत्वे शब्दे च । कपि चलने । स्मिङ् ईषद्धस
कमु कान्तौ । हिंस हिंसायाम् । दीपी दीप्तौ । कम्पेश्चलनार्थ
कम्पिदीपिभ्यां चानुदात्तेत्त्वाद्युच्चि प्राप्ते रः ।

---

१. सृत्वरी $D_1$, N. २. जस् $D_2$.

## सनाशंसभिक्ष उः ॥३।२।१६८॥

सन्नन्तादाशंसिभिक्षिभ्यां च उः स्यात् ॥ रिरंसुः । अ सेरिच्छार्थस्य ग्रहणम् । आशंसुः । भिक्षुः ।

## विन्दुरिच्छुः ॥३।२।१६९॥

एतौ निपात्यौ । वेदनशीलो विन्दुः । एषणशील इच्छु भाषायां धाञ्कृसृजनिनामिगामिभ्यः किकिनौ वाच्यौ ॥* तौ लिड्वत् । द्वित्वादि । दधिः । चक्रिः । सस्रिः । जज्ञिः । नेमि जग्मिः । सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनौ वाच्यौ सासहिः । वावहिः । चाचलिः । पापतिः ।

## स्वपितृषोर्नजिङ् ॥३।२।१७२॥

आभ्यां नजिङ् स्यादुक्तेऽर्थे ॥ स्वप्नक् । तृष्णक् तृष्णजौ । धृषोपीति केचित् । धृष्णक् ।

---

**सना** । अत्र सन् प्रत्ययो न धातुरित्याह—**सन्नन्ता**दिति **आशंसेरिति** । एतदाङा सह निर्देशात् ज्ञायते । इच्छार्थौ हि ते सह पठ्यते । आशंसेः भिक्षेश्च 'अनुदात्तेतश्च—' इति युचि प्राप्ते

**विन्दु** । विदेर्ज्ञानार्थस्य इषेरिच्छार्थस्य निपातः । **भाषायाम्** दधिरिति । आतो लोपः । **चक्रिः** । यणादेशः । **जज्ञिरिति** 'गमहन—' इत्युपधालोपः । 'स्तोश्चुना श्चुः' इति चुत्वम् । जञोर्ज्ञः **नेमिरिति** । 'अत एकहल्मध्येनादेशा—'इत्येत्वाभ्यासलोपौ **सहीत्यादि** । भाषायामिति वर्तते । **सासहिरिति** । यङ् आकारयकारलोपौ ।

**स्वपि** । ङकारस्तृषेर्गुणनिषेधार्थः । इकार उच्चारणार्थः ।

---

१. °रिच्छार्थग्रहणम् C. २. स्तोश्चुना...ज्ञः—Dropped Dc3, PC.

**शॄवन्द्योरारुः ॥३।२।१७३॥**

आभ्यामारुः स्यात् ॥ शरारुः । वन्दारुः ।

**भियः क्रुक्लुकनौ ॥३।२।१७४॥**

भीरुः । भीलुकः । क्रुकन्नपि वाच्यः ॥* भीरुकः ।

**स्थेशभासपिसकसो वरच् ॥३।२।१७५॥**

एभ्यो वरच् स्यात् ॥ स्थावरः । ईश्वरः । भास्वरः ।
वरः । कस्वरः । प्रमद्वरोपीति केचित् ।

**यश्च यङः ॥३।२।१७६॥**

यातेर्यङन्ताद्वरच् स्यात् ॥ अतो लोपः । तस्य न पदा-
ति यलोपं प्रति स्थानिवत्त्वाभावात् लोपोव्योर्वलीति यलोपः ।
र्यङोकारलोपस्य स्थानिवत्त्वादातो लोपे प्राप्ते न पदान्तेति
चि यङ्वर्णनिमित्त आतो लोपो न । यायावरः ।

---

**शॄ** । शॄ हिंसायाम् । वदि अभिवादनस्तुत्योः ।

**भियः** । ञिभी भये ।

**स्थेश** । ष्ठा गतिनिवृत्तौ । ईश ऐश्वर्ये । भासृ दीप्तौ ।
ऌ गतौ । कस गतौ । ईश्वर इति । 'नेड्वशि—' इतीडभावः ।

**यश्च** । या प्रापणे । अस्माद्यङ् । द्वित्वम् । यायाय वर
ा स्थिते 'अतो लोपः' इति यङकारलोपः । यलोप इति ।
ः । **पुनरित्यादि** । 'अचः परस्मिन्—' इति यङकारस्य स्थानि-
वात् 'आतो लोप इटि च' इत्यालोपे प्राप्ते 'न पदान्त—' इति
ाण वरे योजादेशस्तस्य स्थानिवद्भावनिषेधात् यङो योकारस्त-
मित्त आकारलोपो न स्यादित्यर्थः ।

---

१. भाश्वरः । पेश्वरः । $D_4$. २. Before it—लोपो व्योर्वलि । न पदान्तेत्यनेन
चि अतो लोपस्य स्थानिवत्त्वाभावात् आतो लोपो न । यायावरः । $D_4$. ३. लोपः
४. After it—अतो लोपस्य स्थानिवत्त्वाभावात् $N_1$. ५. अकार° $Dc_1$.

भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ॥३।२।१७७॥

एभ्यस्तच्छीलादौ क्विप् स्यात् ॥ विभ्राट् । भाः । धूः । ऊर्क् । पूः । जवतेर्दीर्घश्च । जूः । ग्रावस्तुत् ।

अन्येभ्योऽपि दृश्यते ॥३।२।१७८॥

अन्येभ्योऽपि क्विप् दृश्यते तच्छीलादौ ॥ भित् । छित् । वचिप्रच्छायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च ॥* [व]ा वाक् । पृच्छति प्राट् । आयतं स्तौति आयतस्तूः । [प्रव]ते कटप्रूः । जवति जूः । श्रयन्त्येतां श्रीः ।

---

[भ्र]ाज । भ्राजृ भासृ दीप्तौ । धुर्वी हिंसायाम् । द्युत दीप्तौ । [ऊर्ज बलप्र]प्राणनयोः । पॄ पालनपूरणयोः । जुः सौत्रो गतौ । ष्टुञ् [...] विभ्राडिति । 'व्रश्च—' इति षः । जश्त्वचर्त्वे । धूरिति । [...]ः' इति वलोपः । 'र्वोरुपधायाः—' इति दीर्घः । पूरिति । [उदोष्ठ्]यपूर्वस्य' इत्युत्वम् । पूर्ववद्दीर्घः । ग्रावाणं स्तौतीति ग्रावस्तुत् । [ह्रस्वस्य पिति कृति तुक्' ... ]।—' इति तुक् । उत्तरसूत्रस्यायं प्रपञ्चः ।

[अ]न्ये । दृशिग्रहणं विध्यन्तरोपसंग्रहार्थम् । क्वचिद् द्वित्वम् । [...] प्रसारणम् । तथा च भाष्यकारोक्तमनुवदति । क्विब् वची- [...] पृच्छति प्राट् इति । प्रच्छेः 'च्छ्वोः शूट्—' इति शः । [...]ा षः । प्राशौ प्राश इत्यादि ज्ञेयम् । शेषं सोदाहरणं

---

[Fr]om अन्ये॰ to दृश्यते dropped $D_4$. २. उच्यतेनया C. ३. पृच्छ- [...]ट् $D_1$. ४. श्रयत्येतां $B_2$.

द्युतिगमिजुहोतीनां द्वे च ॥* द्योतते दिद्युत् । गच्छ
जगत् । जुहोतेर्दीर्घश्च ॥* जुहोत्यनया जुहूः । ध्यायतेः संप्रस
च ॥* धीः । दॄ भये अस्य ह्रस्वद्वित्वे च । दीर्यति दद्दृ
स्रुद्रुपरिव्रजां दीर्घश्चेति केचित् । स्रवति स्रूः । द्रवति द्रू
परिव्रजति परिव्राट् । दृशिग्रहणात् मित्रं ह्वयति मित्रह्वूः । व
ऊः । आप्यायते आपीः । इत्यादि ।

**भुवः संज्ञान्तरयोः ॥३।२।१७९॥**

भुवः क्विप् स्यात् संज्ञायामन्तरे च ॥ मित्रभु
धनिकाधमर्णयोरन्तरेस्तीति प्रतिभूः ।

**विप्रसंभ्यो ड्वसंज्ञायाम् ॥३।२।१८०॥**

एभ्यः पराद्भुवो डुः स्यान्न तु संज्ञायाम् ॥ विभुः । प्र
संभुः । मितद्र्वादेश्च ॥* मितद्रुः । शंभुः । स्वयंभुः ।

---

भुवः । अन्तरशब्दो न ग्रामाद्यन्तरवचनः । किं तूत्तमर्णाधि
योरन्तरे तिष्ठति यः स एव । शब्दशक्तिस्वाभाव्यादित्याह—धनिके
ननु संज्ञायामित्येव वक्तव्यम् । किमन्तरग्रहणेन । न । या
द्रव्यभाविनी हि संज्ञा प्रतिभूशब्दः पुरुषे कादाचित्क इति ।

विप्र । असंज्ञायां किम् । विभूर्नाम कश्चित् । स्पष्टत्वादुपेक्षितः
'धः कर्मणि ष्ट्रन्' ॥३।२।१८१॥ धेटो धाञो वा कर्मणि प्रत्य
ष्ट्रन् स्यात् । धयति तां धात्री उपमाता । दधति तां भेषजार्थाः
धात्री आमलकी ।

---

१. द्युत $D_2$. २. °व्रजतीति N. ३. संभ्यो $B_2$. ४. विभुः । व
विभुनमि कश्चित् $B_2$. ५. Dropped $B_2$. ६. यस्तिष्ठति स एव
$Dc_3$. ७. स्पष्टः...क्षितम् given after the Sûtra PC, $Dc_3$. ८. दधते

**दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ॥३।२।१८२॥**

दाबादेष्ट्रन् स्यात् करणेऽर्थे ॥ दात्यनेन दात्रम् । नेत्रम् । शस्त्रम् । योत्रम् । योक्त्रम् । स्तोत्रम् । तोत्त्रम् । सेत्रम् । सेक्त्रम् । मेढ्रम् । पत्त्रम् । दंष्ट्रा । नद्ध्री ।

**अर्तिलूधूसूखनसहचर इत्रः ॥३।२।१८४॥**

एभ्यः करणे इत्रः स्यात् ॥ अरित्रम् । लवित्रम् । इत्यादि ।

---

दाप् । दाप् लवने । णीञ् प्रापणे । शसु हिंसायाम् । यु मिश्रणे । युजिर् योगे । ष्टुञ् स्तुतौ । तुद व्यथने । षिञ् बन्धने । षिच क्षरणे । मिह सेचने । पत्लृ पथे च गतौ । दश दंशने । णह बन्धने । दंष्ट्रेति । अनित्यः षितां ङीष् । 'हलसूकरयोः पुवः' ॥३।२।१८३॥ उपेक्षितम् । पूङः पूञश्च करणे ष्ट्रन् तच्च करणं हलसूकरयोरवयवो यदि स्यात् । पोत्रं हलस्य । सूकरस्य पोत्रम् । मुखमित्यर्थः ।

अर्ति । ऋ गतौ । लूञ् छेदने । धू विधूनने । षू प्रेरणे । खनु अवदारणे । षह । चर । आदिशब्दात् धवित्रम् । धू इत्यस्य कुटादित्वात् ङित्त्वेन गुणो न स्यादेव । धुवित्रम् । अथवा 'भञ्ज-भासमिदो घुरच्' 'विदिभिदिच्छिदेर्कुरच्' इति वक्तव्ये प्रत्ययान्तर-करणं ज्ञापकमातिदेशिकङित्त्वमनित्यमिति । सवित्रम् । खनित्रम् । सहित्रम् । चरित्रम् ।

---

१. C drops अर्थे. २. करणेऽर्थे $B_2$, $D_4$. ३. $D_2$ drops it ; After it—धवित्रम् । सवित्रम् । खनित्रम् । सहित्रम् । चरित्रम् (dropping इत्यादि) N.

**पुवः संज्ञायाम् ॥३।२।१८५॥**

[1]अस्मात् करणे[2] इत्रः स्यान्नाम्नि ॥ पवित्रं दर्भः ।

**उणादयो बहुलम् ॥३।३।१॥**

उणादयः प्रत्यया वर्तमाने संज्ञायां च बहुलं स्युः ॥

---

**पुवः संज्ञायाम्** । पवित्रं दर्भ इति । समुदायेनात्र दर्भादेः संज्ञा गम्यते । स्पष्टत्वादुपेक्षितम्—[3]'कर्तरि चर्षिदेवतयोः' ॥३।२।१८६ ऋषौ करणे देवतायां कर्तरि पुव इत्रः स्यात् । पूयतेऽनेनेति पवित्रोऽय मृषिः । सोमः पवित्रम् ।

**उणादयो बहुलम्** ।

'क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः
क्वचिद्विभाषा क्वचिदन्यदेव ।
विधेर्विधानं बहुधा समीक्ष्य
चतुर्विधं बाहुलकं वदन्ति ॥' इति वचनात् ।

बहूनर्थान् लातीति बहुलम् । पञ्चपाद्यादावुणादीनामुक्तत्वात् ननु बहुलग्रहणं किमर्थमित्याशङ्क्य वार्तिककृतोक्तम्[4]—

'बाहुलकं प्रकृतेस्तनुदृष्टेः प्रायसमुच्चयनादपि तेषाम् ।
कार्यसशेषविधेश्च तदुक्तं नैगमरूढिभवं हि सुसाधु ॥ १ ॥'

बहुलस्य भावो बाहुलकम् । तदुक्तम् । कुतः[5] । प्रकृतेस्तनुदृष्टेः प्रकृतीनामल्पदर्शनात् । तथा तेषामुणादीनां प्रायेणाकार्त्स्न्येन समुच्चयनाद्विधानात् । तथा कार्यसशेषविधेरेव । प्रकृताद्याश्रयाणां कार्याणां सशेषाद्विधेश्च । अयं भावः । अल्पाः प्रकृतय उक्ताः । अल्पे च प्रत्ययाः अल्पानि च कार्याणि । तस्माद्बहुलग्रहणादनुक्ताः प्रकृतयः प्रत्यय

---

१. पूङः पूञ् इत्रः स्यात् करणेऽर्थे नाम्नि N. २. करणेऽर्थे C. ३. Given after the Sûtra Dc3, PC. ४. कात्यायनेनोक्तम् PC, Dc3. ५. कुत PC, Dc3.

च केचिद्विहिताः केचित् प्रयोगादुन्नीयन्ते ।
संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।
कार्याद्विद्यादनुबन्धमेतच्छास्त्रमुणादिषु ॥
कृवापाजिमिस्वदिसाध्यशूभ्य उण् ॥

---

णि चोन्नेयानीत्येवमर्थं बहुलग्रहणम् । हि यस्मान्नैगमरूढिभवं
कात् सुसाधु स्यात् । नैगमा वैदिकाः । रूढिभवा लोकसिद्धाः ।
न्द्वो विभाषयैकवत् । वैदिकानां रूढानां व्युत्पाद्यत्वमन्यैरप्यङ्गी-
त्याह—
'नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम् ।
यन्न पदार्थविशेषसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम्' ॥
नाम प्रातिपदिकं निरुक्तकारो निरुक्ते धातुजमाह । व्याकरणे
स्य तोकमपत्यं शाकटायनोऽप्याह । एवं जातिगुणक्रियावाचि-
ब्दानां त्रय्येव प्रवृत्तिर्न चतुष्टयी । यादृच्छिकानामभावात् ।
सर्वे क्रियाशब्दा एव स्युः । सर्वेषां धातुजत्वात् । तत
प्रवृत्तिर्न त्रयी न चतुष्टयी । अथाव्युत्पन्नशब्दानां कथं धातु-
धारणम् । अत आह—यन्नेति । पदमर्थः प्रयोजनमस्य
प्रकृत्यादिपदार्थविशेषात्समुत्था प्रादुर्भावो यस्य तत् ।
तेपदोक्तप्रत्ययविशेषादनिष्पन्नं डित्थादि तत्र थादेः प्रत्ययात्
धातोरूह्यम् । स ऊहः कीदृशः । अत आह—
संज्ञास्विति । संज्ञासु रूढशब्देषु धातुरूपाणि कल्प्यानीति
ततः परे प्रत्ययाश्च कल्प्याः । कार्याद् गुणाभावादेरनु-
कारादिकं विद्यात् । एतदुणादिषु शास्त्रं शास्त्रनिबन्धत्वात्
षयत्वाद्वा । तत्रोणादीन् दर्शयति—कृवापेति । डुकृञ्
। वा गतिगन्धनयोः विशेषणे च । पा पाने । जि जये ।

---

योगवशाद्° C. २. °हनूबन्ध° P., $D_4$. ३. स्विदि $N_1$. ४. °मर्थं
C. ५. मस्य स तथा $Dc_1$. ६. समुत्थः PC, $Dc_3$.

कारुः । वायुः । पायुः । जायुः । मायुः । स्वादुः ।

साधु । आशु । गमेर्डोः ॥ गौः ।

ग्लानुदिभ्यां डौः ॥ ग्लौः । नौः ।

सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् ॥

सेतुः । तन्तुः [1]। क्रोष्टा । इत्यादि ।

अवितॄस्तृतन्त्रिभ्य ईः ॥ अवीः । तरीः । स्तरीः । तन्त्रीः

---

डुमिञ् प्रक्षेपणे । ष्वद स्वादे । साध संसिद्धौ । अशू व्याप्तौ कारुः । णित्त्वाद् वृद्धिः । 'अचो ञ्णिति' इति । कारुः शिल्पी इन्द्रो वेधाः । वायुः । 'आतो युक्' । पायुरिति । पायुर्वस्तिः जायुरग्निरौषधं वा । मायुः पित्तम् । स्वादुः रसः । साधु । आशु त्यव्ययं क्लीबं वा क्रियाविशेषणम् ।

गमेः । गच्छतीति गौः सौरभेयी ।

ग्लानुदि । ग्लायतीति ग्लौश्चन्द्रः । नुदतीति नौस्तरीः सितनि । सिनोति सेतुः । तनोति तन्यते वा तन्तुः । गच्छतीति गन्तुः । मस्यति मस्तुः । सचते सक्तुः । अवति ओतुः । दधाति धातुः । क्रोशतीति क्रोष्टा । आदिनान्येपीत्थं ज्ञेया इति दर्शयति तांश्चाग्रे दर्शयिष्यामः ।

अवि । अव रक्षणे । तॄ प्लवनतरणयोः । स्तृञ् आच्छादने तत्रि कुटुम्बने । अवीर्भूपालभूभृतौ । तरीर्नौर्वायुः । स्तरीः शय्या शयनं वा । तन्त्रीः शुष्कस्नायुः ।

---

१. क्रुशभ्य° N. २. C drops it. ३. After it—गन्तुः । मस्तुः । सक्तुः । ओतुः । धातुः । क्रोष्टा &c. $B_2$. ४. 'अचो—' इति Dropped $Dc_3$, PC ५. वेधाश्च । वायुर्वातः । पायुर्बस्तिः । $Dc_3$, PC.

लक्षेर्मुट् च । लक्ष्मीः ।

संस्त्याने स्त्यायतेर्ड्रट् ॥ संस्त्यानं स्त्रीत्वम्
ङीप् । स्त्री ।

जृविशिभ्यां झच् ॥ झोन्तः । जरन्तः ।
गण्डिमण्डोजनिनन्दिभ्यश्च ॥ गण्डयन्तः । मण्डयन्
यन्तः । नन्दयन्तः ।

श्रुदक्षिस्पृहिगृहिदृजिभ्य आय्यः ॥ श्रवाय्यः ।
स्पृहयाय्यः । गृहयाय्यः । दराय्यः । जयाय्यः

---

लक्षेः । लक्षेरीप्रत्ययस्तस्य मुडागमश्च । लक्षयन्ति कृ
त्वा कृतिभिर्लक्ष्मीः । इत उत्तरं विग्रहानुसारेण कर्त्राद्यथ
ज्ञेयाः । सौत्रा अपि धातवस्ततो ज्ञेयाः । तत एवार्थाश्च तेष
उदाहरणार्थास्तु वक्ष्यामोप्रसिद्धान् । प्रसिद्धास्तु प्रसिद्धेर्जेय
धात्वर्थानुसारेण नेयाः ।

संस्त्याने । स्त्रीति । स्त्यायत्यस्यां गर्भ इति

जृविशि । जीर्यते जरन्तः वृद्धः । विशति वेशा
विशत्यस्मिन् वा वेशन्तः पल्वलम् । गण्डि । गण्डयतीति
मेघः । मण्डयति मन्डयन्तो नटः । जनयतीति जनयन्तः
जीति पठन्ति केचित् । जीयते जयन्तः हस्तिजित्वरौ ।
नन्दयन्तः ।

श्रुदक्षि । शृणोति श्रवाय्यः । दक्ष्यते दक्षाय्
यतीति स्पृहयाय्यः । गृहयतीति गृहयाय्यः । दृणातीि
जयतीति जयाय्यः ।

---

१. ड्रट् $C_1$ $N_1$. २. $D_2$, $B_2$, N drop डित्वात्. ३.
४. शृ $B_1$, $D_1$, $D_3$, P, C. ५. जृम्भ C. ६. दराय्यः $B_1$, I
७. उदाहरणास्तु $Dc_1$. ८. दक्षते PC. ९. drop $Dc_1$.—दृणा

स्तनिदूषिपुषिगदिमदिहृदिभ्यो णेरित्नुच्
ण्यन्तेभ्य इत्नुच् स्यात् ॥ अदन्तत्वान्न वृद्ध्यादि । स
दूषयित्नुः । पोषयित्नुः । गदयित्नुः । मदयित्नुः ।

कॄगॄस्तृजागृभ्यः क्विन् ॥ कीर्विः । गीर्विः
अविचिण्णलित्युक्तेर्न गुणः । जागृविः ।

असुनादयः प्रागुक्ताः ।

---

स्तनि । स्तनयित्नुर्घनः । दूषयित्नुर्दूषकः । दू
पठन्ति । हर्षयित्नुर्हर्षक इत्युदाहरन्ति केचित् । पोषयि
कोकिलः । गदयित्नुर्वादी । मदयित्नुर्मद्यम् । हृदयि
केचिदमुं न पठन्ति नोदाहरन्ति च ।

कॄगॄ । कीर्विः किरणम् । गीर्विः गिरणम् ।
स्तृविरध्वर्युः । केचित् स्तॄ इति दीर्घं पठन्ति । स्तीर्विरि
जागर्तीति जागृविर्वह्निप्रबुद्धो ।

असुनादय इति । 'असुन्—' इत्यादि सूत्रे ।
भिर्व्याख्याताः । इदानीमादिशब्दसूचितानुणादीन् मूलं
दशपाद्यनुसारेण इकारान्तादिक्रमेण कथयामः । तत्रैवं
'भूतेपि दृश्यन्ते' इति सूत्रेणान्यकालेपि ज्ञेयाः । तथा
गम्यादयः' इति सूत्रेण गम्यादयो भविष्यत्येव स्युः ।
संप्रदाने' इति सूत्रेण तौ संप्रदाने 'भीमादयोपा
भीमभीष्मादयोपादाने स्युः । 'ताभ्यामन्यत्रोणादय
सूत्रेणान्यत्रोणादयः संप्रदानापादानाभ्यामन्यत्र ज्ञेया

---

१. मदि dropped $B_2$, $D_4$. २. $D_2$, $D_4$ drop these form
मदयित्नुः only; N drops पोषयित्नुः only. ३. क्किम् $B_2$.
it—उणादय इति वा पाठः C.

अशावतृभ्योनिः । अशनिर्वज्रः । अवनिर्भूः । तरणिः सूर्यः । अर्तिसृधृधमिभ्यश्च । एभ्योनिः । अरणिः अग्निपात्रम् । सरणिः पन्थाः । धरणिर्भूः । धमनिर्वंशैकदेशो । आङि शुषेः सनश्छन्दसि । आङ्पूर्वाच्छुषेः सनन्तादनिः स्याच्छन्दसि । भाषायामपीति केचित् । आशुशुक्षतीत्याशुशुक्षणिः अग्निः । कृषेरादेश्च चः । कृषेरनिः स्यादादेश्च चकारः । कर्षति कृषतीति वा चर्षणिः वृषः । अदेर्मुट् च । अनिर्मुडागमः । अत्तीति अद्मनिरग्निरश्वो वा । वृत्तेः । वर्ततेनया वर्तिः पन्था: । क्षिपेः किच्च । [1]क्षिपतेरनिः कित् । क्षिप्यते क्षिपणिरस्त्रं वडिशं दण्डश्च । जसिसहोरुरिन् । जस्यते जासयते वा जसुरिः समाधिरशनिर्वा । सहते सहुरिः पृथिव्यक्रोधनौ । भुवोनिन् । भवतेरनिः स्यात् । भवन्त्यस्यां भूतानि भवनिर्लोकस्थितिः । असिसञ्जिभ्यां क्थिन् । अस्यते अस्थि कीकसम् । सज्जते सक्थि ऊरुः । प्लुषशुषकुषिभ्यः क्सिः । प्लुष्णाति प्लुष्यति वा प्लुक्षिः । अग्निजठरौ । शुष्यति तेन शुक्षिः तेजः । कुष्यति कुक्षिः उदरपार्श्वम् । अशेर्नित् । अशेः क्सिः निच्च । अश्नाति अश्नुते वानेन रूपमक्षि नेत्रम् । नियो मिः । नयति नेमिश्चक्रान्तः । अर्तेरूच्च । अर्तेर्मि ऊच्चादेशः । ऋच्छति इयर्ति अर्यते वा ऊर्मिस्तरङ्गः । अशे रश् च । अशेर्निः स्यात् रशादेशश्च । अश्नाति अश्नुते रश्मिः । भुवः कित् । भवन्त्यस्यां भूमिः । दल्मिः । दलेर्निपातः । दलयति दल्यतेनेन वा दल्मिरायुधम् । वीज्याहाज्वारिभ्यो निः । वीयते वेणिः । बाहुलकात् णत्वम् । जिनाति ज्यानिः । हानिः । ज्वरति जूर्णिः । सृवृषिभ्यां कित् । आभ्यां निः स्यात् स च कित् । सरत्यनेन

---

१. क्षिपेरनिः स च कित् । PC, DC₃ २. हसि Pc, Dc₃. ३. हसति हस्यते वा हसुरिः PC, DC₃. ४. वारि DC₃, PC. ५. कृष्णाति PC, DC₃. ६. वा तेन Dc₁.

गेरङ्कुशः । वर्षति वृष्णिर्यादवः । अङ्गेर्नलोपश्च । अङ्ग्यते
ङ्गति वा अग्निः । वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् । एभ्यो निः
च नित् । वहति हव्यं वह्निः । श्रयन्त्येतां श्रेणिः सङ्घः ।
यते पुम्भिः श्रोणिः कटिः । युवन्त्यस्यां योनिः प्रकृतिर्भगश्च ।
णिः । ग्लायन्त्यनया ग्लानिर्दौर्बल्यम् । हीयते हानं वा हानिः । त्वरते
रणं वा तूर्णिः । घृणिपृश्निपार्ष्णिचूर्णिभूर्णि । एते निपात्याः ।
घर्तीति घृणिः सूर्यः । स्पृशतीति पृश्निः । स्पृशन्त्यनया पार्ष्णिः ।
ाति भूर्णिः । बहुलात् घूर्णिः शनिः । कृणिः । वृदृभ्यां विन् ।
ाति वर्विः धात्री । दृणात्यनया दर्विः । जॄशॄस्तॄजागृभ्यः क्विन् ।
यः क्विन् । जीर्यतीति जीर्विः कायः । शृणाति शीर्विर्हिंसा । स्तृणाति
ोर्विरध्वर्युः प्राणजातिश्च । जागृविः । दिवो द्वे दीर्घश्चाभ्यासस्य[2] ।
व्यति अनेन दीदिविरन्नम् । कृविघृष्विछविस्थविर्दाविकिकी दिविः । एते
ात्यन्ते । करोति कृविः कारुः । जिघर्ति घृष्विर्वाध्वग्नी । छादयति
ेः शोभा । तिष्ठति स्थविः स्थावरः अग्निश्च । ददाति दविर्दाता ।
ति कवते वा किकिर्विद्वान् । दीव्यति दिविः द्यूतकितवौ ।
ुलकाद् रेविः । पातेर्डतिः । पाति पतिः । अमेरतिः ।
मतीत्यमतिर्व्याधिर्गतिः । वहिवस्यर्तिभ्यश्चित् । एभ्योतिः स च
् । वहतीति वहतिर्वायुरनड्वांश्च । वसत्यस्यां वसतिराश्रयः ।
च्छतीत्यरतिर्वायुर्मरणं च । अञ्चेः को वा । अतिः स्यात्
देशश्च वा । अञ्चति अच्यते वा अञ्चतिरङ्कतिर्ब्रह्मवाय्वग्निघृणयः ।
ेरंह च । हन्तेरंहादेशश्च । हन्ति हन्यते वा अंहतिः
ाः कालो रथश्च । रमेर्नित् । स च नित् । रमतेस्यां रमतिः
ड़ा । सुञो रित् दीर्घश्च । सुनोति सूयते वा सूरिः

. अङ्गते DC₃, PC. २. अभ्यासस्य च दीर्घः PC. ३. After it—दिवः
् द्वे चाभ्यासस्य च दीर्घः । DC₃. ४. अग्निश्च dropped DC₃, PC.
ावि: DC₃, PC. ६. व्याधिगती PC. ७. Before it—रमेरतिः PC,
।

पण्डितः। अदिशदिभूशुभिभ्यः क्रिन्। अत्ति अद्यते वा अद्रिः। शद्यते शद्रिः वज्रम्। भवति भूरिः बहु। शोभते शुभ्रिर्दर्शनीयः। वङ्क्र्यादयः। निपात्याः। वञ्चते वङ्कते वा वङ्क्रिः शल्यम्। मङ्कते मङ्क्रिः शठः। अक्रिरङ्क्यम्। राशतिभ्यां त्रिप्। रां निद्रां रात्रिः। शतिः सौत्रः। शततीति शत्रिः हस्ती। अदेर्निच्च। अदेस्त्रिः स च नित्। अत्ति अत्रिर्ऋषिः। मृकणिभ्यामीचिः। म्रियते मरीचिः। कणति कण्यते वा कणीचिः चक्षुःप्राणौ। वेङ् डिच्च। ईचिः स च डित्। वयतीति वीचिः। श्वयतेश्चित्। ईचिः स च चित्। श्वयति श्वयीचिश्चन्द्रः। नौ षञ्जेर्घथिन्। निषजति निषज्यते वा निषङ्गथिः रथकूबरः। उदयतेश्चित्। उत्पूर्वादर्तेर्घथिन् स च चित्। उदृच्छति उदर्यते उदरथि[1] वप्राभ्रिकायाः। सर्तेर्णित्। घथिन् स च णित्। धावति सारथिः। अमेर्गुरी रश्च लो वा। अमेर्गुरिः स्यात् तस्य र वा लः। अमति अङ्गुरिः अङ्गुलिः। इञ् सर्वधातुभ्यः। कवते कविः। पविः वज्रम्। परिमोक्षमार्गः। हृपिशिरुहिवृतिविदिच्छिदिकीर्तिभ्यश्च। एभ्य इञ्। हरति हरिः विष्णुसिंहाद्याः। पिशति पिश्यते वा पिशिः केशोण्डकमण्डलवः पेशलश्च। रोहति रोहिः जन्म[2]। वर्तते वर्त्यते वा वर्तिः। वेत्ति वेदिः यज्ञाधिष्ठानम्। कीर्ति सौत्रः। कीर्तनं कीर्तिः। इगुपधात् कित्। इञ् स च कित्। भिनत्ति भिदिः वज्रम्। छिदिः परशुः शस्त्रम्[3]। शोचति जनः क्रियमाणं शुचिर्विद्वान्। ऋषिः। कृषिः। भ्रमेः संप्रसारणं च। इञ् स च कित्। भ्रमति भ्राम्यति वा भृमिर्वायुः। क्रमितमिस्तम्भा... मत इच्च। एभ्य इञ् स च कित्। एषामस्य इत्। क्रामति क्रिमिः प्राणी। ताम्यति तिमिर्मत्स्यः। स्तभ्नाति स्तिभिरम्भोधिः। मनेरुच्चोपधायाः। इञ् उपधाया उच्च। मन्यते मुनिः। वल्लेर्वलि-

1. सर्पः Dc3. PC. 2. °रङ्कनम् PC. 3. परशुः dropped Dc3. PC. 4. इः PC.

ाहिरण्ये । इञ् वलिरादेशश्च अहिरण्ये । वल्लः सौत्रः । वल्लते वलिः
ाङ्मासंकोचः । अहिरण्ये किम् । वल्लिर्हिरण्यशलाका । वसि-
पिवदिराजिव्रजिध्वजिसदिहनिकमिकषिवाशिवारिभ्य इञ् । पुन-
ञ्विधिबलान्नित्यम् । वसति वासिः तक्ष्णो भाण्डी । वपत्यस्यां
पिः पुष्करिणी । वदत्यस्यां वादिः वीणा । राजति राजिर्लेखा ।
जति व्राजिर्मनः । ध्वजति ध्वाजिरश्वः । सीदति सादिरश्वारोहः ।
न्त हानिः । काम्यते कामिः कामुकः । कषति काषिर्हिंसकः ।
श्यते वाशिर्जलदः । वार्यते वारिः । नहो भश्च । इञ् भोन्ता-
ाश्च । नह्यते नाभिः । कृषेर्वृद्धिश्छन्दसि । इञ् वृद्धिश्च । कर्षति
ार्षिः । छन्दसि किम् । कृषिः । श्रः शकुनौ । इञ् वृद्धिश्च ।
गाति शारिः । शकुनौ किम् । शारिर्हिंस्रः शूलं च । कृञ उदीचां
रुषु । इञ् वृद्धिश्च । कारिः शिल्पी । उदीचां किम् । करि-
णुः । जनिघसिभ्यामिण् । जायते जनिः प्रादुर्भावः । घासि-
नेः । अज्यतिभ्यां च । अजति आजिर्युद्धम् । अततीत्यातिः
ी । पादे च । अज्यतिभ्यामिण् । पादाभ्यामजति पदाजिः ।
ातिः । 'पादस्य पद्' इति पद्भावः । अशिपणाय्यो रुडायलुकौ च ।
भ्यामिण् यथाक्रमं रुट् आयलुक् चागमादेशौ स्तः । अश्नाति
नुते वा राशिः लग्नं यवादिसङ्घो वा । पणाय्यतेनेनेति पाणिः ।
ो डित् । वयतीति विः पक्षी तन्तुवायश्च । प्रे हरतेः कूपे ।
स च डित् । प्रह्रियतेस्मादुदकं प्रहिः कूपः । नौ व्यो यलोपः
स्य च दीर्घः । निपूर्वाद् व्येञ इण् स च डित् यलोपः पूर्वपद-
श्च । निवीयते नीविः । समाने ख्यः स चोदात्तः । समान-
त् ख्याते रिण् स च डित् यलोपः समानस्य सादेशः स चोदात्तः ।
ानं ख्यायते सखा वयस्यः । आङि श्रिहनिभ्यां ह्रस्वश्च ।
ङ्पूर्वाभ्यामाभ्यामिण् डिच्च आङो ह्रस्वत्वं चोदात्तत्वं च ।
श्रीयते अश्रिः कोणः । आहन्ति प्राणिनमहिः । अत्र इः ।

. बलाण्णित्वम् Dc1. २. पणायते PC, Dc3. ३. समानः PC, Dc3.

पुनाति पविः । भवति भविः । खनिकष्यज्यसिवसिध्वनिसनिग्रन्थिचरिभ्यश्च । इः । खन्यते खनिः । कष्यते कषिः । अजिस्तेजः । अस्यते असिः । वसत्यस्यां वसिः । ध्वनति ध्वनिः । सनोति सनिः भक्तिर्दानं च । ग्रथ्यते ग्रन्थिः । चरिर्विषयः । उभेर्द्वे च । उभेरिः द्वादेशश्च । उभति उभ्यते [illegible] । वृत्तेश्छन्दसि । वर्तिर्द्रव्यं दीपाङ्गं च । भुजेः किच्च । इः किन् । भुनक्ति भुज्यते वा भुजिः सूपो भोगश्च । कृगृशॄपॄकुटिभिदिच्छिदिभ्यश्च । इः किच्च । किरति कीर्यते वा किरिराखुः । गिरिः । शिरिः शलभः शिला च । पुरिः पूर्भूपश्च । शरीरम् । भिदिः प्रहरणम् । छिदिः शस्त्रम् । कुडिकम्प्योर्न इः किच्च नलोपश्च । कुडिः काय आलयश्च । कपिः कृशानुः । वसिवितसस्तिः । वसत्यस्यां वस्तिर्गुह्यमङ्गम् । वितस्तिः । पथेर्नित् । तिर्निच्च । पत्तिर्भागः । दृणातेर्ह्रस्वश्च । दीर्यते दृतिः प्लवः । पातेरतिः । पाति [illegible] । वातेर्नित् । अतिर्निच्च । वातीति वातिर्गन्धमिश्रपवनः । तनः [illegible] तनोति तन्द्रिः । 'जीर्यतेः' क्रिन् रश्च वः । क्रिन् रस्य [illegible] जीर्यते जिव्रिर्देहम् । ग्रहे रनिः । गृह्णाति गृह्यते [illegible] कुदरान्तरस्थानम् ।

इतीदन्ताः ।

यापेः किद् द्वे च । ईः कित् द्वित्वं चानयोः । ययीर्मुक्तमार्गः । पिबति पातीति पपीः सूर्यः । वातप्रमीः । [illegible] वातं प्रमिनोति वातप्रमीः ॥[4]

इति ईदन्ताः ।

छन्दसीणः । उण् । एति आयुः जरायुः । दॄसनिजनिचरिचटिरहिभ्यो ञुण् । दृणाति दीर्यते दारुः । सनोति

---

1. भूपो PC. 2. इः स्यात् DC₃. 3. निपात्यः DC₃. 4. it मृगः DC₃.

शा सानुः पर्वतैकदेशः । जायते जानुः । चरति चारुः । चटति चाटुः
ःहयति राहुः । प्रत्ययान्तरं 'ञ्नित्यादिः—' इत्याद्युदात्तार्थम्
इरनुबन्धकरणं 'जनिवध्योश्च' इति ह्रस्वनिषेधार्थम् । किंजरयो
श्रिणः । किंजरापूर्वाभ्यां शृइण्भ्यां ञुण् । किंशृणातीति किंशारुः
ग्रस्यशूकम् । जरामेति जरायुर्गर्भवेष्टनम् । त्रो रश्च लः । तॄ त्र
भाभ्यां ञुण् रस्य लः । तरन्त्यस्मिन् वर्णास्तालु वदनैकदेशः
मच्छतीत्यालुः शाकम् । कृके वचः कश्च । ञुण् । कृकं वक्ति
कृकवाकुः कुक्कुटः कृकलासश्च । भृमृशीतॄचरित्सरितनिमिमस्जिभ्य
उः । बिभर्ति भरुः धारयिता स्वामी च । म्रियन्तेऽस्मिन् मरुः
मजलतृणो देशः । शेतेत्यर्थं शयुः अजगरः । तरन्त्यस्मिन् तरुः ।
रन्ति देवाश्चरुः । त्सरति त्सरुः खड्गादिमुष्टिः । तनोत्याहारं तनुः
कायः । मीयते मयुः पशुराकूतं च । मज्जन्त्यस्मिन् मधूनि मद्गुः
पक्षी । न्यङ्क्वादित्वात् कुत्वम् । अणश्च । उः । अणतीत्यणु
सूक्ष्मम् । धान्ये नित् । अण उर्निच्च धान्ये । अण्यते प्राणिभिरणुर्धा-
न्यविशेषः । बहुलादन्यत्रापि । कटति कटुः । बटति बटुः ।
शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च । उः निच्च । शृणाति
शारुः क्रोध आयुधं च । स्वरति स्वरुः वज्रम् । स्निह्यति स्नेहुः स्निग्धः ।
त्रपते त्रपुः । अस्यन्ते अस्यन्ति वासवः प्राणाः । वसति कृतिषु वसुर्देवो
धनं वा । हन्ति हन्यते वा हनुर्मुखैकदेशः । क्लेदयति क्लेदुश्चन्द्रः ।
बध्नाति स्नेहेन बन्धुः । मन्यते मनुः प्रजापतिः । स्यन्देः संप्रसारणं
धश्च । उर्निच्च धान्तादेशः संप्रसारणं च । स्यन्दतेत्यर्थं सिन्धुर्नद्यादि ।
उन्देरिच्चादेः । उर्निच्च आदेरिदादेशश्च । उनत्तीतीन्दुश्चन्द्रः । इषेः किच्च ।
उः किच्च निच्च । इष्यते इषुः । स्कन्देःसलोपश्च । उर्निच्चादेर्लोपः ।
कन्दत्यस्मिन् कन्दुः पाकस्थानम् । सृजेरसुमच् । उर्नित् असुम
आगमः सलोपश्च । सृज्यते रज्जुः । कृतेराद्यन्तविपर्ययश्च ।
उर्निच्च आद्यन्तविपरीत्यं च । कृत्यतेनेन तर्कुः सूत्रवेष्टना । नावञ्चेः ।

१. अम्बूनि DC3. २. त्यणुः सूक्ष्मः DC3, PC.

र्निच्च । नियतमञ्चति न्यङ्कुर्मृगविशेषः। न्यङ्क्वादित्वात् कुत्वम्।
लिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च । उर्निच्च । फलेर्गुक्
गमः । फल्गु गिरिरसारं च । पाटेः पटिः । पाटयतीति पटुः
शारदः । नमेर्नाकः । नम्यतेनेन नाकुः ऋषिर्वल्मीकश्च । मन्यते-
न्तादेशः । मन्यतेस्यर्थं मधु । जनेस्तोन्तादेशः । जायते जतु
क्षा । वलेर्गुक् च । गुगागमश्च । वलतीति वल्गुर्बलवान् मधुर-
भावश्च । शः कित् सन्वच्च । उर्निच्च किच्च सन्वच्च । मातुः स्तन्यं
ति शिशुः । यो द्वे च । उः किच्च निच्च यातेर्द्वित्वं च ।
न्ति तेन पुण्यं ययुरश्वमेधीयोश्वः । कुर्भ्रश्च । भृञः कुः स्याद् द्वित्वं
। बिभर्ति भरति वा तेजो बभ्रुः पिङ्गलः । प्राक्प्रत्ययनिर्देशोन्येषां
द्धये । करोति सर्वं चक्रुः । हन्ति जघ्नुः । पूर्यतेसौ पपुश्चन्द्रः ।
भेदिव्यधिगृधिधृषिहृषिभ्यः । कुः । पृणाति पुरुः धर्मो राजा च ।
नत्ति भिदुः दम्भोलिः । विध्यतीति विधुः नागाग्निकामचन्द्र-
त्राणि । गृध्यति गृधुः लुब्धः । धृष्णोति धृष्णुः प्रगल्भः । हृष्यति
ः हृष्टः । कृग्रोरुच्च । कुः उश्चान्तादेशः । करोति कुरुर्जनपदो
ना च । गृणाति गुरुः । अपदुस्सुषु स्थः । अपतिष्ठति अपष्ठुः
रुः । दुःखेन तिष्ठति दुष्ठुरशोभनः । सुखेन तिष्ठतीति सुष्ठुः
भनः । भावेपि । अपष्ठु । दुष्ठु । सुष्ठु ।[1] रपेरिच्चोपधायाः । कुः ।
ति दुष्टं रिपुः । अर्जिदृशिकम्यमिपशिबाधामृजिपशितुक्धुक्-
हकाराश्च । कुः । अर्जेर्ऋजिरादेशः । अर्जयति यशः ऋजुः ।
ः पशू । पश्यति पशुः । कमेस्तुगागमः । काम्यते कन्तुः
मकामुकौ । अमेर्धुक् च । अमतीत्यन्धुः । पशेः सौत्रस्योपधा-
र्यः । पश्यते वायुना पांशुः । बाधेर्हः । बाधतेरीन् बाहुः । प्रथि-
देभ्रस्जां संप्रसारणं सलोपश्च । कुः । प्रथते पृथुः विशालो राजा च ।
ते मृदुः । भृज्जाति भृगुः । न्यङ्क्वादित्वात् कुः । लङ्घिबंह्योर्न-

[1] After it दुष्ठु PC.

श्च । कुः । लङ्घ्यते लघुः । बंह्यते बहुः । ऊर्णोतेर्नुलोपश्च ।
। ऊर्णोति ऊरुः । महति ह्रस्वश्च । ऊर्णोति ऊर्णूयते च उरु-
ान् । श्लिषेः कश्च । कश्चान्तादेशः । श्लिष्यति श्लिकुर्भृत्योद्यमौ ।
ङ्परयोः खनिशृभ्यां डिच्च । कुः डिच्च । आखनत्याखुः । परान्
णाति परशुः । हरिमितयोर्द्रुवः । कुः डिच्च । हरिभिर्द्रूयते हरिद्रु-
ः । मितं द्रवति मितद्रुः समुद्रः । बहुलादन्यत्रापि । शतधा
ति शतद्रुः नदी नदश्च । खरुशङ्कुपीयुनीलङ्गुलिगु । क्रन्ता निपा-
न्ते । खनति खोरति खुरति वा खरुः मूर्खकथनखुराः ।
ङ्क्तेस्मात् शङ्कुः कीलः । पिबति तेजः पीयुः स्वर्णम् । पिबत्यायुः पाति
न्तं पीयुः कालो भूपश्च । नीलं गच्छति नीलङ्गुः क्रिमिः । लगति
गुर्मूर्खः । मृगय्वादयश्च । क्रन्ता निपात्यन्ते । मृगं याति मृगयुः ।
मायाति अस्मयुः जिह्मः । भुवं याति भुरण्युर्वह्निः । वरे याति
ण्यः आदित्यमरुतौ । पः किच्च । तुः किच्च । पिबति पाति
ायति वा पातुः । अर्तेश्च तुः । स किच्च । ऋच्छत्यर्थते वा ऋतुः ।
मिमनिजनिगाभापायाहिभ्यश्च । तुः । कामयते कन्तुः । मन्यते
ते मन्तुः मनः अपराधश्च । जायते जन्यते जन्तुः । गायति गातुः ।
ते भातुरर्चिष्मान् । पाति पातुः पालकः । यातीति यातुः पान्थः ।
ोति हेतुः । चायः की । चाय्यते केतुः । आप्नोते-
श्च । आप्नोति अप्तुः यज्ञयोनिर्जन्तुश्च । बहुलादन्यत्रापि ।
तीत्यन्तुः । वसेस्तुन् । वसन्त्यस्मिन् वस्तु धनभावौ । अगारे
च । वसन्ति तास्मिन् देवा वास्तु अगारम् । कृञः क्तुः ।
यतेसौ धर्मार्थिभिः क्रतुः । एधिवह्योश्चतुः । एधते एधतुराढ्यः ।
ति वहतुरनड्वान् । जीवेरातुः । जीवन्त्यनेन जीवातुः अन्नं
ग्नौषधं च । कृहृभ्यामेणुः । करोति करेणुः करिणी ।
ति चेतः हरेणुः सुरभिद्रव्यम् । बहुलादन्यत्रापि । गच्छति

. After it—रक्षकः । PC.

गमेणुः पान्थः । पचति पचेणुः पावकः । यजति
ऋत्विक् । यजिमनिशुन्धिदसिजनिभ्यो युच् ।
यज्युरध्वर्युः । मनुते मन्यते वा मन्युः कोपादिः । शुध्यति
अग्निः । दस्यति दस्युश्चौरः । जनयति जन्युः प्रजापतिः पिः
भुजिमृङ्भ्यां युक्त्युकौ । भोजनं भुज्युः । मरणं मृत
सर्तेरयुः । सरति सिसर्ति वा सरयुर्वायुः सरिच्च ।
क्षिपेश्च । क्षिपति क्षिप्यते वा क्षिपण्युर्वायुः । भुवश्च । क०
भुवण्युरीश्वरः । अनुङ् नदेश्च । नदेः क्षिपेश्चानुङ् । नदति नः
सिंहो वा । क्षिपति क्षिप्यते वा क्षिपनुर्बाहुः । कृहनिभ्यां
करोति कृणोति किरति वा कृणुः कारुः । हन्त्याहारं
बहुलान्नलोपः । गमेः सन्वच्च । क्त्नुः । आशु
जिगत्नुः प्राणोमीयो वा । दाभाभ्यां नुः । दीयते दानुः २
धनम् । भाति भानुः । बहुलाच्च चित्रस्वर्विश्वेषु । चित्रं :
चित्रभानुः । स्वर्भानुः । विश्वभानुः । वचेर्गश्च । नुः गान्त
वग्नुर्वक्ता । धेट इच्च । नुः इच्चान्तादेशः । गुणा धयन्ति तां
सूङः कित् । नुः किच्च । सूयते सूनुः । स्थाणुः ।
स्थाणुः शंभुस्तम्भौ । अजिवृरीभ्यो निच्च । णुर्निच्च । अजति
वीभावः । वृणोति व्रियते वर्णुः देशविशेषः । रीयते रेणुः ।
किच्च । णुः किच्च निच्च । वेवेष्टीति विष्णुः । कुडिठ
काकुः । कुडति कुडाकुर्दुर्गतः । कुषाकुराखुः कपिः परोपता[1]
सर्तेर्मुक् च । काकुर्मुगागमश्च । धावत्यत्यर्थं सृमाकुः मृगवारिव
दुगागममन्ये इच्छन्ति । सृदाकुः । पर्देर्नितुसंप्रसारणमल्लं
पर्दति पृदाकुः सर्पः कुशब्दकृत् । ह्रियः कुक् रश्च लं
कुः रेफस्य लो वा । जिह्रेति ह्रीकुः ह्लीकुर्लज्जितः कु
इषः क्सुः । इष्यते इक्षुः । आदौ प्रत्ययोच्चारणादशेरपि । इ

१. करोपतापी PC, परोपकारी Dc3.

नुते वा अक्षुरर्कः । वहेरपि । वक्षुर्नटः । अर्तेररुः ।
छति अर्यते वा अररुः अलंकारः । कुटः किच्च । कुटरुः
प्लवगौ । मापो रुरी च । रुः ई चान्तादेशः । मान्त्यमरा
मीयते वा सूर्येन्दुभ्यां मेरुः । पाति पिबति पीयते वा पेरुः
राजवायुपतङ्गाः । जत्र्वादयश्च । निपात्याः । जायते जत्रु ।
ाति शत्रुः । शृणाति शिग्रुः शाखी । अत्तीत्यत्रुः क्षुद्रजन्तुः ।
ा हन्तुर्हिंस्रः । रुशादिभ्यां क्रुन् । रौति रूयते वा रुरुः ।
ते शत्रुः । जत्र्वादित्वात् सिद्धे वचनं नित्स्वरार्थम् ।
तेर्डउः सन्वच्च । तनोति पिष्टद्रव्याणि तितउः चालनी ।
यसामर्थ्याद्गुणो न । श्मनि श्रयतेर्डुन् । श्मनि श्रयते श्मश्रु ।
श्रादयश्च । निपात्याः । अश्नाति अश्नुते चक्षुः अश्रु । न सूयते
ति वा असु ।

इत्युदन्ताः ।

कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः । कर्षति कर्षते कर्षूः
षाग्निः । चमति परान् तैश्चम्यते वा चमूः । तनोति तन्यते वा
। धनति धन्यते वा धनूः राशिः । सर्जति सर्जूः वणिक् ।
ति खर्जूः कण्डूः । बहुलात् यौति यवागूः । मृजेर्गुणश्च । ऊः ।
ि मर्जूः रजकः । मार्जनं मर्जूः शुद्धिः । वहो धश्च ।
ादेशश्च । उह्यते वधूः । कषेः कच्छः । ऊः कच्छादेशः । कषति
रं कच्छूः कण्डूः । णिच्च कासिपद्यर्तेः । ऊः णिच्च । कसति कासूः
लाङ्गविधिशक्तयः । पद्यते पादूः पादुका । ऋच्छत्यर्यते वा
ः वारिपृथुतरवः । अणो रुश्च । ऊः णिच्च रुरन्तादेशश्च ।
ति तेनोदकमारूः भृङ्गारः । नञि लम्बेर्नलोपश्च । ऊः
नञि । न लम्बत इत्यलाबूः । के श्र एरङ् च । कपूर्वात्
तेरूरेरङादेशश्च । कं शृणाति कशेरूः वीरुत् । त्रौ दुद्

करीषाग्निः PC. २. विकलाङ्गरावि आधिशक्तयः PC, Dc3. ३. रुच्च Dc3.

च । तरतेर्ड्दुडागमश्च । तरति तीर्यते वा तर्दूः जलतरणोपकरणे । दरिद्रातेर्यालोपश्च । अस्य इ आ अनयोर्लोपः । दरिद्रात्यनयाङ्गं दर्द्रूः कुष्ठविशेषः । नृतिशृध्योः कूः । नृत्यति नृतूः वात्याक्रिमिनीतयः । शर्धते शृधूः पायुशब्दधिषणे । अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः । निपात्याः । अमति अम्यते अन्दूः भूषणविशेषः । दृम्भति दृम्भूः कंथुरागौ । जायते जम्बुः । कफं लाति कफेलूः श्लेष्मातकः । कर्कं दधाति कर्कन्धूः बदरी । [4]दिधिं स्यति दिधिषूः पुनर्भूः । भ्रमेश्च डूः । भ्रमति भ्रूः ।

ऊदन्ताः ।

प्रथमः पादः ।

तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ । शंसति शंस्ता । क्षदति क्षत्ता । प्रशास्ति प्रशास्ता । ऋत्विक्संज्ञा एताः । अनिट्त्वार्थं च । बहुलमन्यत्रापि । तृन्तृचौ संज्ञायामनिटौ च । प्रस्तोता । प्रतिहर्ता । प्रतिहन्ता । उपद्रष्टा । उद्गाता । होता । उन्नेता । एतेपि ऋत्विजः । नप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृमातृभ्रातृजामातृपितृदुहितृ । एते निपात्याः । न पतति नप्ता । नयति नेष्टा ऋत्विक्सारथी । त्विषति त्वष्टा रविप्रजापती । क्षत्ता सारथिः । जुहोति होता । पुनाति पोता । मान्यते माता । भ्राजते भ्राता । जायां मिनोति जामाता । पाति पिता । दुनोति पितरं दोग्धि वा दुहिता । सावसेर्ऋन् । सुष्ठु अस्यति स्वसा । यतेर्वृद्धिश्च । ऋन् । यतन्ते यातरः भ्रातृभार्याः परस्परम् । ऋ च नन्देः । ऋन् वृद्धिश्च । न नन्दन्ति भ्रातृजाया यस्यां ननान्दा पतिभगिनी । दिवेश्च ऋन् । दीव्यति देवा । नयतेर्डिच्च ।

---

१. वात्यानटक्रीमि Dc3. २. कञ्थु PC. ३. कफलाति PC, Dc3. दिधेष्टि PC, Dc3 दिधिषूः ५. अनिट्त्वमहार्थं वचनम् । PC, Dc3. वा Dc1. ७. नमति नप्ता Dc3, PC. ८. त्वेषति Dc3, PC. मन्यते Dc3, PC.

नू डिच्च । नयति ना । सव्ये स्थश्छन्दसि । अनू डिच्च । सव्ये
ष्ठति सव्येष्ठा भाषायामपि ।

ऋदन्ताः ।

रातेर्डैः । राति श्रेयोर्थं पात्रेभ्यस्तां राति रायते वा राः
यौ धनं भानुश्च ।

द्वितीयः पादः ।

जीवेरातृकन् वृद्धिश्च । जीवति जीवयति वा जैवातृकः
ायुष्मांश्चन्द्रो भूतानि च । समि कस उकन् । समन्तात् कसति
सुकः स्थिरः । पचिनश्योर्णुकन् कनुमौ च । कादेशानु-
गमौः । पचति पाकुकः सूपकारोध्वर्युश्च । नश्यत्यल्पेन वायुना
ुकः पांशुः । भियः क्रुकन् । बिभेति भीरुकः । क्वुन् शिल्पि-
ायोरपूर्वस्यापि । अपूर्वस्य तावत् शिल्पिनि । तक्षतीति तक्षकः ।
पेशब्दात् सपूर्वस्यापि । तिलान् पीडयतीति तिलपीडकः ।
ायाम् । जनयति जनकः । कलाआङ्पूर्वात् पिबतेः क्वुन् ।
ापकः शास्त्रकर्ता । जहातेर्द्वे च । क्वुन् । जहाति जहकः कालः ।
। धम च । क्वुन् धमादेशश्च । धमति धमकः लोहकारः । हनो
च । क्वुन् । हन्ति वधकः बिडालः । बहुलमन्यत्रापि ।
। कथयति कथकः । रोचते रुचकः । कृषेर्वृद्धिश्चोदीचाम् ।
् च । कृषति कार्षकः कर्षकः कृषको वा । उदकं च । उदेः
न्तो निपातः । उत्स्वाद्यते उदच्यते उदकम् । वृश्चिकृष्योः
कन् । वृश्चति वृश्चिकः । कर्षति कृषिकः । प्राङि पणिकषः ।
णायते प्रापणिकः । प्राकर्षति प्राकृषिकः । मुषेर्दीर्घश्च ।
कन् । मुष्णाति मूषिकः । स्यमेः संप्रसारणम् । किकन् ।
यति सिमिकः वृक्षपत्रविभागकृत् कीटकः । क्रिय इकन् ।

. स्तां राति वा राः Dc3; स्तां रायते वा राः PC.

क्रीणाति क्रयिकः । आङि पणिपनिखनिभ्यः । इकन् । व
णिकः । आपनिकः[1] पथिको वालश्च । आखनिको वराह
कृदाधाराचिंकलिभ्यः कः । कृणोति करोति करति व
सारङ्गः । ददाति दाकः । दधाति धाकः[2] । राति राकः[3] । अ
अर्कः । कलति कल्कः क्वाथकितवौ । स्रवृभूशुषिमुषिभ्यः कः
कः किच्च । धावति सिसर्ति स्रकः वायुसरकौ । वृ
वृकः । भवति भूकः कालो भावमात्रं वा । शुष्यति शुष्क
मुष्णाति मुष्कः चोरः । शुकवल्कोल्काः । निपात्याः । शं
शृणोति वा शुकः पक्षी ऋषिश्च । वलति वयति वल्कं[4]
वल्कलम् । उष्यति उल्का ज्वाला । इण्भीकापाशल्य
मर्चिभ्यः कन् । एति एकः संख्यावाची मुख्यार्थश्च । बि
भेकः मण्डूकः । कायति काकः । पाति पिबति वा पाकः वि
बालौ । शलयति शल्कः काष्ठत्वक् मुद्गः । अतति अत्को ग
मदात्मानौ । मर्चति मचर्कः । नौ हः । नियतं हीयते नीह
निःस्नेहः । नीहाका गोधारः । स्यमेरिट् च । कन् । इडागः
स्यमति स्यमिकः क्रिमिमेघौ । अजिसृञ्धूञो दीर्घश्च । कन्
अजतीति वीकः वायुरक्षि विमलं च । दीर्घविधिरिड्गुणबाधार्थ
सुनोति सूकः अभिषवः । धूनोति धूको वायुः । ह्रियो
लो वा । कन् । रेफस्य लो वा । जिह्रेति ह्रीकः ह्ली
लज्जितः । आनकः शीङ्भियः । शेते शयानकः अजगरः । बिभे
स्माद्भयानकः । आणको लूञ्शिङ्घिधाञ्भ्यः । एभ्य आणकः स्या
लूयतेनेन लवाणकः । शिङ्घ्यते शिङ्घाणकः श्लेष्मा । दधाति धाण
वसुपरिमाणम् । बहुलाण्णस्य नत्वमपीत्येके । लवानकादि । वृतेस्तिक
वर्तते वर्त्यते वा वर्तिका । कृतिभिदिलतिभ्यः कित् । तिकन् कि
कृन्तति कृत्तिका नक्षत्रम् । भिनत्ति भित्तिका कुड्यम् । ल

१. वाणिकृ पथिको Dc3. २. After it स्तम्भः PC, Dc3. ३. Afte
राता PC, Dc3. ४. After it वात्रम् PC.

ः । अवलम्बिका गोधा गन्धर्वभाण्डम् । इष्यशिभ्यां तकन् ।
च । इष्यते इष्टका । अभ्रन्त्यस्यां पितरोष्टका । खजेराकः ।
ाति खजाकः मैथा पक्षी । वलाकादयश्च । साधवः । वलति
ाका । मन्यते मनाका करिणी इत्यादि । शलपटिपतिभ्यो रित् ।
को रिच्च । शलाति शलाका । पटति पटाकः पान्थः । पतति पताका ।
ाकादयश्च । साधवः । पिनह्यतेनेनारीन् पाति वानेन पिनाकः ।
ड्यते तडाकम् । भदते भदाकः अकुटिलः । न भाति
ाकः तमः । पिष्यते पिषाकः तिलपिष्टम् । कौति कवाकः
ी । श्यायते श्यामाकः जघन्यो व्रीहिः । कषिदूषिभ्यामी-
् । कषत्यनया कषीका खनित्रम् । दूषयति दूषीका दृङ्मलम् ।
णेः किङ्कणश्च । किङ्कणादेशश्च । चङ्कणिर्यङ्लुगन्तः कणिः ।
ः भृशं वा कणति किङ्किणीका क्षुद्रघण्टा । शॄपॄवॄभ्यां द्वे
् चाभ्यासस्य । ईकन् द्वित्वम् अभ्यासस्य च रुक् ।
णाति शर्शरीकं जालम् । पिपर्ति पर्परीको भूपः सूर्यो जलाशयश्च ।
ुते वर्वरीको युवा । पर्फरीकादयश्च । साधवः । स्फुरति
रीकः चलः । दीर्यते दर्दरीकं वाद्यम् । जीर्यते जर्जरीकं
द्वपुः । ताड्यते तित्तिडीकमौषधम् । ईषेः किद्ध्रस्वश्च ।
कन् कित् ह्रस्वश्च । ईषति इषीका दर्भशलाका । ऋजेश्च ।
कन् किच्च । अर्जते ॠजीकम् पिष्टपचनम् । अनिदृशिभ्यां च ।
कन् किच्च । अन्यते अनीकं बलम् । पश्यन्ति तां विस्मिता दृशीका
रूपवती । सर्तेर्नुम् च । धावति सृणीका लाला । अलीकादयश्च ।
धवः । अनन्त्यनेनाधोगतिमलीकम् । वहन्ति हृदि व्यलीकम् । मृकणि-
ामूकोकणौ । मारयति म्रियते मरूको मयूरो मर्त्यो वा । कणति
णुकः काकः । बहुलाद्वलेरूकः । बल्यते वलूकः उत्पलं मूलं

१. मन्थाः PC, Dc3. २. आकौ PC. ३. ति तेनारीन् Dc3. ४. पिण्याकः
C, Dc3. ५. ऋजीकम् । कुष्टम् PC, Dc3.

वा । उलूकादयश्च । साधवः । उत्क्रम्य दृष्टिमालोकयति
कः । भल्लते भल्लूकः । शलिमण्डिभ्यामूकण् । शलति शालूकं
म् । मण्डयति प्रावृषं मण्डूकः । कृञादिभ्यः संज्ञायां वुन् ।
तेऽत्रोदकं करकः कमण्डलुः । स्रियते सरकः मद्यभाण्डपाने ।
ो वैद्याचार्यः । दरको भीरुः । ऋजेः कीकन् । अर्जते ऋजीकं
धनं बलं च । अर्भकपृथुकपाका वयसि । साधवः ।
त्यर्भकः । प्रथते पृथुकः । पिबति पाकः बालः ।

एते कान्ताः ।

खनेर्मुट्कोदात्तः । खनेर्डन् उदात्तः मुट्चागमो धातोः । खन्यते
ाभिमुखम् । मुहेः खन् मूर्च । मुह्यति मोहयति वा मूर्खः । नहेर्ह-
श्च । खन् । नह्यति नखः । महेश्च । खन् हलोपश्च । महते मखः ।
ो नित् ह्रस्वश्च । खन् । शेते शिखा वृक्षावयवः । आ च । शेतेः खन्
आ चान्तादेशः । शेतेस्यां पक्षी शाखा । माङ उखा । निपातः ।
तेऽसौ उखा स्थाली । मीनातेरूखः । मीनाति मयूखः ।

खान्ताः ।

पतेरङ्गच् पक्षिणि । पतति पतङ्गः पक्षी । त्रादिभ्यश्च । अङ्गच् ।
ते तेन तरङ्गः । लुनाति लवङ्गः । बिडादिभ्यः कित् । वेड-
बिडङ्गः । कुरङ्गः । मृदङ्गः । गन् गम्यद्योः । गम्यतेर्थि-
ङ्गा जाह्नवी । अत्ति अद्गः । प्राक् प्रत्ययनिर्देशो वर्गादिनिपात-
। वृणोति वर्गः । भृञः किन्नुट् च । गन् किच्च नुडागमश्च ।
र्ति भृङ्गः । शृणातेर्ह्रस्वश्च । गन् कित् नुट् च ।
ति शृङ्गम् । गण् शकुनौ । नुट् च । शृणाति शार्ङ्गः शकुनिः ।
ोर्गग्गौ । मोदयति मुद्गः । गिरति गृणाति गर्गः । दहेर्गो लोपो
नः । गन् दस्य च नः । दह्यते वह्निना नगः । छोपूञ्खडिभ्यो
। छ्यति छागः । पवते पूगः । खण्डयति खड्गः ।

चराको PC; चरकौ $Dc_3$. २. मद्यते $Dc_1$, $Dc_4$. ३. गम्याद्देः PC.
ह्निना PC, $Dc_3$.

गान्ताः ।

जनेः कः जङ्घ च । कः स्यात् जङ्घादेशश्च । जायतेऽस्यां रोम जङ्घा । दृणातेर्घक् । दृणाति दीर्घः ।

घान्ताः ।

तृतीयः पादः ।

स्रुवश्चिक् । स्रवत्यत्र हविः स्रुक् । तनोतेरनश्च वः । चिक् कारनकारयोर्वादेशश्च । तनोति त्वक् । कुवश्चट् दीर्घश्च । कवते चः करी । समिणः । चट् दीर्घश्च । संयन्ति तस्मिन् समीचः । विष्टेरू च । चट् । सीव्यति सूचः पिशुनः । सीव्यत्यनया सूची ।

चान्ताः ।

कचेश्छः । कच्यते तेन कच्छः । पुनातेः पुच्छ इत्यपि ।

छान्ताः ।

पारेराजिः । पारयति पारक् सुवर्णमन्नं वा । पणेरिज्यादेवः । आजिः स्यात् तस्यादेरिदादेशश्च पणेरादेर्वादेशः । पणते णिक् । वशेः कित् । अजिः कित् स्यात् तस्यादेरिच्च । वष्टि श्यते उशिक् वह्निः । भृञ उच्च । अजिस्तस्यादेरिच्च । धातोर्च । बिभर्ति भरति मनुष्यान् भुरिक् ।

जान्ताः ।

चतुर्थः पादः ।

लङ्घेरटिर्नलोपश्च । लङ्घते लघट् वायुः । शकादिभ्योऽटन् । क्यतेनेन गन्तुं शकटम् । अवत्यवटः । दीव्यति देवटः शिल्पी । र्कति मर्कटः ।[१] चपति चपटः इषुः । चमति चमटः घस्मरः । ायते भरटो भृत्यः । कृतॄकृपिभ्यः कीटन् । कीर्यते किरीटम् । र्यते तिरीटम् । कल्पते कृपीटम् । जनेर्लोपश्च टः । धातोरन्त्यस्य ापः । जायन्ते जटाः ।

टान्ताः ।

१. After it—कर्कति कर्कटः Do3.

कमेरठः । कम्यते कमठः भिक्षापात्रं कूर्मश्च । कणेष्ठः । कण्यते कण्ठः । कुणति कुण्ठः ।

ठान्ताः ।

अमन्ताड्डः । आन्तडान्तयोर्नोदाहरणम् । दाम्यतेनेनोद्धता दण्डः । मन्यते जनैर्मण्डः अग्रम् । वनुते वण्डः अल्पशेषः दुश्चर्मा च । रण्यते रणत्यनया वा रण्डा । क्वादिभ्यः कित् । कवर्गादि-अमन्तेभ्यो डः किच्च । कुणति कुण्डा उपकरणभाण्डं परजातं च । काणति काण्डम् । गच्छत्युपधानं गण्डः । खन्यते खण्डः अपूर्णः इक्षुविकारः । बहुलादन्यत्रापि । कवते कुडः बालः । गवते गुडः । अण्डन् कृसृभृवृञः । करोति करण्डः । धावति सिसर्ति सरण्डः । भरति भरण्डम् । वृणोति वरण्डः पूगः । प्राक् प्रत्ययनिर्देशः शरण्डाद्यर्थः । शृणाति शरण्डः हिंस्रः । तरति तरण्डो वायुः । एति एरण्डः । सर्तेरडिः । सरति सरट् वातः ।

डान्ताः ।

शमेर्ढः । शान्तमस्येन्द्रियं शण्ढः । बहुलात् षः । षण्ढः ।

ढान्ताः ।

अथ णान्तप्रसङ्गेऽजन्तान् नोपधान् कथयति तेषां नस्य हि रेफ-षकारेषु निमित्तेषु सत्सु प्रायशो णः स्यात् । केवलान् नान्तांश्चाग्रे यथास्थाने वक्ष्यति । श्यास्त्याहृञविभ्य इनच् । श्यायते श्येनः । स्त्यायते स्त्येनः । बहुलाद्यलोपोपि । स्तेनः । हरत्यध्वानं हरिणः । अवति अविनः वृधलृपौ । वृजेः किच्च । वृज्यते वृजिनं पापचर्मकुटिलानि । अजेरज च । इनच् अजादेशश्च । वीयते अजिनम् । बहुलमन्यत्रापि । इनच् । कठति कठिनम् । द्रुदक्षिभ्यामिनन् । द्रूयतेर्थिभिर्द्रविणम् ।

---

१. जन्यै° Dc[1], Dc[4]. २. विकारः । अनित्यं गर्भनिलयम् । बहुला Dc[1].

क्षते दक्षिणः । अर्तेः किदिच्च । इनच् स च कित् इदादेशश्च ।
ऋच्छत्यर्यते वा इरिणमुखरम् । वेपितुह्योर्ह्रस्वश्च । इनच्च किच्च
ह्रस्वश्च । वेपतेऽस्मिन् विपिनं वनम् । तुह्यतेऽनेन तुहिनम् । महेरिनण्
। चादिनन् । मह्यतेऽस्मिन् महिनं माहिनं राज्यम् । सुयुरुवृञो
युच् । सुनोति सौति सवति सवनः कालः प्रातरादिः । यौति युवति वा
युवनः । रौति रवणः वायुषट्पदौ । वृणोति वरणो भिक्षुः । अशो रश
। युच् रश चादेशः । अश्नुते कटीं[3] रशना काञ्चिः[4] । उन्देर्न-
लोपश्च । युच् । उनत्ति ओदनः । बहुलमन्यत्रापि । युच् । स्यन्दते
स्यन्दनो रथः । मज्जत्यनेन मज्जनं रोम । रोचते रोचनम् ।
रजत्यनेन रजनं कुङ्कुमादिरागः । भूसूधूभ्रस्जिभ्यश्छन्दसि । युच् ।
भवन्ति भूतान्यस्मिन् भुवनम् । सूयते सुवनमादित्योऽङ्कुरो वा । धुनोति
धुनाति धुवनं वाय्वग्नी । भृज्जत्यत्र भृज्जनमध्वरीषम् । कॄपॄवृजिमन्दि-
निधाञः क्युः । किरति तमः किरणो रश्मिः । पृणाति पूर्यते वा
पुरणोऽब्धिः । वृणक्ति वृज्यते वृजनं नभः । मन्दनम् । निधनम् ।
छन्दसीत्येव । परणः । धृषेर्धिष च संज्ञायाम् । क्युः धिषादेशश्च ।
धृष्णोत्यनया धिषणा धीः । संज्ञाग्रहणं छन्दोधिकारनिवृत्तये । हनो
घघ च । क्युः । हन्ति जनान् हन्यते वा जनैर्जघनम् । छन्दस्यसानच्
शृजॄभ्याम् । शूयते शवसानः । जीर्यते जरसानः । प्राङ् निर्देशः
प्रत्ययस्य शरसानाद्यर्थः । शृणाति शरसानः । चन्द्रसूर्यादिभिः तरति
तरसानः अग्निः । वृणोति वरसानो मनोरथः । ऋजिवृधिमदिसहिभ्यः
कित् । असानच् । ऋजति ऋजसानः मेघः । वर्धते वृधसानः गर्भः ।
मन्दते मदसानः स्तनः । सहते सहसानः शमी । अर्तेर्गुणः शुट् च ।

---

१. रुह्योः Dc3. २. रुह्यतेनेन रुहिणम् । Dc3. ३. कटिं PC, Dc3. ४. काञ्ची PC, Dc3. ५. रोचनः । देवनः । PC. ६. मदि Dc3, PC. ७. माद्यत्यनेन मदनं Dc3; मदनं PC. ८. हनो PC., Dc3. ९. तैर्ज° PC, Dc3.

असानच् । ऋच्छत्यर्शसानः पन्था इषुर्वा । सम
परात्स्तौतेरानच् । संस्तौति संस्तवानो वाग्मी ।
युध्यते युधानः परिवारः । बोधयति बुधान
दृशानः लोकपालः । दुर्छेः सनो लुक् छलोपश्च ।
सनो लुक् छलोपश्च । जुहूर्छिषति जुहुराणः
क्षिनुदीकुष्यविभ्यो नक् । अर्थिनो यन्ति तमिनः ।
कायो बन्धो वा । दीयते दीनः । उष्यतेनेनोष्णम् ।
फेनमीनौ । साधुं । स्फायते फेनः । मिनाति
नक् । कृषति कृष्णो वर्णः । बन्धेर्ब्रधिबुधी
वादेशौ । बध्नाति ब्रध्नः सूर्यः । बुध्नो भवानशि
ज्यतिभ्यो नः । धीयन्ते प्राणिनो यासां विकारैस्ता
पर्णम् । वस्तेनेन वस्नं वासः । अजति वेनः व
आत्मा । लक्षेरट् च । नः । लक्ष्यतेनेन लक्षणम्
टेर्यूरादेशश्च । सीव्यतेनेन स्योनः राशिः सूरणं च ।
स्वपिभ्यो नित् । नः । निच्च । कीर्यते कर्णः । वृणोति व
सिनोति सेना । द्रवति द्रोणः । पन्नः । अतत्यैन्नः आत्म
नेन स्वप्नो निद्रा । धेट इश्च । नः । धयन्ति तां धेना
तृषिशुषिरसिभ्यः कित् । नः । तृष्यतेनया तृष्णा । शु
रस्यते रस्नः । सुञो दीर्घश्च । कित् । सुनोत्यस्यां
मांसद्रोणी । रमेस्त च । रमन्तेस्मिन् रत्नम् । रास्ना
साधवः । राति रसति रस्यते वा रास्ना औष
सास्ना गोगलकम्बलः । तिष्ठत्यनया धाम इति स्थू

१. °र्संसानः Dc1, Dc4. २. स्तुवः Dc1, Dc4. ३
४. एनमिनः Dc3. ५. च साधू PC, Dc3. ६. अन्नमात
नात्मा PC. ८. शुष्यन्त्यनेन PC; Dc3. ९. °चर्म PC,

ति वेति वा वीणा। गादाभ्यामिष्णुच्। गायन्त्यस्मिन् गेष्णुर्मखः।
ते देष्णुर्दाता। कृत्यशिभ्यां क्स्नः। कृत्यते तेन कृत्स्नम्। अश्नुते
गो वृन्दम् तेजनं च। तिजेर्दीर्घश्च। क्स्नः। तितिक्षति तीक्ष्णम्।
रश्चोपधायाः। क्स्नः। श्लिष्यति श्लक्ष्णम् मृदुसूक्ष्मौ। कॄवॄतॄ-
भ्य उनन्। किरति मनः करुणा। वृणोति वरुणा। तरति
ाः। दारयति दारुणम्। पिशेः किच्च। उनन्। पिशति पिशुनः।
शश्च। उनन्। शोन्तादेशः। लपति लशुनम्। फलेर्गुक् च।
ग् गुगागमश्च। फलति फल्गुनः। त्रो रश्च लः। उनन्। रस्य
। तरति तलुनः। अर्जेर्णिलुक् च। उनन्। अर्जयत्यर्जुनः।
ख्यायां चित्। अर्जुनं तृणम्। अतेश्च। उनन् चित्। ऋच्छ-
णः। धारेर्णिलुक् च। उनन् चित्। धारयति धरुणः ग्रहः।
ायमिशीङ्भ्यश्च। उनन् चित्। अजति वयुनश्चन्द्रः। यच्छति
ना। शेतेत्यर्थं शयुनः अजगरः। तृहेर्नक् हलोपश्च। तृह्यते गवा-
ास्तृणम्। अर्तेर्युजुच्च। युच् उच्चास्यादेशः। ऋच्छत्युरणः
मेषौ उलूको वा। ऊर्णोतेर्डः। ऊर्णोत्यूर्णा अविलोमानि।

नोपधा अजन्ताः।

पञ्चमः पादः।

मृग्रो रुतिः। म्रियते न कदाचित् मरुत् वायुः। गृणाति गिरति
र् मरकतः। गर्मुत्। साधुः। गिरति गर्मुत् सूर्यसुपर्णौ।
हहियुषिभ्य इतिः। हरति हरित् वायुदिङ्मृगाः। धावति सरित्।
ति रोहित् सूर्यग्रावा वारुश्च। युषिः सौत्रः। योषित्।
ार्णिलुक् च। इतिः। ताडयति अभ्रं ताड्यते वा तडित्।
माने पृषद्वृहन्महज्जगच्छतृवत्। एते वर्तमाने साधवः शतृवच्च
ादिकार्यमेषाम्। वर्षति वृणोति पिपर्ति वा पृषत् चित्रमृग-
तेः आज्यं सीकरश्च। बर्हति वृहत् वृहती। महति
यति महान्। महती। गच्छति जगत्। संस्वत् तृपत्

वेहत् । साधवः । संव्ययति संस्वत् उदकम् । तृप्यति तृपत् चन्
वहति वेहत् गर्भघातिनी । हसिमृग्रिण्वामिदमितमिलूपूधुर्विभ्यस्
हसत्यनेनारिं हस्तः । म्रियते मर्तः मर्त्यः । गिरति गर्तः श्वभ्रः ।
एतो वायुः । वाति वातः । अम्यतेन्तोवसानम् । दाम्यति दन्त
ताम्यति तन्तः । लुनाति लोतः । पुनाति पोतः । धूर्वति धू
तनिमृङ्भ्यां किच्च । तत् । तनोति तन्यते वा ततं विशालम् । म
मृयते वा मृतः आलानपाशः । अञ्जिघृसिभ्यः क्तः । अज्यते
म्रक्षितम् । जिघर्ति घृतम् । सिनोति सितं शुक्लम् । दुतनिभ्यां दीर्घ
क्तः । दुनोति दूतः । तनोति तातः । जेर्मुट् चोदात्तः । क्तस्
मुडागमः स चोदात्तः जेर्दीर्घश्च । जयति नभः जीयतेनलेन
जीमूतः । हृश्याभ्यामितन् । हरति जिहर्ति हरितः वर्णः । श्या
श्येतः वर्णः । रुहे रश्च लो वा । इतच् रस्य लो वा । रो
लोहितः रोहितः । भृदृशीयजिपर्विपच्यमिनमिहर्यिभ्योतच् । बि
भरतः राजा । द्रियते दरतः आदृतः । शेते शयतः निद्रालु
यजति यजतः अग्नियजमानौ । पर्वति पर्वतः । पचति प
अग्निरवी । अमति अमतः वासरानकौ । नमति न
नटः देवो वा । माम्यति नमतः निर्वेदः । हर्यति ह
वायुः । पृषिरञ्जिभ्यां कित् । अतच् । पृषति पृषतो मृगः ।
इत्येके । रजतेत्र रजतः । रजतं रूप्यम् । खलतः । साधु
स्खलति खलतः खलतिः । रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि
झच् स चषित् । रुह्यात् रोहन्तस्तरुः । नन्द्यात् नन्दयन्तोभि
जीव्याज्जीवन्तो जन्तुः । प्राण्यात् प्राणन्तो योगः । स्त्री
रोहन्तीत्यादि । तॄभूवहिवासिभासिसाधिगडिमण्डिजनिनन्दिभ्यश्च
आशिषि झच् षिच्च । तीर्यात् तरन्तः सूर्यः मार्गवर्ती ।
चेत् तरन्ती । भूयात् भवन्तो बालः । उह्यात् वहन्तो वा

१. कुहकः PC, Dc3. २. अदितम् PC, Dc3.

ण्यात् वसन्तः ऋतुः । भासिषीष्ट भासन्तो भानुः ।
ाध्यात् साधन्तो भिक्षुः । गण्डयन्तो मेघः । मण्डयन्तो
टः । जनयन्तो राजा । नन्दयन्तोर्भकः । हन्तेर्मुट् हि च ।
ाच् मुडागमः हन्तेर्हिरादेशश्च । हन्ति पद्मिनीं हेमन्तः । उचि-
ुत्सिकुषिभ्यः कितच् । उच्यति उचितं न्याय्यम् । कुत्स्यति
ुत्सितम् । कुष्यति कुषितं क्लिष्टम् । अदि भुवो डुतच् । अद् भवति
द्भुतम् । सौ रमेः क्तो दमे पूर्वपदस्य च दीर्घः । सुपूर्वाद्रमेः क्तो
मेर्थे । सुष्ठु रमते सूरतो दमितः । फलेरितजादेश्च पः । इतजादेः पश्च ।
लति पलितम् । जनस्तो र च । तः स्याद्रान्तादेशः । जायते जर्तः
र्त्तं लोम । शकेर्ऋतिन् । शक्नोति शकृत् विष्टा ।

थान्ताः ।

हनिकुषिनीरमिकाशिभ्यः क्थन् । हन्ति हथो व्याधिः ।
ुष्यति कुष्ठं गन्धद्रव्यम् । सुष्ठु नयति सुनीथो नीतिमान् । रमन्तेस्मिन्
थः । काशतेनेन काष्ठम् । अवे भृञः । क्थन् । अवबिभर्त्यनेना-
भृथो यज्ञान्तस्नानम् । उषिकुषिगार्तिभ्यस्थन् । उष्यते व्यजनैरोष्ठः ।
ुष्णाति कोष्ठः कुशूल उदरं च । गीयतेसौ गाथा । ऋच्छति तमर्थः ।
तेर्णित् । थन् । धावति सिसर्ति सार्थः । जॄवृञ्भ्यामूथन् ।
ीर्यते जरूथं कश्मलम् । वृणोति वरूथं रथगुप्तिः । पातॄतुदिवचिरिचि-
सिचिभ्यः क्थन् । पिबति तेजः पीथो रविः । तरत्यनेन तीर्थम् ।
ुदति तुत्थमञ्जनद्रव्यम् । उच्यते उक्थं साम । रिच्यते रिक्थं
पेत्रादिद्रव्यम् । सिच्यते सिक्थम् । अर्तेर्निरि । थक् ।
नेरन्तरमृच्छति निर्ऋथः समाधिस्थानम् । निशीथगोपीथावगथाः ।
ाकि निपात्याः । नियतं शेरतेस्मिन् निशीथोर्धरात्रः । गावः पिबन्त्य-
स्मिन् गोपीथः जलद्रोणिः । अवगच्छत्यस्मिन्नवगीयते वा अवगथः
ातः साम च । उदि गस्थक् । उद्गीयतेसौ उद्गीथः साम । समीगः ।

१. क्लिष्टम् PC, Dc3.

थक् । समेति समिथः अग्निः संगमश्च । तिथपृष्ठगूथयूथप्रोथाः । साधव
तिष्ठति तिम्यति वा तिथः कालः । तप्यत इति केचित् । स्पृशति पृ
पृष्ठम् । गवते गूथो वर्चः । युवन्ति तत्र यूथः संघः । प्रवते प्रोथ
सर्पवराहमुखैकदेशः । शीङ्शपिरुगमिवन्दिजीविप्राणिभ्योथः । शे
शयथः निद्रालुः । शपन्ति तेन शपथः सत्यम् । रौति रवथः कालः
गच्छति गम्यते वा गमथः कालः पान्थपन्थानौ । वन्दन्ति वन्दथः
जीवति जीवथः वाय्वसुभृतौ । प्राणिति प्राणथः बलवान् । आ
वासः । अथः । आवसन्त्यत्र आवसथः वेश्म । भृञश्चित् । बिभ
भरथो राजा । रुदिविदिभ्यां कित् । अथश्चित् किच्च । रोदि
रुदथो बालः । वेत्ति विदथो विद्वान् ।

थान्ताः ।

शृदृभसोदिः । शीर्यतेस्यां शरत् । दृणाति दरत् भीरुम्लेच्छः
दृशौ बभस्ति भसत् आमाशयस्थानम् । त्यजितनियतिभ्यो डित्
अदिर्डित् । त्यजति त्यत् । तनोति तद् । यतते यद् । एतेस्तुट् च
अदिस्तुट् च । एति एतद् । दृणातेः षुक् ह्रस्वश्च । अदिः षुक्च
दृणात्यत्र दृषत् शिला । कुणिपुल्योः किन्दच् । कुणति कुणिन्द
उपकरणम् । पोलति पुलिन्दः म्लेच्छजातिः । कुपेर्व च । किन्दच्
कुप्यति कुविन्दस्तन्तुवायः । शाशपिभ्यां ददनौ । क्रमात् । नः स्वरा
र्थः । श्यति शादः कुशः । शपन्ति तेन शब्दः । अब्दादयश्च । निपात्याः
आप्नोति सूर्यमब्दः वर्षम् । मन्यते मनुते मन्दः । बृहति बृह्यते बृन्दम्
कम्पते कन्दः कुन्दम् । युष्यसिभ्यां मदिक् । युष्यते युष्मद्
अस्ति अस्मद् ।

दान्ताः ।

कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः । कनिन् । यौति
युवते युवा । वर्षति वृषा । तक्ष्णोति तक्षा । राजते राजा ।
धान्विः सौत्रः । धन्वति धन्वा मरुदेशः । द्योति द्यूयते वा द्युवा

रविः । प्रतिदीव्यत्यस्मिन् प्रतिदिवा । अन्येभ्योपि । अक्षा । ईक्षा
तुवा । नञि जहातेः । न जहात्यत्र कर्म अहः । सप्यशूभ्यां तुट् च
कनिन् । सपन्ति सप्त । अश्नुवतेष्टौ । नौतेर्गुणश्च । कनि
गुणश्च धातोः । नौतीति नव संख्या । श्वनुक्षन्पूषन्प्लीहन्क्लेदन्
स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्निति
एतकानि साधवः । श्वयति धाष्टर्यात् श्वा । उक्षति उक्षा वृषः
पुष्णाति पुष्यति वा पूषा सूर्यः । प्लीहते प्लीहा व्याधिः । क्लिद्यत
क्लेदा । स्निह्यत्यनया स्नेहा वसा । मुह्यत्यस्मिन् मूर्धा । मज्जत्यस्मि
मज्जा धातुः । ऋच्छत्यर्यमा देवः । विश्वं प्सायति विश्वप्सा देवः
परिजायते परिज्मा चन्द्रोग्निश्च । मातरि श्वयति मातरिश्वा वातः
मह्यतेसौ मघवा इन्द्रः । वीपतिभ्यां तनन् । वीयते वेतनम् । प
न्त्यस्मिन् पत्तनम् । गमेरिनिः । गमिष्यतीति गमी जिगमिषुः
आङि णित् । इनिर्णित् । आगमिष्यतीत्यागामी प्रवासी । भुवश्च
इनिर्णिच्च । भविष्यति भावी । प्रे स्थः । इनिर्णिच्च । प्रस्थास्य
प्रस्थायी । परमे कित् । स्थः इनिः किच्च । परमे तिष्ठति परमेष्ठी
मन्थेश्च । इनिः किच्च । मथ्नाति मन्थाः । पतः स्थ च । इ
थान्तादेशः । पतन्त्यनेन पन्थाः । अदेस्त्रिन् । अत्ति तपः स्वाध
यमत्रिः ऋषिः । पतेरत्रिन् । पतत्यर्थं पतत्रिः । हृसृभ्यां क्वनि
हरति हृत्वा वायुः । धावति सृत्वा सर्पः । सृजेरम् च । क्वनिप् । अ
गमश्च । सृजति स्रग्वा मज्जातन्तुः । स्नामदिपद्यर्तिपृशकिभ्यो वनि
स्नात्यस्यां स्नावा । स्नावरी नदी । माद्यत्यनया मद्वा मद्वरी मदि
पद्यते पद्वा रथः । पद्वरी गतिः । ऋच्छत्यर्वा अश्वः । पिपर्ति प
शक्नोति शक्वा शक्तः । शक्वरी छन्दः । शीङ्क्रुशिरुहिजिक्षिसृधृ
क्वनिप् । शेते शीवा अजगरः । क्रोशति क्रुश्वा क्रोष्टा । रोहति
तरुः । जयति जित्वा शक्रः । क्षयति क्षित्वा कालः । सरति सृत्
ध्रियन्तेस्मिन् भूतानि धृत्वा विष्णुः । ध्याप्योः संप्रसारणं च । ध्या

धीवा निषादः । प्यायते पीवा मांसोपचितः । अदेर्धश्च । ब
धोन्तादेशश्च । अत्ति बलमध्वा । प्रईरसद्योस्तुट् च । प्रेरयति
वायुः । प्रसीदति प्रसत्त्वा मूढः । मनिन् । सर्वेभ्यो मनिन् । क्रि
फलार्थिभिः कर्म । बभस्ति भस्म । शृणाति दुःखं शर्म । ज
जन्म । बृंहेर्नोच । मनिन् स्यात् नस्यादादेशः । बृंहति ब्रह्म परम
जीवजातिकमलासनशब्दराशयः । अशिशकिभ्यां छन्दसि । मनि
अश्नाति अश्नुते अश्मा । शक्नोति शक्मा समर्थः । हृभृधृस्तृ
इमनिन् । छन्दसि । हरति हरीमा वायुः । बिभर्ति भरीमा राज
ध्रियते धरीमा धर्मी । स्तीर्यते स्तरीमा आच्छादनम् । धावति सर
गर्भः । जनिहृभ्यामिमनिन् । जायते जनिमा संसारः । हरति हरि
मृत्युः । वेञः सर्वत्र । भाषायां छन्दसि इमनिन् । व
वेमा । नामन्सामन्स्तोमन्होमन्लोमन्व्योमन्विधर्मन्पाप्मन्व्याम
साधवः । नमन्ति तेन नाम । सिनोति स्वरान् साम । स्तुवे
स्तोम । हूयते होम । लूयते लोम रोम । वीयते वा
व्योम । विविधं ध्रियते विधर्मा वायुः । पाति पिबत्यात्मानं
पाप्मा । व्ययते व्याम संसारः । वसौ शृणातेर्मनिन् । वसवे
पापं शीर्यासुर्वसुशर्मा । एवमन्ये भविष्यन्ति । सातिभ्यां म
मनिणौ । यथासंख्यम् । स्यति सामा । अतत्यात्मा । अर्तेर्भुक्षनक्
ऋच्छति ऋभुक्षा । हनो युन् । आद्यन्तयोर्घत्वतत्वे । हन्त्याच
घातनः । बहुलाद् वृद्धिः ।

नान्ताः ।

षष्ठः पादः ।

आप्नोतेः क्विप् ह्रस्वश्च । आप्नुवन्त्यापः । पानीविषिभ्यः पः
पाति पीयते दुर्जनैः पापम् । नयति नेपः प्रवाहः । वेवेष्टि वेष्पः प
मात्मा । तुवः कित् । पः । तौति तुपः मन्दः । स्तौतेर्दीर्घश्च
पः कित् । स्तौति स्तूपः बोधिसत्त्ववचनः । कुसुयुभ्यश्च ।

दीर्घश्च । कुप्यतेऽस्मिन् कूपः । सुनोति सूपः व्यञ्जनम् । यौति
। सृशृभ्यामूच्च । पः ऊरादेशश्च । धावति सिसर्ति सूर्पः
: । शृणाति शूर्पः । खर्पशिल्पशष्पबाष्परूपतर्पतल्पाः । साधवः
ाः । खनति खर्पः खनित्रम् । शीलयन्ति तत् शिल्पम् । शस्यते
देभिः शष्पम् बालतृणम् । बाधते नेत्रं बाष्पं नेत्राम्बु । रूप्यते
। तरन्त्यनेन जनास्तर्पम् । तृप्यन्त्यत्र तल्पम् । बहुलात् पणतेः
। पान्ति पिबन्ति तां पम्पा । सर्तेरपः षुक् च । अपः षुक्
धावन्ति तस्माद्रक्षांसि सर्षपः । उषिकुटिदलिकचिखजिभ्यः
। उषति उषपोऽग्निः । कुटति कुटपः परिमाणम् । दल्यतेऽने-
लपः प्रहरणम् । कच्चति कच्चपः शाकुनिको बन्धो वा ।
ते खजपं दधि । क्वणेः संप्रसारणं च । कपन् । क्वण्यते श्वापदैः
ो मृतशरीरम् । कपश्चाक्रवर्मणस्य । क्वणः कपः संप्रसारणं च ।
म् । स्वरे भेदः । विटपविष्टपविशिपोलपाः । कपनि साधवः ।
ग्यत्र पक्षिणो विटपः । विशति तत्र विष्टपं भुवनम् । विशन्ति तत्र
पं वेश्म । उष्यतेऽग्निना उलपं तृणम् । उल्लूयते वा ।

पान्ताः ।

फगस्योच्च । फक् । अस्य उत् । कल्यते कुल्फः चतुरबन्धसंधिः ।
। फक् । अस्य उत् । गच्छति गुल्फश्चरणग्रन्थिः ।

फान्ताः ।

ाडिकाटिभ्योऽम्बच् । कदति कदम्बः तरुः । कडम्बः । कटति
ा वाद्यभेदः । कदेर्णित् पक्षिणि । अम्बच् णित् ।
बः कलहंसः । कृञश्च । अम्बच् । करोति करम्बः शाक-
। उल्बाबिम्बादयोऽपि ।

बान्ताः ॥

शलिगर्दिभ्योऽभच् । किरति करभः उष्ट्रादेः । गिरति गृणाति
मृगः । शृणाति शरभः अष्टपात् । शलति शलभः पतङ्गः ।

गर्दति गर्दभः । ऋषिवृषिभ्यां कित् । ऋषति ऋषभः । व
रुषेर्नित्त्व लश च । अभच् नित्त्व लशादेशः । रुषति लश
रासिवल्लिभ्यां च । अभन् नित्त्व । रासते रासभः । व
गडेः कड च । अभच् । गडति कडभः करिशावः । उ
कलभः । दृदालिभ्यां भः । दृणाति दर्भः । दलयति दल्भ
अर्तिगृभ्यां भन् । ऋच्छत्यर्भः बालः । गिरति गीर्यते ग
कित् । एति इभः ।

भान्ताः ।

अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् ।
नेत्ररोगः । स्तौति स्तूयते स्तोमः । सूयते सोमः । हूयते ह
सर्मः ध्वनिः । धरति ध्रियते वा धर्मः । क्षयति क्षेमम् । क्षै
बहुलाद्वृद्धिः । भाति भामः कोपादिष्वनलाः । याति यामः ।
पद्यते भृङ्गैः पद्मम् । यक्ष्यति यक्ष्मा । बहुलात्स्यैत्वं न ।
अन्तिको देशः । अवतेष्टिलोपश्च । मन् । अवतेः 'ज्वरत्वर
ततो गुणः । ओम् प्रणवः । ग्रसते रा च । मन् । आ
ग्रसन्तेस्मिन् ग्रामः । प्रथेरट् च । मन् अट् च । प्रथन्तेस्म
अविसिविशुषिभ्यः कित् । मन् । अवत्युमा । ऊट्
ह्रस्वः । सीव्यते तेन सूमः । शोषयति दर्पं शुष्म
इषियुधीन्धिदसिश्याधूसूभ्यो मक् । ईषति ईष्मः बाणवस
युध्मः शरशरदौ । इध्यतेनेनाग्निरिध्मः इन्धनम् । दस्यति
श्यायते श्यामम् । धुनोति धूयते वा धूमः । सूयते सू
सूमः कालधर्मौ । गलेरुच्चोपधायाः । मक् । गच्छति गुल्म
युजिरुचितिजां कुश्च । मक् कवर्गान्तादेशः । युन
युग्मम् । रोचतेत्यर्थं रुक्मं हेम । तितिक्षते तिग्मं तीक्ष्णम्
मक् हिरादेशश्च । हन्ति सत्त्वान् हिमम् । बहुलात् हेम
षुग्वा । मक् षुग्वा । बिभेत्यस्माज्जनो भीष्मः भीम

१. यक्षाणि PC, Dc3.

जिघर्ति तेजः घर्मः । ग्रीष्मः । ग्रसते तेजो ग्रीष्मः ।
न् । पचति पचेलिमम् । भिदेः केलिमच् । भिनत्ति
कर्मकर्तरि । कर्दिकडोरमः । कर्दति कर्दमः । कड्यते
कलयोरभेदात् कलमः । सूचेः स्मन् । सूचयति सूक्ष्मम् ।
गुध्यति गोधूमः । इणो दमुक् । एति इदम् । कायते-
कायते किम् । क्रमिगमिक्षमिभ्यस्तुम् वृद्धिश्च । क्रामति
च्छति गान्तुम् । क्षाम्यते क्षान्तुम् । प्रथेरमच् । प्रथतेस्मात्
नः । 'प्रथेरट्न' इति सिद्धे स्वरार्थं सूत्रम् । चरेश्च ।
रति चरमः ।

मान्ताः ।

सप्तमः पादः ।

। दधातेराय्ये निपातः । धीयते दिधिषाय्यम्
ञ एण्यः । वृणीते व्रियते वा वरेण्यो वरिष्ठः परब्रह्म-
तुवः क्सेय्यश्छन्दसि । स्तूयते सौ स्तुषेयः स्तोता देवो वा ।
राजते राजन्यः ज्योतिरग्निः क्षत्रियो वा । अर्तेर्नित् ।
। अर्यते मृगैररण्यम् । पर्जन्यः । साधुः । वर्षत्यर्जति वा
शॄरम्योश्च । अन्यः नित्च । शृणाति भयं शरण्यः
न्ते स्मिन् रमण्यः शोभनः । वदेरान्यः । वदति वदान्यः
वौ । वलिमलितनिभ्यः कयन् । वलति तत् बलयं
मलति क्षितिं मलयो गिरिः । तनोति कुलं तनयः पुत्रः ।
तौ च । कयन् आगमौ च क्रमात् । वृणोति वृषयः आशयः ।
हृदयं मनः । माछासासिसूभ्यो यः । मात्यनया माया
छ्यति तेजश्छाया । सस्तीति सस्यं यवादि ।
तव्यं वामम् । जनेर्यक् । जायतेस्यामपत्यं जाया । अघ्न्या-

स्तेजो Dc₃, PC. २. कडते PC. ३. च Dc₃.

दयश्च । निपात्या यकि । हन्ति अघ्न्यो धर्मः[1] । देवता वाघ्न्या । सम्य
ध्यायन्त्यस्यां विप्राः संध्या । संधीयते वा । काम्यतेसौ कन्या
हतमस्याः कर्मभिर्जीवितं वन्ध्या । ईर्ष्यति ईर्ष्या मात्सर्यम् । शक्य
वक्तुं शक्यमसारम् । रुचिभुजिभ्यां किष्यन् । रुच्यते रुचिष
प्रियम् । भुज्यते भुजिष्यः परिचारकः । पूञो यत् णट् ह्रस्वश्च
यत् णडागमो ह्रस्वश्च । पुनाति पूयतेनेन पुण्यम् । स्रंसेः शिः कु
किच्च । यत् । शिरादेशः कुडागमः । स्रंसते शिक्यम् भिक्षुरज्जुः[2]
हर्यतेः कन्यन् हिर् च । कन्यन् । हिरादेशः । हर्यति हिरण्यम्
दधातेर्यत् नुट् च । दधाति सत्त्वान् धान्यम् । कवतेर्यक् डुक् च
कवतेर्यक् डुक् चागमः । कवते कूयते वा कुड्यं भित्तिः ।

यान्ताः ।

मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच् । मन्दन्तेस्यां वाजिन
मन्दुरा वाजिशाला । वाश्यते वाशुरः गर्दभः । मथ्यते जनैर्मथुरा
चतते चतुरः । चङ्क्यते चङ्कुरः । अङ्क्यते अङ्कुरः । व्यथेः संप्र
सारणं किच्च । उरच् धोन्तादेशः । व्यथस्तेस्माज्जनो विधुरोभि
राक्षसः । मुकुरदर्दुरौ च । मङ्क्यतेनेन मुकुर
चन्द्रदर्पणौ । दृणाति दर्दुरः मण्डूकः । बहुलात् शृणाति
शर्कुरः शिशुः । कौत्यत्यर्थं कुकुरः । असेरुरन् । अस्यन्ते
देवैरसुराः । शावशौरामौ । शुपूर्वादशेरुरन् आमौ । श्वयन्तेस्मि
कामाः श्वशुरः । इषिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दितिमिमिहि
मुहिमुचिरुचिरुधिशुषिबन्धिभ्यः किरच् । इष्यते इषिरोग्निः । माद्यते
नया मदिरा । मोदन्तेनेन मुदिरो मेघः । खिद्यतेनेन खिदिरो वक्र
श्चन्द्रः देवलो वा । छिनत्ति छिदिरः शस्त्रम् । भिनत्ति भिदिरं वज्रम्
मन्दतेस्मिन् मन्दिरम् । चन्दति चन्दिरो मलयानिलः । तिम्यति

१. अघन्यः धर्मः PC. २. भिक्षारज्जुः PC.

| मेहति मिहिरोंशुमान् | मुह्यते मुहिरः स्मरः | मुञ्चति
ायुः | रोचति रुचिरं भासुरम् | रुणद्धि रुधिरम् | शुष्यति
| बद्धमस्यश्रोत्रं बधिरः | अजिरशिशिरशिथिलस्थिरस्फिर-
दिराः | किरजन्ताः साधवः | अजत्यस्मिन्नजिरम् | शीर्यन्ते
शिशिरः | श्रयते शिथिलम् | रलयोरभेदात् | तिष्ठति
| स्फायते स्फिरम् | स्थितो यौवनात् स्थविरः | खाद्यति
र खदिरः | बहुलात् शेतेस्मिन् सैन्यं शिशिरम् | पच्यतेस्मिन्
| मीनातेरूरन् | मीनाति मयूरः | कठिचकिभ्यामोरन् |
ठोरः चिरन्तनः अमृदुर्वा | चकति चकोरः | किशोरादयश्च |
साधवः | काशते किशोरः | एवमन्येपि | स्फायितञ्चि-
ाक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदि--
भिदिमन्दिचन्दिदहिदसिदम्भिवहिवसिवासिशीङ्हसिसिधि---
रक् | स्फायते स्फारं बहु | तञ्चयते तक्रम् | वच्यते वक्रम्
| शक्नोति शक्रः | क्षिप्यते क्षिप्रम् | क्षुद्यते क्षुद्रः | सर्पति
सोमौ | तृप्यतेनेन तृप्रमाज्यम् | दृप्यति दृप्रो हर्षमोहौ |
न्द्रो गुरुः | समुन्दति समुद्रः | श्वेतते श्वित्रम् | वर्तते वृत्रो
अजति वीरः | नीयते नीरं जलम् | पद्यतेस्मिन् पद्रो जन-
न्द्यन्त्यत्र मद्रो देशः | मोदतेनया मुद्रा चिह्नम् | खिद्यतेनेन
नः | छिद्यते छिद्रम् | भिनत्ति भिद्रं वज्रम् | मन्दते मन्द्रो
रः | चन्दति चन्द्रः | दहति दह्रोग्नितरू | दस्यति दस्रः |
म्भ्रो दाम्भिकः शूरः | वहति उह्रोनड्वान् | वसति तेजोत्र
्णः | वास्यते वास्रः शकुनिगर्दभौ | शेते शीरोजगरः |
ो हर्बुकः | सिध्नोति सिध्र आसवप्रकारः | शोभते शुभ्रं
चक्रिरम्योरुच्चोपधायाः | चक्यतेनेन चुक्रो रसः | रम-
रुम्रो रमणः | वेः कसेः | रक् | विकसतीति विकस्रः
ेपतं च | शदेरू च | रक् ऊ चोपधायाः | शीयते शूद्रः |

स्थश्च । रक् ऊ च । तिष्ठतीति स्थूरः । रलयोरभेदात् स्थूल
अमितम्योर्दीर्घश्च । रक् । अमति आम्रश्चूतः । ताम्यति
लोहविकारः । दुरीणो लोपश्च । दुरूपूर्वादिणो रक् धातोर्लोप
दुःखेनेयते दूरम् । कृतेश्छक् क्रू च । रक् छगागमः क्रू आदे
पक्षे कृन्तति यत्नेन कृच्छ्रं दुःखम् । क्रूरो दारुणः । रोदेर्णिलुक् च । र
रोदयति दैत्यस्त्रीः रुद्रः शिवः । बहुलमन्यत्रापि संज्ञाछन्दसोः । अ
स्माद्धातोरन्यस्मिन् प्रत्यये बहुलं णेर्लुक् संज्ञाछन्दसोः । देवयति ब
क्विप् । पुण्यं कारयति पुण्यकृत् । चक्रं धारयति चक्रधरः । व
त्वा सुष्टुतयो गिरो मे । वर्धयन्त्विति प्राप्ते । संज्ञाछन्दसोरन्यत्रा

'वान्ति पर्णशुषो वातास्ततः पर्णमुचोपरे ।

ततः पर्णरुहो वान्ति ततो देवः प्रवर्षति' ।। इति ।।

जोरी च । रक् । ईरन्तादेशः । जुवते जीरः वाय्वग्नि
सुसूधागृधिभ्यः क्रन् । सुन्वन्ति सुरा देवा मदिरा वा । सूते सु
सूयते वा सूरः रविः । दधात्यापत्सु चित्तं धीरः । गृध्नाति
लुब्धकश्येनौ । शुसिचिमीभ्यो दीर्घश्च । क्रन् । शवति शरणं शूर
सिनोति सीरो हलः । चिनोति चीरं वल्कलम् । मिनोति
देशसीमा । वाविन्धेः । विविधमिन्धे वीध्रः निर्मलः पूर्णचन्द्रम
वा । वृधिवपिभ्यां रन् । वर्धते वध्रं चर्म चन्द्रोपि । उप्यते
वप्रो देशः प्राकारोपि । ऋज्रेन्द्राग्रवज्रविप्रकुप्रचुप्रक्षुरखुरभद्रोग्रभे
लशुक्रशुक्लतीव्रवर्णेरामालाः । रन्नन्ताः साधवः । अर्जयति अज
वा ऋज्रो नायकः । इन्दति इन्द्यते वा तेजोभिरिन्द्रः । अ
अग्रम् आदिरन्तश्च । व्रजति सर्वत्र वज्रम् । विविधं दातारं
विप्रः । कुम्प्यते कुप्रं गृहच्छादनम् । चुम्पते चुप्रं मुखम् । क्षु
क्षुरः नापितशस्त्रम् । खुरति खुरः शफः । भन्दते भद्रं कल्याणम
उद्गच्छत्युग्रं तीव्रम् । उद्गिरत्युग्रो रुद्रः । बिभेति भेरः । भे

१. दुःखं धातुविशेषः । Do3. २. पक्षे PC, Dc3. ३. वीध्रोग्निर्निर्मलश्च I
४. शुक्लगौरवर्णेरामालाः Do1.

ो मण्डूको वा। शोभते शुक्रः शुक्रः। तिप्यते तीव्रम्। वृणोति
र्यते वा वर्णः। ईयते ईरा पानजातिः। मान्यतेनया मैलयति तां
ा स्रक्। कृगृशृवृञ्चतिभ्यः ष्वरच्। किरति कर्वरः हिंस्रः। स्त्री
कर्वरी। गिरति गर्वरः अहंकारो गन्धर्वो वा। शृणोत्यस्मिन्
रः। वृणोति वर्वरः कामः। चलन्तेस्मिन् चत्वरः। नौ सदेः।
च्। नियतं सीदन्त्यस्मिन् निषद्वरो जम्बालः आसनं च।
वरछत्वरधीवरपीवरमीवरचीवरनीवरगह्वरकट्वरसंयद्वराः। ष्वरचि
वः। छिनत्ति छित्वरो धूर्तः। छादयति छत्वरो निकुञ्जश्छादनं
। ध्वंसते धीवरो निषादजातिः। पिबति पीवरो मांसलः। मीवरः।
ोति चीयते वा चीवरं मुनिवासः। नीवरो नेता। गृह्णाति गह्वरं गहनम्।
ति कट्वरं व्यजनम्। संयच्छति संयद्वरो वाग्यतः समवायोपि।
ह्यन्त्यस्मिन् उपह्वरः संधिरहस्यम्। अशेः सरन्। अश्नुते अश्ना-
रम् वर्णो मोक्षपदं च। वसेश्च। सरन्। वसन्त्यस्मिन्
ाणि वत्सरशब्दः। संपूर्वाच्चित्। सरन् चित्। समेत्य
त्यत्र संवत्सरः। एवं परिवत्सरादयः। कृधूमादिभ्यः कित्।
र्। क्रियते कृसरस्तिलान्नम्। धूनोति धूसरः। माद्यत्यनेन
रः। पतेरश्च लो वा। सरन्। पतति पत्सलः पत्सरः पादप्रहारः।
षिभ्यां क्सरन्। तनोति तसरः। ऋषति ऋक्षरा तोयधारा।
नक्षियजिवधिपतिभ्योत्रन्। अमत्यत्रममत्रम्। नक्षति नक्षत्रम्।
न्तेत्र देवा यजत्रमग्निहोत्रम्। हन्यतेनेन वधत्रम्। पतत्यनेन पतत्रं
म्। गडेरादेश्च कः। अत्रन् आदेश्च कः। स्नेहेन गडयति
त्रम्। डलयोरभेदात् कलत्रम्। वृञश्चित्। अत्रन् चित्।
ते व्रियते वा वरत्रा चर्मरज्जुः। सौ विदेः कत्रन्। सुष्ठु वेत्ति
ं सुविदत्रं ज्ञानम्। कृतेश्च नुम्। कृन्तति कृन्तत्रं छेदनं वेष्टनम्।
रन्। ऋच्छति ऋच्छरमिन्द्रियप्रलयः। अर्तिकमिभ्रमि-

---

ह्वरः Dc₃. २. मालति Dc₃. ३. चौति Dc₄. ४. तिलान्नं dropped Dc₄. ५. नक्षति dropped Dc₁, Dc₄. ६. यं प्रलयः Dc₃.

चमिदेविवाशिभ्यश्चित् । अरन् चिच्च । ऋच्छत्यर्यते वा अररः रणः
काम्यते सौ कमरः कान्तः कोमलः । भ्राम्यति भ्रमरः । चमरः । देव
देवरः भर्तुः कनीयान् भ्राता । वाश्यते वाशरः । बहुलात् वासयतीति
वासरः । एवमन्ये । कुवः क्ररन् । कवते कौति वा कुररः पक्षी
अङ्गिमदिमन्दिभ्य आरन् । अङ्ग्यतेसौ अङ्गारः । माद्यति मदा॰
पाकशौण्डः । मन्दतेनेन मन्दारो देवतरुः । गडेः कड च । आर
कडादेशः । गडति गड्यते वा कडारः पिङ्गः । शृङ्गारभृङ्गारौ
आरनि साधू । श्रियते जनैः शृङ्गारः श्रयति सौभाग्य शृणोति माधुर्यं¹
श्रोत्रैर्वै शृङ्गारो रसविलासौ । बिभर्त्यम्भो भृङ्गारो जलकलशः²
कञ्जिमृजिभ्यां चित् । आरन् स चित् । कञ्जति कञ्जार
कुशूलः । मार्ष्टि भवनं मार्जारः । कमेरुच्चोपधायाः । आर
स चित् । काम्यते कुमारः महासेनो बालश्च । तुषारादयश्च
आरन्नन्ताः साधवः । तुष्यन्त्यस्मिन्निति तुषारो हिमम् । कसा
तस्मात् कासारः । शृणातेः करन् । शृणाति चित्तं शर्करा
पुषः कित् । करन् । पुष्यति पुष्करम् । लश्रुतेः पुष्कलम् । कॄशॄपॄ
कटिपटिशौटिभ्य ईरन् । कीर्यते करीरः विटपी । शीर्यते शरीरम्
पुनाति पवीरं पवित्रम् । कट्यते कटीरं जघनम् जनपदो वा
पटति पटीरः शरः । शौटति शौटीरो वीरः कम्बलः³ । बहुलात् कुटी
रम् । कशेर्मुट् च । ईरन् । कशति कश्मीरो देशः । कृञ उच्च

---

१. After it पिकः $Dc_3$.

२. कलसः $Dc_3$.

कर्मणि दृशिविदोः साकल्ये ॥ ३।४।२९ —सकलविशिष्टे कर्मण्युपपदे दृशिविदस्योर्णमुल् स्यात् ॥ कन्यादर्शं वरयति । कन्यां दृष्ट्वा वरयतीत्यर्थः । द्विजवेदं भोजयति तं विचार्य भोजयतीत्यर्थः ॥

चर्मोदरयोः कर्मणोः पूरेर्णमुल् ॥ ३।४।३१—पूरिण्यन्तोत्र । चर्मपूरं स्तृणाति उदरपूरं भुङ्क्ते । $D^2$, $D^3$, $B^1$, N.

३. कम्बलः dropped $Dc^1$, $Dc^4$.

वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम् ॥ ३।४।३२ ॥—कर्मणि पूरेर्णमुल् । अस्य ऊलोपो वा स्याद्वर्षप्रमाणं गम्ये ॥ सीतापूरं वृष्टः सीताप्रं वृष्टः । सीता पूरयित येत्यर्थः ॥ $D^2$, $D^3$, $B^1$, N.

उदन्तादेशः। क्रियते कुरीरः मैथुनं वेश्म वा। घसेः कित्।
स कित्। घस्यते क्षीरम्। उपधालोपादि। गभीरगम्भीरौ।
न्तौ। गाधते गभीरं गम्भीरम्। बहुलात् कटीरम्। चतेरुरन्।
चतुरः। बहुलात् अकारस्येत्संज्ञापि। चत्वारः। ष्ट्रन्। छाद्यते-
छत्रम्। वस्तेर्ड् वस्त्रम्। पतति पत्रम्। राजते राष्ट्रम्।
गमिनमिहनिविश्यशां वृद्धिश्च। ष्ट्रन्। भृज्जन्त्यस्मिन् भ्राष्ट्रम्।
ति गात्रम्। नमति नात्रं शिरः। हन्ति हात्रं रक्षा। वेवेष्टि वेष्ट्रः
ः। अश्नुते अश्नाति आष्ट्रं नभः। दिवेर्द्यु च। ष्ट्रन् द्युरादेशः।
ध। दीव्यत्यस्मिन् द्यौत्रं स्वर्गः। उषिखनिभ्यां कित्।
ते वनस्पतीन् उष्ट्रम्। खन्यते खात्रं तडागः। सिविमुच्योष्टेरू च।
त्यनेन सूत्रम्। मुच्यते तन्मूत्रम्। हुयामाश्रुभसिभ्यस्त्रन्। हूयते
हविः। यानं यात्रा गतिः। मानं मात्रा अल्पपरिमाणम्। शृण्व-
न श्रोत्रं कर्णः। बभस्त्यनया भस्त्रा दृतिः। गमेरा च। त्रन्।
न्तादेशश्च। गच्छति गात्रं देहः। अमिचिमिदिशसिभ्यः क्त्रः।
अस्मिन्नन्त्रम्। चीयते चित्रम्। मेद्यति मित्रम्। शसत्य-
स्त्रम्। पूञो ह्रस्वश्च। पूञस्त्रप्रत्ययः। पुनाति पुत्रः सुतः।
पचिवचियमिमनितनिसदिक्षदिभ्यस्त्रः। गूयते गोत्रं नामादि।
धत्रं धर्मेश्वरौ। वीयतेनेन वेत्रं वल्ली। पच्यतेनेन पक्त्रं तेजः।
नेन वक्त्रम्। यच्छति यन्त्रम्। मन्यते मनुतेनेन मन्त्रः। तनोति
तन्त्रम्। सीदयति तेन सत्त्रं यज्ञादि। क्षदति क्षत्त्रं राजा।
यश्छन्दसि। त्रन्। दात्यनेन दात्रम्। पूयते पोत्रम्। पिबत्य-
त्रम्। लूयते लोत्रम्। भूवादिगृभ्यो णित्रन्। भवति भवित्रं
म्। वाद्यते वादित्रम्। गीर्यते गारित्रमनुपानं गुरुश्च। चरेर्वृत्ते
वा। णित्रन्। चरन्तितेन चारित्रम्। चारित्रम्। अशित्रादिभ्य
। अश्नन्ति येन तदशित्रमन्नपात्रम्। तरति तेन तरुत्रम्।
येपि चरुत्रादयः। अमेर्द्विषति चित्। इत्रः चित्। अमत्यमित्रः

ीदाति Dc₃, PC.

शत्रुः । मसेरूरन् । मस्यते मसूरः सस्यम् । हिंसेरीरन्नीरचौ हिनस्ति हिंसीरः । स्वरे भेदः । उदि दृणातेरच् पूर्वपदान्त्यलोपश्च उदीर्यते वायुना उदरम् । जनेरर ठः । अरः ठान्तादेशः । जायतेऽस्मिन् व्याधिर्जठरम् । वनिमनिभ्यां चिद्वा । अरः ठान्तादेशः वा चित् वनति वठरः मुर्खः । मन्यते मठरः पण्डितः । कृदरादयश्च दरे साधवः । कुर्वन्ति तास्मिन् कृदरः कुसूलः । म्रियतेनेन मृदरो व्याधिः । दृणाति दृदरं विषम् । शृणाति शृदरः सूर्यः । अश्नोतेराशु कर्मणि वरट् चोपधायाः । वरट् उपधाया ई च । अश्नुते विश्वमीश्वरः व्याङि घ्रो जातौ कन् । व्याजिघ्रति व्याघ्रः । करोतेर्द्वे च । कन् करोति क्रियते चक्रः । हने रन् घ च । हन्ति हन्यते घरः गृहम् ।

रान्ताः ।

भूसलिकलिमह्यनिभडिभण्डिचण्डिशण्डिगण्डिपिण्डिभ्यः किलच् भविलं भुवनम् । सलति सलिलम् । कलयति कलिलम् । महयति महिला । अनित्यनेनानिलः । भडिः सौत्रः । भडिलो निन्दकः भण्डिलो दूतः । चण्डते चण्डिलः श्वा । शण्ड्यते शण्डिला तटम् गण्डिलं भटम् । पीड्यते पिण्डते वा पिण्डिलः पिण्डः गणकश्च तुण्डते तुण्डिलो मुखरः । मुण्डयति मुण्डिलोर्मिः । कोकिलः पिकः कमेः पश्च । इलच् पश्चान्तादेशः । कम्यते कपिलो वर्णो मुनिर्वा मिथिलादयश्च । मथतेस्यां मिथिला । इमिलः । कपिगाडिपटिभ्य ओलः । कम्प्यते कपोलः । गण्ड्यते गण्डोलः हर्षणः । पट्यते पटोलः द्रव्यम् । हृषेरुलच् । हृष्यति हर्षुलः क्रीडनमृगौ कलस्तृपश्च । कलः । तृप्यति तृपला लता । चात् काम्यते कमलम् । मण्ड्यते मण्डलम् । कुण्ड्यते कुण्डलम् । कुश्यते कोशलो देशः । तोसते तोसलः । शपेर्बश्च । कलः । बश्चान्तादेशः । शप्यतेसौ शबलः । वृषादिभ्यश्चित् । कलः चित् । वृषति वृषलः शूद्रः दीव्यति देवलः ऋषिपूजकौ । केव्यते केवलः । पटति पटलम्

१. महति महिला Dc3. २. Before it—कुटिलः PC, Dc3.

जेष्टिलोपश्च । कलः । मृज्यतेसौ मलः । चुपेरचोपधायाः । पाति मुहुश्चपलः । शकिशम्योर्नित् । शक्यतेपनेतुं शकलम् । म्यते शमलं शकृत् । द्रमिमस्योरुच्च उपधायाः । कलः । द्रमति मलम् । मस्यतेनेन मुसलम् । कम्बलादयश्च । साधवः । काम्यते म्बलः । कोमलः । शम्यते पथि दुःखमनेन शम्बलः । यते यज्ञे छगलम् । पलति पल्यते पललं तिलान्नम् । त इति पाटला लता इत्यादि । तमिविडिविलिमृणिकुलिकपिपलिविशि- चेकुणिभ्यः कालन् । ताम्यति तमालः । वेडयत्याखून् विडालः । लति विलालः भिदुरः । मृणति मृणालम् । कुल्यते कुलालः । कपयति गलम् । पलयति पलालम् । विशति तत् विशालम् । पञ्चयति ञ्चालः । कुणति कुणालं नगरम् । पतिचण्डिभ्यामालञ् । पतन्ति पातालम् । चण्डते चण्डालः । पीयुक्वणिभ्यां कालन् ह्रस्वश्च । लन् धातोर्ह्रस्वश्च । पीयते पियालं शाकं वीरुच्च । क्वणति गालं नगरम् । पुषः कलन् । पुष्कलम् । मूङ्शक्यविभ्यः क्लः । ति मूलम् । शक्नोति हृदयं मार्जयितुं शुक्लम् । अब्यते अम्लं क्कादिरसः । कुडिकुषिभ्यां क्मलन् । कुड्यते कुड्मलम् । कुष्यते ल्मलं विकसितम् । वृङ्लुटितनिताडिभ्य उलच् तण्डश्च । यन्ते लुट्यन्ते तन्यन्ते ताड्यन्ते तण्डुलाः । तण्डुलशब्दो निपातितः । यम् । स्वरविशेषार्थं वचनम् । मव्यतेर्यलोपो मश्चायुडालः । लः यलोपः मान्तादेशः आयुडागमः । मव्यति ममायालः प्रीतिः शो वा । मङ्गेरलच् । मङ्ग्यते मङ्गलम् ।

लान्ताः ।

ः षिवन् संप्रसारणम् । प्रथते पृथिवी । गौरादित्वात् ङीषि सिद्धे वं गणकृतस्यानित्यत्वज्ञापनार्थम् । अशूप्रुषिलटिकटिकणिखटि- शिभ्यः क्वन् । अश्नुतेध्वानमश्वः । प्रोषति प्रुष्वः अग्निबिन्दुः । ति लट्वश्चपलः । कटति कट्वः । कणति कण्व ऋषिः । खटति

खट्वा । विंशति विश्वम् । इण्शीङ्भ्यां वन् । एति एवम् । ¹
शेवः सर्पः । सर्वनिघृष्वरिष्वलिष्वशिवपट्वप्रह्वेष्वा अतन्त्रे । अत
अकर्तरि निपात्याः । सृतमनेन विश्वं सर्वम् । निघृष्यते निघृष्वः निशा
क्षुरो वा । रिष्यन्तेनेन रिष्वं शस्त्रम् । लिष्यते लिष्वः कान्तः । ²
शिवम् श्यति वा । पट्यते पट्वो देशः । प्रह्वयतेसौ प्रह्वः
इष्यतेसौ इष्वः । अतन्त्रे किम् । सरति सर्ता । शेवयह्वजिह्वाग्रीवाप्व
ग्रीवाः । वनि निपात्याः । शेतेत्यर्थं शेवः अजगरः । यान्त्यन
तांस्तानर्थान् यह्वा धीर्बुद्धिः । लिह्वत्यनया रसान् जिह्वा । गिरत्यनयान्नप
ग्रीवा । आप्नोति सर्वमाप्वा वायुः । ग्रीयते ग्रीवा परिमाणजातिः
कृगृशृदृभ्यो वः । कृणाति किरति वा कर्वः समुद्रमूषकौ । गिर
गृणाति गर्वः । शृणात्यसुरान् भक्तानां पापं वा शर्वः ईशः । दृणा
सर्वान् दर्वः । स्रुवः कः । स्रवन्ति तस्माद्धवींषि स्रुवः । शपेर्वन्
शपति शपते वा शप्व आक्रोशः । उल्वादयश्च । वनि साधवः
उह्लीयते उल्वम् बभ्रुजरायुः तैरक्षुः । शलति शल्यते वा शुल
स्त्रीपुंयोगः ।

वान्ताः ।

अष्टमः पादः ।

क्लिशेरीच्चोपधायाः शन् लोपश्च लो नाम् च । शन् उपधाया ई
लस्य लोपे नामागमः । क्लिश्नाति कीनाशः कदर्यः । क्लिशेर
लोपो लः । क्लिश्यते यैस्ते केशाः ॥

शान्ताः ॥

अविमह्योष्टिषच् । अवति अविषः नृपसमुद्रौ । अविषी गङ्गा
मह्यतेसौ महिषः यमवाहनं राजा च । महिषी मुख्यस्त्री । रुहेर्वृद्धिश्च
टिषच् । रोहत्यत्यर्थं रौहिषं तृणम् । रौहिषी वा दूर्वा । तवेर्णिद्वा

१. विंशति तस्मिन् PC, Dc3. २. कन्धारः PC. ३. तरक्षः Dc3
Before it—अन् रस्य लोपः Dc3. ५. रोहिषा Dc3.

च् णिच्च वा। वृद्धिः । तवति ताविषः ताविषः स्वर्गः । ताविषी
विषी गङ्गा । नञि व्यथेः । टिषच् । न व्यथते अव्यथिषः सूर्याग्नि-
ायः । सहः षट् लुक् च क्विप् । सहेः षादेशः प्रत्ययस्य लुक् ।
न्ते षट् । परौ व्रजेः षः पदान्ते क्विप् दीर्घश्च । क्विप् दीर्घः पदान्ते
तादेशः । परिव्रजति परिव्राट् । कॄतॄभ्यामीषन् । कीर्यते करीषं
ायविकारः। तरन्ति तेन तरीषः प्लवबोधौ। शॄपॄभ्यां कित्। शृणाति
शिरीषः वृक्षः । पूर्यतेनेनोदरं पुरीषं विष्ठा । अजेर्ऋज च ।
न् कित् ऋजादेशश्च । अर्ज्यते ऋजीषं धनम् । अम्बरीषम् ।
ातः । पचन्त्यस्मिन्नम्बरीषं भ्राष्ट्रम् । आप्यते तद्वायुभिरम्बरीष-
ाशम् । ऋनहिभ्यामुषच् । ऋच्छत्यर्यते वा अरुषः प्राणः । नह्यति
ो नृपः । पुरः कुषन् । पृणाति पूर्यते पुरुषो नरः । पृकलिभ्या-
न् । पृणाति परुषो निष्ठुरः । कलते कलुषोऽप्रसन्नः । पीयेरूषन् ।
ते पीयूषममृतम् । मूङ्यूवोर्लोपश्च । ऊषन् अन्तलोपश्च । मूयते
द्रुतधातुपात्रम् । यौति यूषं व्यञ्जनम् । मस्जेर्नुम् च । ऊषन् ।
त्यस्यां मञ्जूषा जलद्रोणी । अङ्कूषः । साधुः । अङ्कत्यङ्कूषो
ाणवेगाः । बहुलात् खलति खलूषः म्लेच्छः । फलति फलूषा
न् । विषेर्व्याप्तिकर्मणि कन् । वेवेष्टि विश्वं विषम् ।

षान्ताः ।

वृतॄवदिहनिकमिकषियुमुचिभ्यः सः । वृणाति वर्षम् वत्सरः ।
त्यनेन तर्षं प्लवः । वदत्यभीक्ष्णं मातरं वत्सः बालः । हन्त्य-
हंसः पक्षिसूर्यौ । काम्यते कंसः दनुजमानपात्राणि । कष्यते
देभिः कक्षं वनम् । यूयते योषा स्त्री । मोचनं मोक्षः अपवर्गः ।
च्चोपधायाः । प्लुष्यति प्लक्षः ।[7] मनेर्दीर्घश्च । सः । मन्यते-

पिबन्ति तस्मि°. Dc3. २. प्राणः Dc3. ३. मूङ्यो° PC. ४. फलूषः
५. वृणोति Dc3. ६. तर्षः Dc3, PC. ७. After it वृक्षः PC.

त्यर्थं मांसं पिशितम् । अशेर्देवने । सः । अश्नुतेऽत्यर्थमक्षः
नादिः । स्नुव्रश्चिकृत्यृषिभ्यः कित् । सः । स्नौति स
पुनर्स्त्री । वृश्चत्युष्णं वृक्षः[1] । कृन्तति कृत्सः पापम् । ऋषति
भम् । ऋषेर्जातौ । सः किच्च । ऋषति ऋक्षः श्वापदम् । मा
मीयतेऽनेन वर्षं मासः । सानुवृत्तौ पुनः सग्रहणं कित्त्वाभावार्थं
अन्यथा इत्वं स्यात् । अथवा निपातः । उन्दिगमिगुहिकुषिभ्यः कि
सः । उन्दतीत्युत्सः प्रस्रवणम् । अमत्यनेनांसः स्कन्ध
गुहति गुत्सः रोषः । कुष्णाति कुक्षः गर्भः । गृधिपत्योर्दषौ
सः किच्च ऋमादन्तादेशौ च । गृध्यति गृत्सः अभिलाषः ऋ
पतति पक्षः मासार्धम् । बृंहेर्नलोपश्च । इसिः । बृंहते
वेद्यास्तरणम् । द्युतेरिसिन्नादेशश्च जः । द्योतते ज्योति
नक्षत्रादयः । वसौ रुचेः संज्ञायाम् । इसिन् । वसवो
रोचन्ते वसुरोचिः क्रतुः । स्तुवः कित् । इसिन् । स्तूयन्ते
देवाः स्तविः यज्ञः । सहो धश्च । इसिन् धान्तादेशः ।
सधिर्भूमिः । पिबतेस्थुक् च । इसिन् । पिबति पाथिः सू
जनेरुसिः । जायते इति जनुर्जन्म । मनेर्धश्छन्दसि । उसिधे
देशः । मन्यते मनुते वा मधुः पवित्रम् । अर्तिपॄवपियजितनि
तपिभ्यो नित् । उस् । ऋच्छत्यर्यते वा अरुः सूर्यप्राणी । पॄ
पूर्यते वा परुः समुद्रः । उप्यते वपुर्देहः । इज्यते यजुश्छन्दसि ।
धनति धनुः धन्वा । तपति तपुः सूर्याग्निशत्राः । एतेर्णिच्च । उ
एति आयुः जीवनम् । चक्षेः शिच्च । चष्टे रूपं चक्षुर्नेत्रम् । बहु
न्यत्रापि ।[2] संचष्टे संचक्षुः । परिचष्टे परिचक्षुः । दमेर्डो
दमयति दाम्यति दोर्बाहुः । अत्यविचमितमिनमिरभिलभि
तपिपतिपनिपणिमहिभ्योऽसच् । अतत्यतसः अत्नृपौ वायुरात्मा
अवति अवसः समयः । चमत्यनेन चमसः पात्रम् । तम्य

१. After it तरुः । Dc3. २. After it उस् PC, Dc3.

नदी । रभते रभसः संभ्रमः । लभते लभसः पावकः ।
नभसः हिंस्रः । पनायति पनसः रुरुतरुविशेषौ । पतति पतसः
इत्यादि । वेञस्तुट् च । वीयते वेतसः वानीरः । वयो णित् ।
। वयते वायसः ध्वाङ्क्षः । वहियुभ्यां नित् । असन् । वहति
अनड्वान् । यूयते यवसं तृणम् । पातेर्डुम्सुन् । पाति पुमान्
पिबतेरि च । असुन् । पीयते पयो जलम् । अशेर्देवने युट् च ।
। अश्नुते वाशुभं यशः । उब्जेर्बले बलोपश्च । असुन् ।
ओजः बलम् । श्वयतेः संप्रसारणं च । असुन् । श्वयति शवः ।
स्वाङ्गे शिरः किच्च । असुन् शिरादेशः । श्रयत्यस्मिन्
मूर्धा । अर्तेरुच्च । असुन् कित् । अर्यते रहसि स्त्रीभिरुरो
व्याधौ शुट् च । अर्तेरसुन् । अर्यते पाणिभिरर्शांसि रोगः ।
नुट् च । अर्तेरसुन् । अर्यते पिपासुभिरर्णो जलम् । इण
। असुन् नुट् च । एति कर्मणा एनः पापम् । रिचेर्धने
असुन् किच्च । रिच्यते रेको धनम् । चायतेरन्ने ह्रस्वश्च ।
। चायते चणः अन्नम् । बहुलात् णत्वम् । वृङ्शीङ्भ्यां
ङ्योः फट् च । असुन् । व्रियते वर्फो रूपम् । शेते शेफः
स्रुरीभ्यां तुट् च । असुन् । स्रवति स्रोतः स्रवणम् । रीयते
कम् । पातेर्बले जुट् च । असुन् । पातीति पाजो बलम् ।
थुट् च । पातेरसुन् । पाति जीवितं पाथो जलम् । अन्ने च ।
म् । अदेर्नुम्धौ च । असुन् नुमागमः धोन्तादेशः ।
अन्नम् । स्कन्देश्च स्वाङ्गे । असुन् धोन्तादेशः । स्कन्दति
देहाङ्गम् । आपः कर्माख्यायाम् ह्रस्वश्च नुड् वा ।
ह्रस्वः नुड् वा स्यात् । आप्नुवन्ति तत् अप्नः अपः
नम् । रूपे जुट् च । आपोसुन् ह्रस्वो जुट् च । आप्यते अब्जो
उदके नुम्भौ च । आपः असुन् नुमागमो भान्तादेशो
। आप्नोति सर्वमम्भः । नहेर्दिवि भश्च । असुन् । नह्यते

पः for अप्नः । अपः Dc3.

तन्मेघैर्नभ आकाशम् । इण आग अपराधे । असुन्
एत्यनेन आगः अपराधः । अमेर्हुक् च । असुन् । अम
रमेर्देशे हश्च । असुन् । होन्तादेशः । रमन्तेस्मिन्
देशः । अञ्ज्यजियुजिभृजिभ्यः कुश्च । असुन् । कवर्गोन्त
अङ्कः क्षेम । अजाति अगः । युनक्ति योगः मनः । भृज्यते
भूरञ्जिभ्यां कित् । असुन् । भुवः अन्तरिक्षम् । रजः
वसेर्णित् । असुन् । वस्ते शरीरं वासः वस्त्रम् । च
असुन् । चन्दयति छन्दः वेदः । पचिवचिभ्यां सुट्
पचति तेन पक्षः । उच्यतेनेन वक्षः उरः । वहिहाधा
असुन् सुट् च । उह्यते वक्ष उरो दासो वा । प्रहाण
दधाति स धासः शरणम् । इणोसिः । एतीत्यया उरः ।
पूर्ववच्च सर्वम् । धातूपसर्गसंबन्धो मिथुनम् । तत्र असिः
कार्यम् । सुष्ठु अश्नुते सुयशाः । सुष्ठु श्रवति सुश्रोताः । सु
इत्यादि । ने हन एह च । नञ्पूर्वात् हन्तेरसिः
नं आहते अनेहाः कालः । विधाञो वेध च । असि
विदधाति वेधाः । नुवो धुट् च । नूयते नोधाः ऋत्विक् ।
पपदयोः पूर्वपदप्रकृतिस्वरत्वं च । चन्द्रे मो डित् । चन्
अस्मादसिर्डिच्च । चन्द्रं मिमीते मीयते वा चन्द्रमाः श
धाञः । असिः । वयो दधातीति वयोधाः प्राणश्चन्द्रश्च
पयो दधातीति पयोधाः समुद्रः । पुरसि च । धाञोसिः
तीति पुरोधा उपाध्यायः । पुरूरवाः । निपातः । पुरूरूयं
वैतेति पुरूरवा राजा । चक्षेर्बहुलं शित् । आचष्टे आच
आख्याः । प्रख्याः । बृहस्पतिः । वसेः कित् । वसति तस्य
दमेरूनसिः । दाम्यति दमूनाः शुक्रः । अङ्गिराः
अङ्गारेभ्यः सृतोङ्गिराः मुनिः । अप्सरसः । असौ साधुः ।

१. भूबि Dc3, PC. २. भूषः Dc3, PC. ३ ने Dc3.

रसः स्वर्गस्त्री । विदिभुजिभ्यां विश्वे । असिः । विश्वं वेत्ति ति विद्यते वा विश्ववेदाः । विश्वं भुनक्ति विश्वभुजः अग्निः । कनसिः । वष्टि उह्यते उशनाः शुक्रः । अमेरसः । अमत्यमसो- ोः । अपि सर्तेरसुन् । अद्भ्यः सृता अप्सरसः । कृञः पासञ् । ो कार्पासः वस्त्रयोनिः । दंसेष्टदतौ नस्य आत्र । दंसेष्टत्अत् स्तः । नस्य चाकारः । दस्यते दासः । तित्त्वात् स्वरितः । । दासी । दाशतेश्च तटतौ । दाशन्ति तस्मै जना दाशः । । दाशी ।

सान्ताः ॥

गुहेः कन् । गूहति गुहः सेनानीः । गुहा अद्रिः । सिचेर्नुम् हौ च । सिञ्चति सिंहः । वहेः क्विबनसो डश्च । अनो वहतीत्यनड्वान् ।

हान्ताः ।

नवमः पादः ।

स्थाचतिमृजेरालज्वालजालीयचः । एते क्रमात् स्युः । तिष्ठ- ऽस्मिं स्थालः । चल्यते चत्वालः । मार्ष्टि मार्जालीयः । बहुलात् ः । सृयुवचिभ्योन्युजागूजक्नुचः । क्रमात् । धावति सरण्यु- वायुः । यूयते यवागूः पेया । वक्ति वचक्नुर्वाग्मी । शके- तोन्त्युनयः । एते । शक्नोति नभो गन्तुं शकुनः शकुन्तः शकुन्तिः नेः । इणस्तशस्तशसुनौ । एति एतशाः वाय्वग्न्यर्काः । स्वरे । उल्मुकदर्विहोमिनः । साधवः । उषत्युल्मुकम् अर्धदग्धं र् । दर्विः साधनं भाण्डम् । जुहोति होमी ऋत्विक् । विहा । क्विपि साधू । विस्यति विसा । विजहाति विहा । शीङो धुग्लग्वलन्वालनः । शीङ एते स्युः । स्मिन् जना सीधु मदिरा । बहुलात् सत्वम् । साधु कर्मणि शी धर्मसमाधिः । शेवलं शेवालं जलमलम् । खर्जिपिजादि-

अ... Dog. प. ...गु' Dog, PC.

भ्य ऊरजूलचौ । खर्ज्यादेरूरन् । त्रिजादेरूलच् । खर्जति खर्जूर
कर्जति कर्जूरः वृक्षजातिः । कल्पते कर्पूरः गन्धद्रव्यम् । वि
विजूलम् । हन्ति वधूलः घातकः । मृडः कीकन्कङ्कणौ
मृड्यते मृडीकम् । मृडङ्कः । ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्याङ्गिकुयु
शिभ्यः कत्निच्यतुजलिजिष्ठुजिष्ठजनिस्यन्निषन्नसन्नूषानुकः । ए
क्रमादेते स्युः । ऋच्छत्यर्यते वा अरत्निः बाहुमध्यभागः । तने
तन्यतुर्वायुः सूर्यश्च । अनक्ति अज्यते वानेनाञ्जलिः करद्व
पुटः । वनति वनोति वा वनिष्ठुः अपानोपरिस्थानम् । अनि
अञ्जिष्ठः गतिरग्निश्च । अर्पयति अर्पयते वा अर्पणिरार्द्रमांसम्
माद्यत्युदकं प्राप्येति मत्स्यो मीनः । अङ्गत्यनेनेत्यङ्गिषः । कौ
कवते कूयते वा कवसः । यौति यूयते वा यवूषः । कृशयत इ
कृशानुरग्निः । स्पृशेः श्वण्शुनौ पृ च । स्पृशति स्पृश्यते वा पा
पर्शु गतमस्थि । कुसेरुलोम्भोण्वोमेदेताः कित् । कुसेरेते स्युः । कुस्य
तानि कुसूलः कुसुम्भः कुसुण्वः कुसुमम् कुसीदम् कुसितम् । जनित
च्युसूवृमदिशामिगामिभृञ्भ्य इत्वन्त्वनूत्नण्क्किन्शाकूस्यखाकटश्च
जायते जन्यते वा जनित्वं लोकः । ददाति दात्वो यज्वा । च्यव
च्यौत्नोण्डजः । धावति सृणिः रविः । वृणोति वृशः । माद्य
मत्स्यः । शाम्यति शङ्कुः । गच्छति गमकः । भरति भरटः
अन्येभ्योपि दृश्यन्ते इत्वादयः । पीयते पीत्वा । प्यायते प्या
लवनं लूतिः । एवमन्ये । सानसिधर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वर
पल्वलधिष्ण्यशल्याः । एते साधवः । सनोति सन्यते
सानसिः स्नेहो हिरण्यम् । ध्रियते धारयति वा धर्णसिः लोकपालः
पृणातीति पर्णसिः आभरणक्रिया । ताड्यते तण्डुलो व्रीहिसारः
अङ्क्यतेङ्कुशः प्रतोदः । चषति चषालो यज्ञभाण्डम् । ए
इल्वलः । पिबान्ति तस्मिन् पल्वलः । धिषति धिष्ण्यम्

तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्॥३।३।१०॥

क्रियायां क्रियार्थायामुपपदे धातोर्भविष्यति तुमुन्ण्वुलौ स्तः। मान्तत्वादव्ययत्वम्। कृष्णं द्रष्टुं याति। कृष्णं दर्शको

---

शलति शल्यम्। आः समिण् निकषिभ्याम्। समेति समया। निकषणं निकषा। लोष्टफलितौ। निपातौ। ऋति लोष्टः। फैलयत्यनेन फलितम्। अवद्यावमाधमार्वरेफाः कुत्सिते। साधवः। अवद्यम्। न वदन्ति तत्पुरुषाः। अवमम्। अधमम्। अर्वतेसौ अर्वा। रिफति रेफः। लीङ्रीङो ह्रस्वश्च पुट् तरौ श्लेषकुत्सनयोः। एतयोः क्रमात् तरौ पुट् ह्रस्वश्च। लीयते लिप्तम्। रीयते रिप्तम्। स्थः स्थ चावजवकौ। अवजवकौ स्थ इत्यादेशश्च। तिष्ठति स्थवः। स्थवकः। इत्यादयोन्येपि कल्प्याः। येत्र साधिता अप्युक्तास्तेर्थभेदाद्धातुभेदात् स्वरभेदाद्वा यथायोगं ज्ञेयाः।

मिश्राः।

दशमः पादः॥

एवमादिशब्दसूचिता उणादयो दशपाद्यनुसारेण व्याख्याताः॥

**तुमुन्।** क्रिया अर्थः प्रयोजनं यस्याः सा क्रियार्था। **मान्त-त्वा**दिति। 'कृन्मेजन्तः' इत्यनेन। ण्वुल् 'कर्तरि कृत्' इति कर्तरि। तुमुन् भावे। कुत एतत्। 'तुमर्थे सेसेन—' इत्यत्र तुमर्थ-ग्रहणात्। यदि तुमुन् कर्तरि स्यात् तदा सेसेनादयोपि 'कर्तरि कृत्' इति कर्तरि स्युरिति तुमर्थग्रहणं न कुर्यात्। कृतवांश्च। ततो ज्ञायते तुमुन् कर्तरि नेति। तत्रानिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति भाव एव तुमुन्। कृष्णमिति। कृष्णदर्शनार्था गमनक्रियात्रोपपदम्। क्रियायां किम्। भिक्षिष्य इत्यस्य जटाः। क्रियार्थायां किम्। धावतस्ते पतिष्यति

---

१. क्रियार्थायां क्रियायां $D_2$, P, $D_4$. २. $D_2$ drops it. ३. फलस्य° PC. ४. नेयाः $Dc_3$. ५. After it—स्यात् PC, $Dc_3$. ६. भिक्षिष्यत $Dc_3$. ७. पतति $Dc_3$, PC.

याति । पुनर्ण्वुलुक्तेर्ज्ञायते नात्र वासरूपन्यायेन तृजादय इ

**समानकर्तृकेषु तुमुन् ॥३।३।१५८॥**

अक्रियार्थोपपदार्थमेतत् । इच्छार्थेष्वेककर्तृकेषूपप
धातोस्तुमुन् स्यात् ॥ इच्छति भोक्तुं वेष्टि वाञ्छति वा । इच
करोतीत्यादावप्रयोगान्न ।

**शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थे
तुमुन् ॥३।४।६**

एषूपपदेषु धातोस्तुमुन् स्यात् ॥ शक्नोति भोक्तुम् ।
धृष्णोत्यादौ । अस्ति भवति विद्यते वा भोक्तुम् ।

---

दण्डः । 'ण्वुल्तृचौ' इति सामान्येन विहितो ण्वुल् वासरूपे
त्रापि स्यात् । किं पुनर्ण्वुल्ग्रहणेनेत्यत आह—**पुनर्ण्वुलुक्तेरि**
तेन कर्ता यातीत्यादि न स्यात् । तुमुनो नकार आद्युदात्तार्थ
उकार उच्चारणार्थः । ण्वुलो णकारो वृद्ध्यर्थः । लकारो 'लि
इति प्रत्ययात् पूर्वस्योदात्तार्थः ।

**समान** । **अक्रियार्थोपपदार्थमेतत्** इति अग्रिमसूत्रद्वयस्य प्र
जनकथनपरसंभवादत्रापि लाघवार्थमुक्तम् । अस्य तु प्रयोजनमिच्छ
र्थेष्विति लिङ्लोटौ परत्वात् प्राप्नुतस्तद्बाधा ण्वुल्बाधा च सम
कर्तृके च विधिरिति । समानकर्तृकेषु किम् । त्वां भुञ्जानमिच्छा
हम् । वर्तमाने लडेव । **वष्टीति** । वश कान्तौ ।

**शक** । पूर्वसूत्रेण सिद्धावपि अक्रियार्थेष्वपि शक्यादिषूप
तुम्सिद्ध्यर्थं वचनम् । **शक्नोतीति** । नात्रोपपदस्य क्रियार्थता । साम
मर्थान्तरं गम्यते । एवं धृष्णोत्यादावुपपदे उदाहार्यमित्यर्थः । धृष्णो
भोक्तुम् । जानाति भोक्तुम् । ग्लापयति भोक्तुम् । घटते भोक्तुम
आरभते भोक्तुम् । आलभते भोक्तुम् । प्रक्रमते भोक्तुम् । उत्स

---

१. Before it—कामयते $D_2$, $B_2$, $D_4$. २. °त्यादयः $D_1$; °त्यादि
३. तुमुन्सिद्ध्य° $Dc_3$, PC.

**कालसमयवेलासु तुमुन्** ॥३।३।१६७॥

एषु धातोस्तुमुन् स्यात् ॥ कालः समयो वेला वा भोक्तुम् ।

**भाववचनाश्च**[2] ॥३।३।११॥

क्रियार्थायां क्रियायां भविष्यति घञादयः स्युः ॥ ज-[3]
ये याति[4] । पाकाय व्रजति ।

---

ाक्तुम् । स्पष्टत्वात् त्यक्तम्—'पर्याप्तिवचनेष्वलमर्थेषु' ॥३।४।६६॥
न्यूनतोच्यते यैस्तेष्वलमर्थेषूपपदेषु धातोस्तुमुन् स्यात् । पर्याप्तो
क्तुम् । पारयति भोक्तुम् । पर्याप्तिवचनेषु किम् । अलं भुक्त्वा ।
लमर्थेषु किम् । पर्याप्तं भुङ्क्ते । पूर्वसूत्रे शक्तिग्रहणं नालमर्थम् ।
क्यमेव कर्तुमिति ।

**काल** । इह कस्मान्न । भूतानि कालः पचतीति वार्तेति ।

ादिग्रहणमिहानुवर्तते । तेन प्रैषादिष्वेव स्यान्नान्यत्र । इह कस्मान्न ।
लो भोजनस्येति । वासरूपेण ल्युडपि स्यात् ।

**भाववचना** इति । ब्रुवन्तीति वचनाः । भावस्य वचना भाव-
चना इत्याधिकृत्य घञादय इत्याह—**घञादय** इति । **जयाय**
तीति । 'एरच्' । **पाकायेति** । घञ् । 'चजोः—' इति कुत्वम् ।
ुमर्थाच्च—' इति चतुर्थी । वचनग्रहणं यथैव स्वैर्याभ्यः प्रकृतिभ्यो
। विशेषणेन प्रोक्ता घञादयस्तथानेनापि स्युरित्येवमर्थम् । 'अण्
र्मणि च' ॥३।३।१२॥ व्याख्यातप्रायत्वादुपेक्षितम् । धातोः
र्मण्युपपदे क्रियार्थायां भविष्यत्यण् स्यात् । वासरूपविधेरभावात्
ला बाधितोण् प्रतिप्रसूयते । तेन ण्वुलं बाधते परत्वाच्च कादीन् ।
ध्रदायो व्रजति । गोदायो व्रजति ।

---

१. C and D drop it. २. °वचनाच्च $D_4$. ३. यागाय $D_1$, $D_2$, $D_3$, , C, $B_1$, $B_2$. ४. याति C. ५. Before it—'प्रैषादिसर्ग' इत्यतः Pc.
शरलावो $Dc_3$, PC.

पदरुजविशस्पृशो घञ् ॥३।३।१६॥

एभ्यो घञ् स्यात् कालत्रये[2]॥ पचाद्यजादेरपवादः पद्यतेऽसौ पादः । रोगः । वेशः । स्पर्शः ।

सृ स्थिरे ॥३।३।१७॥

सर्तेः स्थिरे कर्तरि घञ् स्यात् ॥ सारः । व्याधिमत्स्यबलेषु च ॥* उपसर्गस्य घञ्यमनुष्ये बहुलम् ।[4] अतीसारः । विसारः । प्रसारः ।

भावे ॥३।३।१८॥

धात्वर्थे वाच्ये धातोर्घञ् स्यात् ॥ पाकः ।

---

पद इति । अयं ण्वुल्तृचोरपवादः । पदमित्येतत्तु 'अनुदात्तं पदमेकवर्जम्' अस्मान्निपातनात् । रोगः वेशः इति । रुजिविशति—आभ्यामिगुपधलक्षणस्य कस्यापवादः । स्पर्श इति । स्पृशः स्पृश उपतापे इति वक्तव्यम् । अत्र त्व पचाद्यचोपवादः । घञि स्यान्द्युदात्तत्वमचि त्वन्तोदात्तत्वमिति विशेषः ।

सृ । स्थिरं चिरस्थायि । सार इति । खदिरादीनाम् । स खदिरादौ चिरं तिष्ठन् कालान्तरे सरतीति धात्वर्थस्य कर्ता । स्थिरे किम् । सर्ता । सारकः । व्याधीति । अस्थिरार्थम् । अतीसारो व्याधिः । विसारो मत्स्यः । प्रसारो बलम् ।

भावे ।

नित्यानामेव शब्दानां सौकर्यात् प्रतिपत्तये ।
अन्वाख्यानाद्भावशब्देऽप्यस्ति नान्योन्यसंश्रयम् ॥

इति वचनाद् भावशब्दोऽपि घञन्तः सिद्धः । भवतेर्धात्वसामान्यवाचित्वाद्भावशब्देन धात्वर्थसामान्यमुच्यते । तेन भवते भाव इत्याह—धात्वर्थे वाच्य इति । यथा पचति पाचक इत्य प्रकृतिः क्रियामाह प्रत्ययस्तु साधनं तथा पाक इत्यादौ प्रकृ साध्यमर्थमाह प्रत्ययस्तु तस्यैव सिद्धतां द्रव्यधर्मलिङ्गसंख्याकार शक्तिसंबन्धयोग्यमाकारमाह । तदुक्तम्—

---

१. C drops it. २. °त्रयेपि $N_1$. ३. मत्स्यव्याधि° C. ४. After it स्यात् $D_2$. ५. अतीसारम् $D_2$.

इकः काशे ॥६।३।१२३॥

काशे उत्तरपदे इगन्तस्यैव प्रादेर्दीर्घः स्यात् ॥ नीकाशः
काशः । इकः किम् । प्रकाशः ।

अकर्तरि च कारके संज्ञायाम् ॥३।३।१९॥

धातोर्घञ् स्यात् कर्मादौ वाच्ये संज्ञायाम् ॥ प्रास्यति
ः । चादसंज्ञायामपि । कस्त्वया दायो दत्तः । दारजारौ
रि णिलुक् च ॥*[४]

---

'आख्यातशब्दे भागाभ्यां साध्यसाधनवर्तिता ।
प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः ॥
साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना ।
सिद्धभागस्तु यस्तस्याः स घञादिनिबन्धनः ॥' इति ।
वचने अतन्त्रे । तेन पाकौ पक्तिः पचनमित्यादयोऽपि स्युः ।

इकः । 'उपसर्गस्य घञि—' इत्येव सिद्धे नियमार्थमाह—
तस्यैवेति ।

अक । प्रास्यतीति । असु क्षेपणे । कर्मणि । अकर्तरि किम् ।
तीति मेषः । बिभर्तीति भर्ता । अच् । संज्ञायां किम् । कर्तव्यः ।
देति । चकारो भिन्नक्रमः संज्ञायामित्यस्यानन्तरं द्रष्टव्यः । ततः
यां चासंज्ञायां च स्यात् । दाय इति । कर्मणि घञ् ।
तो युक्' । दारेति । दॄजादिशासौ । दारयन्ति जरयन्ति । इतः परं
व' 'अकर्तरि च कारके' इत्यनुवर्तते 'कृत्यल्युटो बहुलम्'
यावत् । [६]स्पष्टत्वादुपेक्षितान्येकत्रिंशत् सूत्राणि घञ्विधायकानि

---

कस उत्तर° $D_2$. २. $D_1$ drops एव. ३. प्रास्यति तं $D_1$, $D_4$, $B_2$;
न्ति तं P $D_2$, $N_1$. ४. After it दाराः । जारः $B_2$. ५. सत्त्व° PC.
६. Before it—इतःपरं PC.

व्याख्यास्यामः—'परिमाणाख्यायां सर्वेभ्यः' ॥३।३।२०॥ प
माणाख्यायां गम्यमानायां सर्वेभ्यो धातुभ्यो घञ् कर्मादौ। एकस्तण्
निश्चायः। निष्पावः। धातोरित्येव सिद्धे सर्वग्रहणमपोपि बाधन
मन्यथा पुरस्तादपवादत्वादचमेव बाधेत। स्त्रीप्रत्ययास्तु
बाध्यन्ते। एका तिलोच्छित्तिः। परिमाणाख्यायां किम्। निश्च
आख्याग्रहो रूढिनिरासाय। तेन संख्यापि न प्रस्थाद्येव। 'उप
रुवः' ॥३।३।२२॥ रु शब्दे। घञ्। अपोपवादः। संराव
उपरावः। उपसर्गे किम्। रवः। 'समि युद्रुदुवः' ॥३।३।
घञ्। संयावः। संद्रावः। संदावः। समि किम्। प्रयव
'श्रिणीभुवोनुपसर्गे' ॥३।३।२४॥ पञ्चम्यर्थे सप्तमी। एभ्यो घ
नाजपौ। श्रायः। नायः। भावः। अनुपसर्गे किम्। प्रश्रय
प्रणयः। प्रभवः। कथं नयः। 'कृत्यल्युटो बहुलम्' इति। प्रभाव
प्रकृष्टो भाव इति। 'वौ क्षुश्रुवः' ॥३।३।२५॥ घञ्। नाप्। विक्षा
विश्रावः। वौ किम्। क्षवः। 'अवोदोर्नियः' ॥३।३।२६॥ अचोपव
घञ्। अवनायः अधोनयनम्। उन्नायः ऊर्ध्वनयनम्। बहुलादुन्न
पि। 'प्रे द्रुस्तुस्रुवः' ॥३।३।२७॥ घञ्। नाप्। प्रद्राव
प्रस्तावः। प्रस्रावः। प्रेति किम्। द्रवः। 'निरभ्योः पूल्वोः' ॥३।३।२
घञ्। नाप्। निष्पावः धान्यविशेषः। अभिलावः। निरभ्योः कि
पवः। लवः। 'उन्न्योर्ग्रः' ॥३।३।२९॥ घञ्। नाप्। उद्गार
अतिप्रवृत्तो ध्वनिशब्दः। निगारो भक्षणम्। उन्न्योः किम्। गर
'कॄ धान्ये' ॥३।३।३०॥ कॄ विक्षेपे। अस्मादुन्न्योर्घञ् नाप् धान्यविष
उत्कारो निकारो वा धान्यस्य। धान्ये किम्। भैक्ष्यस्योत्कर
पुष्पनिकरः।[2] 'यज्ञे समि स्तुवः' ॥३।३।३१॥ घञ्। नाप्। संस्त
समेत्य स्तुवन्ति छन्दोगा यत्र स देशः। यज्ञे किम्। संस्तव
परिचयः। 'प्रे स्त्रोयज्ञे' ॥३।३।३२॥ घञ्। नाप्। शङ्खप्रस्तार
अयज्ञे किम्। प्रस्तरः। 'छन्दोनाम्नि च' ॥३।३।३४॥ वौ स्तृणाते

१. यवः PC, Dc3. २. निकरः for पुष्पनिकारः। Dc3, PC.

ये । विष्टारपङ्क्तिश्छन्दः । 'उदि ग्रहः' ॥३।३।३५॥ घञ् ।
ग्राहः । 'समि मुष्टौ' ॥३।३।३६॥ ग्रहेर्घञ् नाप् । अङ्गुलि-
षये संग्राहो मुष्टिः । मुष्टौ किम् । संग्रहो धान्यस्य ।
णिोर्द्यूताभ्रेषयोः' ॥३।३।३७॥ परिन्योरुपपदयोः क्रमान्नयते-
ञ् नाप् क्रमेण द्यूते उचिते च वाच्ये । परिणायः
। न्यायः । अन्यत्र परिणयो विवाहः । न्ययं गतः पापः । नाश-
। 'परावनुपात्यय इणः' ॥३।३।३८॥ अनुक्रमे वाच्ये घञ्
र्यायः । अनुपात्यये किम् । कालस्य पर्ययः अतिपातः ।
शेतेः पर्याये' ॥३।३।३९॥ तत्र राजविशाय उपशायो वा ।
म् । विशयः । अनुपात्ययानुवृत्त्यैव सिद्धौ पर्यायग्रहः पर-
धितुम् । 'हस्तादाने चेरस्तेये' ॥३।३।४०॥ घञ् । नाप् ।
ः । हस्तादानयोगत्वे किम् । तालफलप्रचयः । अस्तेये
ष्पप्रचयश्चौर्येण । 'संघे चानौत्तराधर्ये' ॥३।३।४२॥ चेर्घञ् ।
दिश्चस्य कः प्राणिस्तोमे वाच्ये अनौत्तराधर्ये सति । वैया-
यः । अनौत्तराधर्ये किम् । सूकरनिचयः । स्तनपानेन यदो-
वेनाशेरते तदेदं प्रत्युदाहरणम् । संघे किम् । प्रमाणसमुच्चयः ।
न्योर्ग्रहः' ॥३।३।४५॥ घञ् । नाप् । अवग्राहो निग्राहो
भूयात् । शपने किम् । अवग्रहः पदस्य । 'प्रे लिप्सायाम्'
॥ ग्रहो घञ् लिप्सायाम् । पात्रग्राहेण चरति भिक्षुः ।
किम् । प्रग्रहः कृष्णस्य । 'परौ यज्ञे' ॥३।३।४७॥ ग्रहे-
ग्राहः । यज्ञे किम् । परिग्रहः । 'नौ वृ धान्ये' ॥३।३।४८॥
भ्यां घञ् नाप् । नीवारः । धान्ये किम् । निवार्यते
न्या । 'उदि श्रयतियौतिपूद्रुवः' ॥३।३।४९॥ घञ् ।
च्छ्रायः । उद्यावः । उत्पावः । उद्द्रावः । वक्ष्यमाणाद्विभाषा-
ः समुच्छ्रय इत्यपि । 'विभाषाङि रुप्लुवोः' ॥३।३।५०॥

गां Dc3, PC.

एरच् ॥३।३।५६॥

इवर्णान्तादच् स्यात् भावादौ ॥ घञोपवादः । चयः । जयः ।

ॠदोरप् ॥३।३।५७॥

ॠकारान्तादुवर्णान्ताच्चाप् स्याद्भावादौ ॥ करः । गरः । स्तवः । लवः ।

---

आङि वा घञ् । पक्षे अप् । आरावः । आरवः । आप्लावः । आप्लवः । 'अवे ग्रहो वर्षप्रतिबन्धे' ॥३।३।५१॥ वा घञ् । नाप् । अवग्राहः । अवग्रहः । वर्षप्रतिबन्धे किम् । अवग्रहः पदस्य । 'प्रे वणिजाम्' ॥३।३।५२॥ वणिक्संबन्धिनि सूत्रे ग्रहेर्घञ् वा नाप् । वणिक् प्रग्राहवान्यद्वत् काले चरति सिद्धये । अन्यत्र प्रग्रहः । 'रश्मौ च' ॥३।३।५३॥ ग्रहेर्घञ् वा । प्रग्रहः । प्रग्राहः । खलीसूत्रम् । 'वृणोतेराच्छादने' ॥३।३।५४॥ प्रे घञ् वा । प्रवारः । प्रवरः । आच्छादने किम् । प्रवरा[1] गौः । 'परौ भुवोवज्ञाने' ॥३।३।५५॥ वा घञ् । परिभवः । परिभावः । अवज्ञाया किम् । सर्वतो भवनं[2] परिभवः ।

'एरच् ।' चकारः 'थाथघञ्क्ताजबित्रकाणाम्' इत्यत्र 'अच्' इति विशेषणार्थः । अन्यथात्र 'अप्रत्ययात्' इत्यस्यापि ग्रहणं स्यात् । चयः जयः इति । चिञ् चयने । जि जये । भयादीनामुपसंख्यानम् । भयम् । वर्षम् । नपुंसके भावे क्तादिनिवृत्त्यर्थम् । भाष्यप्रयोगात् कामवर्षणादस्मात् वर्षणमित्यपि स्यात् । कल्पादिभ्यो नेति वाच्यम् । कल्पः । अर्थः । मन्त्रः ।[3]

ॠदो । पकारः 'अनुदात्तौ सुप्पितौ' इत्यनुदात्तत्वार्थः । ॠदोरिति न तकारः । किं तु दकारो मुखसुखार्थः । तेन तादपि तपर इति तत्कालग्रहणं नेत्यभिप्रेत्या ह-उवर्णान्ताच्चेति । कर इत्यादि । कॄ विक्षेपे । गॄ निगरणे । ष्टुञ् स्तुतौ । लूञ् छेदने ।

---

१. प्रवरो गौः PC, Dc3. २. भवः PC, Dc3. ३. After it घम् PC, Dc3.

इङश्च ॥३।३।२१॥

अस्माद् घञ् स्याद् भावादौ नाच् ॥ अध्यायः । उपे-
ास्मादधीते उपाध्यायः ।

प्रथने वावशब्दे ॥३।३।३३॥

विपूर्वात् स्तृञो घञ् स्यात् विस्तीर्णार्थे न तु शब्दे ॥
ास्य विस्तारः । शब्दे तु वाचो विस्तरः ।

घञपोश्च ॥२।४।३८॥

अदेर्घस्लृ स्याद् घञि अपि च ॥

उपसर्गेऽदः ॥३।३।५९॥

अदेः प्रादावप् स्याद्भावादौ ॥ प्रघसः । प्रादौ किम् । घासः ।

---

इङ । ननु घञ्प्रकरणे एव किमिति न पठितान्येतानि सूत्राणि ।
नपोरपवादत्वात् तौ विधाय पठितानीत्यदोषः । इङ् अध्ययने ।
ाध्यायं इति । अपादाने स्त्रियां च वक्तव्यं तदन्ताच्च वा ङीष् ।
ाध्याया । उपाध्यायी । श्री वायुवर्णनिवृत्तेषु । शॄ हिंसायाम् ।
ेा वायुर्वर्णश्च । निवृत्तं सीतादिदुःखवारणार्थमावरणम् ।

गौरिवाकृतनीशारः प्रायेण शिशिरे कृशः । अकृतावरण इत्यर्थः ।

प्रथ । स्तृञ् आच्छादने ।

घञ ।

उपसर्गे । घञोपवादः । अन्यत्रापि हलन्तादप् ।

---

. उपेत्यस्मादधीयते $D_2$, $B_2$. २. विस्तीर्णतार्थे $D_2$, P; $N_1$. ३. अदः

**समुदोरजः पशुषु ॥३।३।६९॥**

समुत्पूर्वादजतेरप् स्याद् भावादौ पशुविषये ॥ अघञपो-रित्युक्तेर्वीभावो न । समजः पशुसङ्घः । उदजः पशुप्रेरणम् । अन्यत्र समाजः । उदाजः । नोदात्तोपदेशेति न वृद्धिः । शमः । आचमादेस्तु । आचामः । कामः । वामः । अमा-देस्तु । आमः । अमः । चामः । चमः । विश्रामो । विश्रमः । विश्रामोपशब्द इति काशिकायाम् । हनस्तोचिण्णलोः । आघातः ।

**हनश्च वधः ॥३।३।७६॥**

हन्तेरनुपसर्गाद्भावे अप् स्यात् हन्तेर्वधादेशश्च ॥ वधः । घञोपीष्टिः । घातः । निमिमीलियां खल्चोरात्त्वनिषेधः ।

---

समु । अज गतिक्षेपणयोः । अन्यत्रेति । सधर्मिसंघे । **शम** इति । घञ् । **आचाम** इति । चमु अदने । आङ्पूर्वः । कमु कान्तौ टुवमु उद्गिरणे । **अमादेरिति** । केषांचिन्मतेन वा वृद्धिः **विश्रामोपशब्द** इति । तथा च **काशिकायां वामनेनोक्तम्** । विश्राम भूमिरित्येवमादिकं प्रयोगमन्याय्यमेव मन्यन्ते । **आघात** इति घञ् । 'हो हन्तेः—' इति कुत्वम् ।

**हनः** । अत्र सूत्रे वधशब्दस्यान्तोदात्तस्योच्चारणादपि कृ 'अतो लोपः' इत्यकारलोपे 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्यु दात्तनिवृत्तिस्वरेणापि उदात्तत्वम् । **निमिमीति** । 'मीनातिमिनोति दीङां ल्यपि च' 'विभाषा लीयतेः' इति प्राप्तस्यात्वस्य निषेधः

---

१. पशुसंघातः $D_1$. २. °पदेशस्येति $D_2$. ३. Before it—अनुदात्तो पदेशेति किम् । रामः । $N_1$. ४. $D_2$ drops it. ५. विश्रमोपशब्दः काशिक $D_1$. ६. घातम् $D_2$. ७. घञपीष्टः C. ८. कुः । $Dc_3$, PC.

य इति 'एरच् ।' इतःपरं स्पष्टत्वादुपेक्षितानि अब्विधायकानि
ाणि सप्तविंशतिं व्याख्यामः । 'ग्रहवृदृनिश्चिगमश्च' ॥३।३।५८॥
ोप् । घञचोरपवादः । ग्रहः । वरः । दरः । निश्चयः ।
। निश्चिग्रहो मध्योदात्तार्थः । वशिरण्योश्च । वशः । रणः ।
स्नापाव्यधिहनियुधां कः । स च घञर्थैकविधानमिति । प्रतिष्ठ-
मन् प्रस्थः सानुः । प्रस्नात्यस्मिन् प्रस्नः कटाहः । प्रपिबन्ति
ां प्रपा पानीयशाला । आविध्यन्त्यनेनाविधमायुधम् । विहन्त्य-
निति विघ्नः । आयुध्यतेनेनायुधम् । 'नौ ण च' ॥३।३।६०॥
मदेर्णः अप् च । न्यादः । निघसः । 'व्यधजपोरनुपसर्गे' ॥३।३।६१॥
। व्यधः । जपः । अनुपसर्गे किम् । आव्याधः । उपजापः । 'स्वन-
र्वा' ॥३।३।६२॥ अनुपसर्गे वाप् । स्वनः । स्वानः । हसः ।
ः । उपसर्गे प्रस्वानः प्रहासः । 'यमः समुपनिविषु च' ॥३।३।६३॥
अनुपसर्गाच्च यमो वाप् । संयमः । उपयमः । नियमः । वियमः ।
। पक्षे घञ् । 'नौ गदनदपठस्वनः' ॥३।३।६४॥ एभ्यो नौ
ा निगदः । निनदः । निपठः । निस्वनः । पक्षे घञ् । 'क्वणो
यां च' ॥३।३।६५॥ वीणाविषयाच्च निपूर्वाच्चानुपसर्गाच्च क्वणोब्
कल्याणप्रक्वणा वीणा । निक्वणः । क्वणः । पक्षे घञ् । एषु किम् ।
क्वाणो वर्तते । 'नित्यं पणः परिमाणे' ॥३।३।६६॥ अप् ।
पणः । संव्यवहाराद् द्वित्रादिपरिमिता शाकमुष्टिः । परिमाणे
। पाणः । 'मदोनुपसर्गे' ॥३।३।६७॥ विद्यामदः । उपसर्गे
ादः । 'प्रमदसंमदौ हर्षे' ॥३।३।६८॥ निपात्यौ । 'अक्षेषु
' ॥३।३।७०॥ अक्षसंबन्धे देवने ग्रहेर्ग्लहो नित्यं निपात्यः ।
ु किम् । ग्रहः । यद्वा ग्लहिः प्रकृत्यन्तरम् । ग्लाहः । 'प्रजने
' ॥३।३।७१॥ अप् गर्भग्रहणे । गवामुपसरः । 'ह्वः संप्रसारणं
भ्युपविषु' ॥३।३।७२॥ एषु ह्वयतेरप् संप्रसारणं च । निहवः ।

अभिह्वः । उपह्वः । विह्वः । एषु किम् । प्रह्वायः । '
युद्धे' ॥३।३।७३॥ ह्वः संप्रसारणं च । आहवः । युद्धे किम् । आह्व
'निपानमाहावः' ॥३।३।७४॥ जलाधारः आहावः । अन्यथा आह्व
'भावेनुपसर्गस्य' ॥३।३।७५॥ ह्वोप् संप्रसारणं च । हवः ।
सर्गस्य किम् । आह्वायः । भावोक्तेः कर्मादौ न । 'मूर्तौ
॥३।३।७७॥ हन्तेरप् घनादेशश्च काठिन्ये । दधिघनः । क
किम् । घातः । कथं घनं दधि । उपचारात् । 'अन्तर्घनो
॥३।३।७८॥ निपात्यः । णान्त इति केचित् । देशे किम् । अन्त
'अगारैकदेशे प्रघणः प्रघाणश्च' ॥३।३।७९॥ द्वारबाणप्रकोष्ठके
प्रघाणश्च निपात्यौ । अन्यः प्रघातः । 'उद्घनोत्याधानम्' ॥३।
निपात्यः । निधाय तक्ष्यते यत्र काष्ठैः काष्ठं स उद्घनः ।
उद्घातः । 'अपघनोङ्गम्' ॥३।३।८१॥ निपात्यः । अङ्गं
अपघातः । 'करणेयोविद्रुषु' ॥३।३।८२॥ एषु हनोप् करणे[1]
देशश्च । अयो हन्यतेनेन अयोघनः । विघनः । द्रुघनः । द्रु
केचित् । 'पूर्वपदात्—' इति णत्वम् । 'स्तम्बे क च' ॥३।
हनः करणे कः अप् घनादेशश्च । स्तम्बघ्नः । स्तम्बघनः ।
किम् । स्तम्बघातः । 'परौ घः' ॥३।३।८४॥ हन्तेः करणे
घोन्तादेशः[2] । परिहन्यतेनेनेति परिघः । पलिघोपि । 'उपघ्न
॥३।३।८५॥ निपात्यते । आश्रयेण सामीप्यं लक्ष्यं स्यात् । उ
काश्रये । 'संघोद्घौ गणप्रशंसयोः' ॥३।३।८६॥ निपात्यौ
गणः । उद्घः प्रशस्तः । अन्यत्र संघातः । उद्घातः । 'निघो नि
॥३।३।८७॥ निपात्यः । समन्तान्मितं निमितम् समोन्नतिवि
निघा वृक्षाः । निघातोन्यः ।

१. संह्वायः Dc3, PC.  २. देशश्च PC.

**कर्मव्यतिहारे णच् स्त्रियाम् ॥३।३।४३॥**

क्रियाव्यतिहारे गम्ये धातोर्णच् स्यात् भावादौ स
्रयाम् ॥

**णचः स्त्रियामञ् ॥५।४।१४॥**

स्त्रियां विहितणजन्तात् स्वार्थेञ् स्यात् ॥ तद्धितत्वा-
भ्यामित्यैचि प्राप्ते

**न कर्मव्यतिहारे ॥७।३।६॥**

कर्मव्यातिहारेर्थे प्रत्यये परे नैच् स्यात् ॥ आदिवृद्धिः ।
गाञिति ङीप् । व्यावहासी ।

---

**कर्म** । क्रियाव्यतिहारः परस्परकरणम् । चकारो विशेषणार्थः
स्त्रियामञ्' इति । बाधकविषयेपि क्वचिदिष्यते । व्यावचोरी ।
र्चीति । अत्र चुरादिणिजन्तत्वात् परत्वात् युच् प्राप्नोति ।
्क्षीति । अत्र अकारो बाधकः । क्वचिन्न । व्यतीक्षा ।
ा । 'कृत्यल्युटो बहुलम्' इति बहुलग्रहणादिदं वैचित्र्यम् ।

**णचः** । विहितणजन्तादिति । विहितश्चासौ णच् च विहितणच् ।
यस्य विहितणजन्तः । तस्मात् । कर्मव्यतिहारे णच् स्त्रियाम्
विहितणजन्तात् स्वार्थेञ् स्त्रियां स्यादित्यर्थः । स्त्रियामेव हि
विहितः । किं पुनः स्त्रियामित्यनेन । एवं तर्ह्येतत् ज्ञाप्यते
काः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते इति । तेन देव एव
त्रय एव लोकास्त्रैलोक्यमित्येवमादि सिध्यति । अञ् च सगति-
पूर्वात् स्यात् ।

**न कर्म** । आदिवृद्धिरिति । 'तद्धितेष्वचामादेः' इति ।

---

विहिताण्णञ° P., C. २. ञिति णिति तद्धिते परे नैच् स्यात्
३. ङीष् D₄. ४. Before it—व्यावक्रोशी C.

**अभिविधौ भाव इनुण् ॥३।३।४४॥**

अभिव्याप्तौ गम्यायां भावे इनुण् स्यात् ॥

**अणिनुणः ॥५।४।१५॥**

इनुणन्तात् स्वार्थेण् स्यात् ॥ आदिवृद्धिः । इनण्यनपत्ये । सांराविणं वर्तते ।

**उपसर्गात् खल्घञोः ॥७।१।६७॥**

उपसर्गाल्लभेर्नुम् स्यात् खलि घञि च ॥ प्रलम्भः ।

**न सुदुर्भ्यां केवलाभ्याम् ॥७।१।६८॥**

सुदुर्भ्यां परस्य लभेर्नुम् न स्यात् ॥ सुलाभः । दुर्लभः ।[1] केवलाभ्यां किम् । सुप्रलम्भः । अतिदुर्लम्भः ।

**स्फुरतिस्फुलत्योर्घञि ॥६।१।४७॥**

अनयोरेच आत्वं स्याद् घञि ॥ स्फारः । स्फालः ।

---

**अभि** । क्रियागुणाभ्यां कार्त्स्न्येन संबन्धोभिव्याप्तिः । भाव इति स्थिते पुनर्भावग्रहणं वासरूपनिरासार्थम् । तेन घञा क्तेन च समावेशो न । ल्युटा त्वस्ति । बहुलग्रहणात् । 'इनण्यनपत्ये' इति प्रकृतिभावात् 'नस्तद्धिते' इति टिलोपो न ।

उप । 'लभेश्च' इत्येव सिद्धे वचनं नियमार्थम् । उपसर्गादेव लभेर्नुम् खल्घञोरिति ।

स्फुर । स्फुर स्फुल चलने ।

---

१. Before it—केवलाभ्याम् N.

**निवासचितिशरीरोपसमाधानेष्वादेश्च कः**
॥३।३।४१॥

ष्वर्थेषु चिनोतेर्घञ् स्यान्नाच् आदेश्च कः ॥ निवासो
। चितौ । आकायोऽग्निः । कायः शरीरम् । राशी-
गोमयनिकायः ॥

**घञि च भावकरणयोः** ॥६।४।२७॥

ावेर्थे करणार्थे च घञि रञ्जेर्नस्य लोपः स्यात् ॥
अनयोः किम् । रजत्यस्मिन्निति रङ्गः [4] ॥

**स्यदो जीवे** ॥६।४।२८॥

नेपातो वेगे । स्यदः । अन्यत्र स्यन्दः ।

**अवोदैधौद्मप्रश्रथहिमश्रथाः** ॥६।४।२९॥

एते निपात्यन्ते ॥ अवोदः अवक्लेदनम् । एधः इन्धनम् ।

---

ेवास । निवासादीनर्थान् व्याकुर्वन्नुदाहरति— **निवासो** इत्यादि ।

ञि च । रञ्ज रागे । राग इत्यादि । रञ्जनं रागः
न वा । घञ् । 'चजोः—' इति कुः ।

यदः । स्यन्दतेर्नलोपो वृद्ध्यभावो निपात्यते । अनिग्लक्षणाया
न धातुलोप आर्धधातुके ' इति निषेधो नास्ति यतः ।

ावोदै । अवोद इति । उन्देरवपूर्वस्य घञि नलोपो
े । अवक्लेदनमिति । किंचिदार्द्रत्वमित्यर्थः । अत्र सर्वत्र

---

2 drops स्यान्नाच्. २. भावार्थे N. ३. इति dropped P, N.
r it—पाकम् $B_2$, $D_4$. ५. निपातोयं जवे $D_1$; निपातोयं वेगे P,

ग्नः उन्दनम् । प्रश्रथः । हिमश्रथः ।

**ड्वितः क्त्रिः ॥३।३।८८॥**

डु इत् यस्य ततो धातोर्भावादौ क्त्रिः स्यात् ॥

क्त्रेर्मम्नित्यम् ॥४।४।२०॥

क्त्रिप्रत्ययान्तात् नित्यं मप् स्यान्निर्वृत्तेर्थे ॥ करणेन निर्वृत्तं कृत्रिमम् । पक्त्रिमम् ।

**ट्वितोऽथुच् ॥३।३।८९॥**

टु इत् यस्य ततो धातोर् अथुच् स्याद् भावादौ ॥ वेपथुः*। श्वयथुः ।

---

न्धि नलोपो निपात्यते । एध इति । इन्धेर्गुणश्च । अन्यथा धातुलोप इति निषेधः स्यात् । ओद्म इति । उन्दतेर्गुणश्च । श्रथः । हिमश्रथः । श्रन्थेर्वृद्ध्यभावश्च ।

ड्वितः । स्वभावतो भाव एव क्त्रिः । कौ गुणनिषेधार्थः ।

**क्त्रेर्मम्** । त्रिशब्देनात्र संख्या न गृह्यते अनभिधानात् । किंतु 'ड्वितः क्त्रिः' इति क्त्रिप्रत्ययो गृह्यत इत्याह— **क्त्रिप्रत्ययान्तादिति** । अयं च तद्धितः । भावप्रत्ययान्तान्निर्वृत्तेर्थे इमनिच् वाच्यः । पाकिमम् । रागिमम् । **कृत्रिममिति** । डुकृञ् करणे । **पक्त्रिममिति** । डुपचष् पाके ।

ट्वितः । भावादावित्ययमनुवृत्तिसिद्ध्यर्थमुक्तम् । अथुच् भाव एव स्वभावतो भवति । घञजपामपवादश्च । वासरूपन्यायेनापि घञ् न । अनभिधानात् । वेपथुः । टुवेपृ कम्पने । श्वयथुः । टुओश्वि गतिवृद्ध्योः । चकारोन्तोदात्तार्थः ।

## सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः

॥७।१।३९॥

सुपामेते आदेशाः स्युः । ऋजवः सन्तु पन्थाः । पन्थान प्राप्ते जसः सुः । आर्द्रे चर्मन् । चर्मणीति प्राप्ते लुक् । ङिसम्बुद्ध्योरिति न्लोपो न । मती । मत्या इति प्राप्ते सवर्णः । सखाया । सखायौ इति प्राप्ते औकारस्य आ । न ब्राह्मणम् । तमिति प्राप्ते अम आत् । अस्मे इन्द्राबृहस्पती । युष्मे वाजबन्धवः । वयं यूयमिति प्राप्ते जसः शे । यूयवयादेशाश्च छान्दसत्वात् । उरुया । उरुणेति प्राप्ते या । नाभा पृथिव्याः । नाभाविति प्राप्ते डा । अनुष्ठ्या यजामसि । अनुष्टुभा इति प्राप्ते ड्या । साधुया । साध्विति प्राप्ते याच् । वसन्ता यजेत । वसन्ते इति प्राप्ते आल् । सुपां सुपो भवन्ति । धुरि दक्षिणायाः । दक्षिणायामिति प्राप्ते । तिङां तिङो भवन्ति । ये यूपाय तक्षति । तक्षन्तीति प्राप्ते । इयाच् डियाच् वक्तव्यः । ऊर्विया । दार्विया । ऊरुणा दारुणेति प्राप्ते इयाच् ।

---

सुपाम् । चर्मन् इति सप्तम्येकवचनस्य लुक् । मतीति तृतीयैकवचनस्य पूर्वसवर्ण ईकारः । सवर्णदीर्घः । सखाया इति । 'सख्युरसम्बुद्धौ' इति णित्वं वृद्धिः । अस्मे युष्मे । जसः शे । शकारः सर्वादेशार्थः । ड्येति । डकारष्टिलोपार्थः । साध्विति प्राप्ते इति । लुकि प्राप्ते इति शेषः । धुरि दक्षिणाया इति । सप्तम्याः स्थाने षष्ठी । तक्षन्तीति । लोटः स्थाने लट्च । इयाडिति । वक्तव्यम् ।

---

१. सुपामादेशा एते स्युः $D_1$. २. $D_2$ drops लुक; ङेर्लुक् P. ३. न तमिति ४. $D_1$ drops it. ५. After it—इति वक्तव्यम् $D_1$. ६. तिङः $D_1$. ७. उर्विया $B_2$. ८. दार्विया । उरुणा $B_1$, ९. Before it—दा in $D_2$.

ंया। सुक्षेत्रिणेति प्राप्ते डियाच्। सरसी शयानम्। सरासि प्राप्ते ईकारः। आड्याचयारश्च। प्रेबाहवा। प्रबाहुनेति औङ्। स्वप्नया। स्वप्नेनेति प्राप्ते। नावया। नावा प्राप्ते।

**प्रसमुपोदः पादपूरणे ॥८।१।६॥**

एषां द्वे स्तः पादपूरणे ॥ प्रप्रायमाग्निः। संसमिद्युवसे। मे परामृश। किं नोदुदु हर्षसे।

**अमो मश् ॥७।१।४०॥**

मिपादेशस्यामो मश् स्यात् ॥ वधीं वृत्रम्। अवमेति प्राप्ते।

**ध्वमो ध्वात् ॥७।१।४२॥**

ध्वंस्थाने ध्वात् स्यात् ॥ धारयध्वात्। धारयध्वं प्राप्ते।

---

ति स्युरित्यर्थः। आड्याच्। आङादयश्चेति वक्तव्यम्। ते स्युः। चकारः स्वरार्थः।

प्रस। पादपूरणे किम्। प्रदेवं देव्या धिया। छन्दस्येतद्विधानम्। यामनर्थकस्य प्रयोगाभावात्।

अमः। वधीमिति। हन्तेर्लुङ्। च्लेः सिच्। मिपोम्। 'लुङि च' वधादेशः। 'बहुलं छन्दस्यमाङ्योगेपि' इत्यडभावः।

---

आङ् अयान् आ° $B_2$; अवाङ् for आङ $D_4$. २. प्रवाहा P and $D_2$, $D_4$ drop it. ४. सामिद्युवसे $B_2$; समध्युवसे $D_4$. हर्षसे $D_4$ ६. After it—पादपूरणे किम्। प्र देव देव्या धिया $B_2$. ropped $B_2$. ८. वधी वृत्रम्। $D_1$. ९. वारयध्वात्। वारयध्वामिति $D_2$.

**यजध्यैनमिति च ॥७।१।४३॥**

एनमि ध्व[1]मो[2]न्तलोपः [3]वेकारस्य च [4]यकारः ॥ [5]यजध्यै प्रियमेधाः ।

**तस्य तात् ॥७।१।४४॥**

लोण्मध्यमबहुवचनस्य तस्य तात्[6] ॥ गमयतात् । गमयतो प्राप्ते ।

**तप्तनप्तनथनाश्च ॥७।१।४५ ॥**

एते च तस्यादेशाः स्युः ॥[7] तप्—शृणोत ग्रावाणः तनप्—दधातन । तन—जुहुतन । थन—[8]ये दिवि जुहुथन । शृणु धत्त जुहुत[9] इति प्राप्ते ।

**इदन्तो मसि ॥७।१।४६॥**

मस्शब्दे अन्त इकारः स्यात् ॥ पुरस्ताद्दीपयामासि दीपयामः इति प्राप्ते ।

---

**यज** । यजध्वमेनमिति प्राप्ते ।

**तस्य** । **लोडिति** । अथ प्रथमपुरुषैकवचनग्रहः कस्मान्न छन्दसि दृष्टानुविधानात् ।

**तप्त** । चकारस्तस्यानुकर्षणार्थः ।

**इद** । **मसिति** । उत्तमपुरुषबहुवचनस्य इकार आगः स्यात् । आगमत्वमन्तग्रहणात् ।

---

१. नो $D_1$. २. After लोपः—वस्य यत्वं च स्यात् $D_2$. ३. वक ...कारः dropped $D_4$. ४. यः $B_2$. ५. यजध्वैनं $B_2$. ६. After it स्यात् $D_2$, $B_2$ ; तात् स्यात् for तस्य तात् $D_4$. ७. The Ms. P. ends her at एते च तस्यादेशाः स्युः. ८. यदिष्ठन $D_2$, $D_4$. ९. After it इच्छत I $D_4$; यादिच्छत $B_2$.

स्नात्व्यादयश्च ॥७।१।४९॥

एते निपात्याः ॥ स्नात्वी मलादिव । स्नात्वेति प्राप्ते ।
ती ।[1]

छन्दसि शायजपि ॥ ३।१।८४॥

हलः श्नः शायजपि स्यात् हौ छन्दसि ॥ हृग्रहोर्भश्छन्दसि ॥*
योर्हस्य भः स्यात् छन्दसि ॥ गृभाय । गृहाणेति प्राप्ते ।
ार । जहारेत्यर्थः ।

व्यत्ययो बहुलम् ॥ ३।१।८५॥

शबादिविकरणानां छन्दसि बहुलं व्यत्ययः स्यात् ॥

भेदति । भिनत्तीति प्राप्ते । मरते । म्रियत इत्यर्थः ।
लोक्तिः सर्वविधिव्यभिचारार्था ।

सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च ।

व्यत्ययमिच्छति शास्त्रकृदेषां सोपि च सिध्यति बाहुलकेन॥
ग्रहः परस्मैपदात्मनेपदे । नरः प्रथमपुरुषादिः ।

---

स्नात्व्या । आदिशब्दः प्रकारार्थः ।

छन्दसि ।

व्यत्य । भेदतीति । श्नमि प्राप्ते शप् । मरत इति । शे
शप् । बहुलोक्तिरिति । अत्र वार्तिकमुदाहरति—सुप्तिङिति ।
स्त्रकृत् पाणिनिः । एषां सुबादीनां व्यत्ययमिच्छति । सोपि च बाहु-
ेन सिध्यति । चशब्दो हेतौ । यस्मात् प्रकृतानामप्रकृतानां च

---

. After it—पीत्वेति प्राप्ते $B_2$. $D_4$. २. $D_2$ drops it. ३. बहुलं
न्दसि $D_1$.

लिङ्याशिष्यङ् ॥३।१।८६॥

आशीर्लिङि धातोरङ् स्याच्छन्दसि ॥ यासुटि कृते अ येयः । स्थेयम् । गेयम् । गमेम । वच उम् । वोचेम । विदेयम् शकेयम् । रुहेयम् । दृशेयम् ।

---

व्यत्ययः सिध्यति तस्माद्बाहुलकं बहुलग्रहणमित्यर्थः । व्यत्ययः । युक्तामासीद् धुरि दक्षिणायाः । दक्षिणायामिति प्राप्ते तिङां च । चषालं ते अश्वयूपाय तक्षति । तक्षन्तीति प्राप्ते । आत्म पदपरस्मैपदयोः । युध्यति । युध्यते इति प्राप्ते । लिङ्गस्य । मधोस्तृप्ता मधुन इति प्राप्ते । पुरुषाणाम् । विपूयाः । विपूयादिति प्राप्ते कालस्य । श्वोग्नीनाधास्यमानेन । लुङ्विषये लट् । हलाम् । शुधि सुभवीरम् । भकारस्य धकारः । अचाम् । उपगायन्तु मा मात गर्भिणयः । गर्भिण्य इति प्राप्ते दीर्घे ह्रस्वः । स्वराणाम् । अश्वावती अन्तोदात्तत्वे आद्युदात्तत्वम् । कर्तृग्रहणं कारकोपलक्षणम् मादयाद्भिः । संप्रदानस्य करणत्वम् । यङामिति 'सार्वधातुके यक् इत्यारभ्य 'लिङ्याशिष्यङ्' इत्यङ्पर्यन्तानां प्रत्याहारः । उदाहर तु भेदतीत्याद्युक्तं मूल एव ।

लिङि । स्थेयमिति । आशिषि लिङ् । मिप् । तस्याम् यासुट् । सलोपः । गुणः । गेयमित्यादि । गै शब्दे । गम्लृ गतौ वच परिभाषणे । विद ज्ञाने । शक्लृ शक्तौ । रुह जन्मनि प्रादुर्भावे दृशेयमिति । अत्राग्वाच्यः । अन्यथा 'ऋदृशोङि—' इ गुणः स्यात् ।

---

१. °रङ्प्रत्ययः $D_2$, $B_2$.

**छन्दस्युभयथा ॥ ३।४।११७॥**

धात्वधिकारोक्तः सर्वोपि प्रत्ययः सार्वधातुकार्धधातुकसंज्ञः छन्दासि ॥ वर्धन्तु । वर्धयन्त्वित्यर्थः । आर्धधातुकत्वाण्णि- ः । विशृण्विरे । सुन्विरे ।

**लिङर्थे लेट् ॥३।४।७॥**

लिङर्थे विध्यादौ धातोर्लेट्प्रत्ययः स्याच्छन्दसि ॥

**सिब् बहुलं लेटि ॥३।१।३४॥**

धातोः सिप्प्रत्ययो बहुलं स्याल्लेटि ॥

**इतश्च लोपः परस्मैपदेषु ॥३।४।९७॥**

लेटस्तिङामितो लोपः स्याद्वा परस्मैपदेषु ॥

**लेटोडाटौ ॥३।४।९४॥**

लेटः अट् आद् इत्येतावागमौ स्तः तौ च पितौ ॥ जोषिषत् ।

---

छन्दसि । णिलोप इति । 'णेरनिटि' इति । विशृण्विरे इति । ातुकत्वात् 'श्रुवः शृ च' इति श्रुवः शृभावश्च । सुन्विरे । दिभ्यः श्नुः ।'

लिङ् । 'विधिनिमन्त्रण—' सूत्रोक्तो 'हेतुहेतुमतोर्लिङ्' ामादिश्च लिङर्थः । जोषिषदिति । जुषी प्रीतिसेवनयोः । लेट् । । सिप्प्रत्ययः । सिपि इकार उच्चारणार्थः । तिप इकार- । अट् । 'आर्धधातुकस्य' इति सिप इट् । लघूपधगुणः ।

---

वर्धंतु । वर्धयन्त्वित्यर्थें । $D_2$. २. °त्यर्थे $B_2$. ३. सिच्प्रत्ययो $D_1$. स्यात् $D_2$. ५. $D_1$ drops इति. ६. After it $D_2$, $B_2$, $D_4$ have— ं (सिब्बहुलं $B_2$, $D_4$) छन्दसि णिद्वक्तव्यः । इति णित्त्वाद्वृद्धिः ।

तारिषत्[1] । मन्दिषत्[1] । पक्षे[2] पताति विद्युत्[3] । उदाधि[4] व्यावया

**स उत्तमस्य ॥३।४।९८॥**

लेट उत्तमस्य[5] सकारस्य वा लोपः स्यात्[6] ॥ करव पक्षे करवावः । टेरेत्वम् ।

**आत ऐ ॥३।४।९५॥**

लेट आकारस्य ऐ[7] स्यात् ॥ मन्त्रयैते । मन्त्रयै विधिसामर्थ्यादाट ऐत्वं[8] न । मन्त्रयाते ।

---

'आदेशप्रत्यययोः' इति षत्वम् । तारिषदिति । तॄ प्लवनपूरणयो 'सार्वधातुकार्धधातुकयोः' इति गुणः । 'व्यत्ययो बहुलम्' वर्णव्यत्ययेन धात्वकारस्याकारः । शेषं पूर्ववत् । मन्दिषदिति । म स्तुतिमोदस्वप्नकान्तिगतिषु । 'इदितो नुम् ।' पक्षे इति । इकारलोपस्य चाभावे । पतातीति पाठे पत्लृ गतौ । पदातीति पद ग व्यत्ययेन शप् तिप् च । अटा सह सवर्णदीर्घः । व्यावयाती व्युङ् गतौ । हेतुमण्णिच् । सिपः पित्वम् बोभूयिषातामित्यत्राद्यु प्राप्तेनुदात्तार्थम् ।

**स उत्तमस्य** । करवावेति । आट् ।

**आत ऐ** । मन्त्रयैते इति । मन्त्रि गुप्तभाषणे । चुरादिणिच् शपि गुणायादेशौ । विधिसामर्थ्यादिति । आतश्चेदैत्वं स्यात् तर्हि रनर्थकः स्यात् । ऐडागममेव विदध्यात् । एवं प्रक्रिया स्यादिति भावः । प्रासङ्गिकसूत्रं व्याख्यायते । 'घोर्लोपो वा' ॥७।३।७०॥ घुसंज्ञानां लेटि परतो वा लोपः । सोमो गन्धर्वाय । दधद्रत्नानि दाशुषे । यदग्निरग्नये ददात् ।

---

१. नंदिषत् $D_2$ मंदिषत् P. २. पक्षे dropped P. ३. पक्षे प विद्युताति विद्युत् $B_2$; पक्षे पताति विद्युत् । उदार्धं व्यावयाति । ४. उदधिं $D_2$, $B_2$. ५. उत्तमसकारस्य $B_2$, $D_4$. ६. Dropped ७. ऐः $D_4$, $B_2$ ८. एत्वं $B_2$.

वैतोन्यत्र ॥३।४।९६॥

आत ऐ[1] विषयं विना लेट एकारस्य ऐ[2] स्याद्वा ॥ पशू-
। गृह्यान्तै । पक्षे दधसे । एतोन्यत्र किम् । मन्त्रयैते ।

उपसंवादाशङ्कयोश्च ॥३।४।८॥

उपसंवादे[4] शङ्कायां च लेट् स्यात्[5] ॥ अहमेव पशूनामीशै ।
ायन्तो नरकं पताम[6] ।

कृमृदृरुहिभ्यश्छन्दसि ॥३।१।५९॥

एभ्यश्च्लेरङ् वाँ स्याच्छन्दसि ॥ अकरत् । अमरत् ।
। अरुहत् ।

---

ितः । पशूनामीशै इति । ईश ऐश्वर्ये । उत्तमपुरुषैकवचन-
टेरेत्वम् । गृह्यान्तै इति । ग्रह उपादाने । कर्मणि 'सार्व-
यक् ।' 'ग्रहिज्या—' इति संप्रसारणम् । अट् ।

प । पणबन्धो नाम यदि मे भवानिदं कुर्यात् अहमपि
ं दास्यामीति कारणतः कार्यानुसरणम् । अहमेवेत्यादि ।
त्वमेव पशुं जहीति देवैरुक्तो रुद्र आह—अहमेव पशूनामीशै ।
यन्त इत्याशङ्कायाम् ।

ामृ । डुकृञ् करणे । मृङ् प्राणत्यागे । दृ विदारणे । रुह
ानि प्रादुर्भावे ।

---

B₂. २. ऐः B₂, D₄. ३. °मीशैर्गृह्यान्ते D₁, D₄ °मीशैर्जृह्यातै B₂.
धे D₂, D₄, B₂. ५. After it छन्दसि D₂, D₄, B₂. ६. पताम: D₂
· D₁.

**श्रुशृणुपॄकृवृभ्यश्छन्दसि ॥६।४।१०२॥**

एभ्यो हेर्धिः स्याच्छन्दसि ॥ श्रुधी हवम् । शृणुधी गिरः ।
अन्येषामपि दृश्यत इति दीर्घः । पृधि ।[1] पूर्धि । उरुणस्कृधि ।
अपावृधि ।

**वा छन्दसि ॥३।४।८८॥**

हिरपिद्वा स्यात् छन्दसि ॥

**अङितश्च ॥६।४।१०३॥**

पित्त्वेनाङितो हेर्धिः स्यात् ॥ रारन्धि ।[2] प्रयन्धि ।
युयोधि ।[3] पित्वाभावे ।[4] प्रीणीहि ।

**आदृगमहनजनः किकिनौ लिट् च ॥३।२।१७१**

आदन्तादृवर्णान्ताद् गमादेश्च किकिनौ स्तः छन्दसि
तौ च लिड्वत् ॥ द्वित्वादि ।[5] पपिः । कित्त्वम् ऋच्छत्यृता

---

श्रुशृ । श्रु श्रुतौ । पॄ पूर्तौ । डुकृञ् करणे । वृङ् वृ
वा । दीर्घो धील्यत्र । शृणुधीत्यत्र धिभावविधानसामर्थ्यात् 'उतश्च प्रत्यया
दसंयोगपूर्वात्' इति हेर्लुक् न । पृधीत्यादौ 'व्यत्ययो बहुलम्'
इति शप् । तस्य 'बहुलं छन्दसि' इति लुक् वा ।

आङि । रारन्धीति । रमेः 'व्यत्ययो बहुलम्' इति परस्मै
पदम् । शपः श्लुः । द्वित्वमभ्यासदीर्घः छान्दसः । मलोपाभावो
ङित्त्वादेव । प्रयन्धीति । यमेः शपो लुक् । युयोधीति । योधते
शपः श्लुः । प्रीणीहि । प्रीञ् तर्पणे ।

आदृ । द्वित्वादीति द्वित्वमभ्यासकार्यम् । 'लिटि धातोः—

---

१. पृधि D1; पूर्धि P. २. प्ररन्धि B2. ३. After it—युयुहि B2, D;
युयुहि D2. ४. पृणीहि. for प्रीणीहि B2, D4. ५. द्वित्वादिः D1.

धार्थम् । बहुलं छन्दसीत्युत्वम् । जगुरिः । जग्मिः ।
जघ्निः ।

**तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यै-**
**ध्यैशध्यैन्तवैतवेङ्तवेनः ॥३।४।९॥**

तोरेते प्रत्ययाः स्युः छन्दसि तुमुनोर्थे ॥ से-वक्षे रायः ।
ामेषे । असे-असेन्-जीवसे । क्से-प्रेषे । कसेन्-
। अध्यै-अध्यैन्-आचरध्यै । कध्यै-कध्यैन्-आहु-
ध्यै-पिबध्यै । शध्यैन्-मादयध्यै । तवै-पातवै ।
वे । तवेन्-कर्तवे । कर्तुमित्यर्थः ।

---

म् । अभ्यासह्रस्वः । **जगुरिः** । गॄ निगरणे । **जग्मिः** ।
गम्लृ गतौ । हन हिंसागत्योः । 'गमहन—' इत्यु-
। 'हो हन्तेः—' इति हन्तेः कुत्वं च ।

र्थे । तुमाद्यर्थो भावः । कुतः । कर्ता तावन्न । यदि कर्ता
त् तुमर्थवचनमनर्थकं स्यात् । कृत्वादेव कर्तरि स्युः । कर्मा-
ि नादिश्यते । तस्मादनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति
त् । स्वार्थश्च धातूनां भावः । वक्षे इति । वचेः से ।
त्वम् । एषे इति । इणः सेन् । गुणः षत्वम् । स्वरे भेदः ।
जीव प्राणधारणे । असेअसेनोरिदमेवोदाहरणम् । स्वरे
इति । इणः क्से । **श्रियसे** । श्रिञ् सेवायाम् । कसेन् ।
। चर गत्यर्थः । अध्यैअध्यैनोरुदाहरणम् । स्वरे भेदः ।
जुहोतिराङ्पूर्वः । कध्यैकध्यैनोश्च । उवङ् । **पिबध्यै** ।
शध्यै । पिबादेशः शित्त्वात् । **मादयध्यै** इति । मदी
। शध्यैन् । गुणायादेशौ । **पातवै** । पिबतेः । **सूतवे** ।
र्भविमोचने । **कर्तवे** । डुकृञः ।

---

थे रथनां D4. २. श्रियसे D4. ३. आचरध्यै D4 (in place of

प्र. कौ. ]

**प्रयै रोहिष्यै अव्यथिष्यै ॥३।४।१०॥**

एते निपात्याः । प्रयातुम् । रोढुम् । अव्यथितुमित्यर्थः

**दृशे विख्ये च ॥३।४।११॥**

एतौ[1] निपात्यौ । द्रष्टुं विख्यातुमित्यर्थः[2] ।

**ईश्वरे तोसुन्कसुनौ ॥३।४।१३॥**

ईश्वरे[3] उपपदे धातोरेतौ स्तस्तुमर्थे । ईश्वरो विचरितोः ईश्वरो विलिखः ।

**कृत्यार्थे तवैकेन्केन्यत्वनः ॥३।४।१४॥**

धातोरेते स्युः कृत्यानामर्थे भावकर्मणोः ॥ तवै । अन्वेतवै । केन् । अवगाहे[4] । केन्यः । दिदृक्षेण्यः । त्वन् कर्त्वम् ।

---

प्रयै । प्रपूर्वस्य यातेः कै निपात्यते । रुहेरिष्यै । नञ्पूर्वस्य व्यथेरिष्यै ।

दृशे । दृशे विश्वाय सूर्यम् । विख्ये त्वा हरामि ।

ईश्वरे । विचरितोः । चर गतौ । विलिखः । लिख लेखने

कृत्यार्थे । 'तयोरेव कृत्यक्तखलर्थाः' इति कृत्यानां भावकर्मणोरेव विधानात् । अन्वेतवै । अनुपूर्वादिणः । अवगाहे । गाहू अवलोडने । दिदृक्षेण्यः । दृशेः सन्नन्तात् । कर्त्वम् । कृञः

---

१. $D_2$, $D_4$ drop it. २. द्रष्टुमित्यर्थः $D_2$. ३. ईश्वरेर्थे $D_2$. ४. अवगाहे $B_2$.

**सृपितृदोः कसुन् ॥३।४।१७॥**

आभ्यां कसुन् स्यात् भावलक्षणे तुमर्थे ॥ पुरा क्रूरस्य
ो विसृपिशन् । पुरा जैतृभ्य आतृदः । कृञः सन्नन्तात्
। अतो लोपः । तस्य स्वरं प्रति स्थानिवत्त्वाभावात्

**लिति ॥६।१।१९३॥**

लिति परे पूर्वमुदात्तं स्यात् ॥ इति ईकारस्योदात्तता ।
र्षकः । अदेः क्तिनि कृते बहुलं छन्दसीति घस्लृ । घसि-
लि चेति उपधालोपः । झलो झलीति सलोपः । धत्वम् ।
लोपस्य स्थानिवत्त्वाभावात् घस्य जश्त्वम् । समाना ग्धिः ।
: । इत्यादिप्रयोगमनुसृत्यान्वाख्यातव्यम् ॥

इति वैदिकी प्रक्रिया समाप्ता ॥

---

**सृपि** । सृप्लृ गतौ । उतृदिर् हिंसानादरयोः । **कृञ** इति ।
ो अस्मात् । ण्वुल्तृचाविति । अकः । तस्येति । 'न पदान्त—'
सूत्रेण स्वरविधिं प्रति अल्लोपस्य स्थानिवत्त्वाभावात् 'लिति'
। चिकीर्षक इत्यत्र ईकारस्योदात्तत्वम् । स्वरविधिं प्रति
ास्याविद्यमानत्वात् रषयोरव्यवधायकत्वम् । अदेरिति । 'स्त्रियां
' इति क्तिन् । उपधालोपस्य स्थानिवत्त्वाभावात् । 'न
—' इति सूत्रेण जश्विधिं प्रति स्थानिवत्त्वाभावादित्यर्थः ।
ि प्रयोगमनुसृत्यान्वाख्यातव्यमिति । आदिशब्देनान्येप्यष्टा-
ा साधिता वैदिकाः प्रयोगा उच्यन्ते । स्वरप्रक्रिया

---

ाप्सिन् $D_4$. २. जर्तभ्य $D_4$. ३. उपधालोपस्यास्थानिवत्त्वात् $D_2$,
. समानाग्निः । साग्निः $D_1$. ५. व्याख्यातव्यम् $D_1$.

स्वरप्रक्रियासूत्रव्याख्या च 'लिति' इत्यस्य सूत्रस्य व्याख्यानेनो
पलक्षिता । तत्र तावदष्टाध्यायीस्थितान्येव शिष्टानि छान्दसा
सूत्राणि व्याख्यायन्ते । पश्चात् स्वरसूत्राणि व्याख्यास्यामः
'शे'॥ (१।१।१३) ॥ सुबादेशः शेशब्दः प्रगृह्यसंज्ञः स्यात् । अस्मे
इन्द्राबृहस्पती । इति वैदिकमुदाहरणम् । युष्मे इति अस्मे इति त्वे
इति मे इति । इत्यादिषु पदकारैः क्रियमाणेषु प्रगृह्यसंज्ञा भवति
'ईदूतौ च सप्तम्यर्थे' ॥१।१।१९॥ ईदूदन्तं सप्तम्यर्थे वर्तमानं प्रगृह्य
संज्ञं भवति । मामकी इति । तनू इति । मामक्यां तन्वामिति प्राप्ते
'सुपां सुलुक्—' इति लुक् । सप्तमीति किम् । मती इति
मत्या इति प्राप्ते । अर्थे किम् । वाप्यामश्वो वाप्यश्वः । अर्थग्रह०
ज्ञापकं प्रत्ययलक्षणप्रतिषेधस्य प्रगृह्यसंज्ञाधिकारे । तच्च भाष्यादवगन्तव्य
सम्यक् । 'छन्दसि पुनर्वस्वोरेकवचनम्' ॥१।२।६१॥ पुनर्वस्वो
र्द्वित्वे एकवचनं वा स्यात् । पुनर्वसुर्नक्षत्रं पुनर्वसू वा । 'विशाख
योश्च' ॥१।२।६२॥ विशाखा नक्षत्रं विशाखे वा । 'षष्ठीयुक्त
श्छन्दसि वा' ॥१।४।९॥ पतिर्घिसंज्ञो वा । कुलुञ्चानां पतये पत्ये वा ।
पुनश्चनसौ गतिसंज्ञौ स्याताम् । पुनरुत्स्यूतम् । 'गतिर्गतौ' इति
निघातः स्यात् । चनोहितः । 'गतिरनन्तरः' इति स्वरः । 'छन्दसि
परेऽपि' ॥१।४।८१॥ गत्युपसर्गसंज्ञाः । याति नि । 'व्यवहिताश्च'
॥१।४।८२॥ आ मन्द्रैरिन्द्र हरिभिर्याहि । 'तृतीया च होश्छन्दसि'
॥२।३।३॥ कर्मणि वा तृतीयापि । यवाग्वा जुहोति । यवागूं
जुहोति । 'द्वितीया ब्राह्मणे' ॥२।३।६०॥ ब्राह्मणविषये प्रयोगे
दिवो द्यूतार्थस्य कर्मणि द्वितीया स्यात् । ग्रामस्य तदहः सभायां
दीव्येयुः । 'प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने' ॥२।३।६१॥ प्रेष्य-
ब्रुवोर्हविषः कर्मणः[1] षष्ठी । अग्नये हविषः प्रेष्य अनुब्रूहि वा ।
देवतासंप्रदाने किम् । बटवे पुरोडाशान् प्रेष्य । अस्य
प्रयोगस्य यज्ञविषयत्वात् वैदिकेषु लिखितमेतत् सूत्रम् ।

१. कर्माणि PC.

र्थ्यर्थे बहुलं छन्दसि' ॥२।३।६२॥ षष्ठी। पुरुषमृगश्चन्द्रमसे
ासो वा। षष्ठ्यर्थे चतुर्थी। याभ्यङ्क्ते तस्यै दुश्चर्मा।
श्च करणे' ॥२।३।६३॥ षष्ठी वा। घृतस्य यजते। घृतेन
। 'हेमन्तशिशिरावहोरात्रे च च्छन्दसि' ॥२।४।२८॥
ङ्गी। हेमन्तशिशिरौ। अहोरात्रे। 'बहुलं छन्दसि'।
७६॥ शपः श्लुः। श्लोरभावोऽत्र। दाति प्रियाणि। विवष्टि।
' घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः' ॥२।४।८०॥ एभ्यो
। लिलैः सामान्यग्रहणम्। घस। अक्षन्। ह्वर। माह्वः।
प्रणट्। वृ। आवः। दह। आधक्। आत्। आप्राः।
परावर्क्। कृ। अक्रन्। गमि। अग्मन्। जनि।
। 'अदो जग्धिः—' इत्यादय आदेशाः संज्ञाछन्दसोर्बहुलं
ाः। अन्नाद्यर्थम्। अन्नम्। वधकः। गात्रम्। विवक्षणः।
(। बहुलं छन्दसि। अदेर्घस्लृ। घस्ताम्। अभ्युत्सादयां
चिकयां रमयामकः पावयांक्रियाद्विदामक्रन्निति
॥३।१।४२॥ एते निपात्याः। अक इति चतुर्णां
नुप्रयोगः। अभ्युत्सादयामकः। अभ्युदसीषददिति लोके।
ाकः। प्राजीजनदिति लोके। चिकयामकः। अचैषी-
ोके। रमयामकः। अरीरमदिति लोके। पावयांक्रियात्।
ते लोके। विदामक्रन्। अवेदिषुरिति लोके। 'गुपेश्छन्दसि'
॥ च्लेश्चङ् वा। अजूगुपतम्। अगौप्तम्। अगोपिष्टम्। अगोपा-
प्रत्ययापिभ्यां ग्रहेश्छन्दसि' ॥३।१।११८॥ क्यप्। प्रतिगृह्यम्।
। 'छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्या-
खान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्य-
॥ ३।१।१२३॥ एते निपात्याः। कृती ण्यत्। निष्टर्क्यः।
देवहूयः। णीञ् क्यप्। प्रणीयः। उन्नीयः। शिष्लृ
उच्छिष्यः। मृङ् स्तृञ् ध्वृ खनु यत्। मर्यः।
र्यः। खन्यः। खनेर्ण्यदपि। खान्यः। यजेर्यत्। देवयज्या।

च्छेः क्यप् । आपृच्छ्यः । सिवः क्यप् । प्रतिषीव्यः ।
ण्यत् । ब्रह्मवाद्यः । भू भाव्यः । स्तु स्ताव्यः । चिञ्
चाय्यः । पृडे चोत्तरपदे । पिबतेश्छन्दसि बहुलं टक् । या
ह्मणी सुरापी भवति सुरापा वा । गिरौ शेते । छन्दसि डः ।
रौ शेते गिरिशः । छन्दसि क्षदेस्तच्छीलादौ तृच् । क्षत्तृभ्यः ।
त्वादन्तोदात्तः । दंशेश्छन्दसि क्त्नोरुपसंख्यानम् । दङ्क्ष्णवः
वः । 'छन्दसि वनसनरक्षिमथाम्' ॥३।२।२७॥ इन् प्रत्ययः ।
ह्मवनिः । गोसनिः । पापरक्षिः । हविर्मथिः । 'कव्यपुरीष-
ष्येषु ञ्युट्' ॥३।२।६५॥ एषु वहेः ञ्युट् छन्दसि ।
व्यवाहनः । पुरीषवाहनः । पुरीष्यवाहनः । 'हव्येऽनन्तःपादम्' ॥
२।६६॥ हव्ये वहेर्ञ्युट् छन्दसि अनन्तःपादं चेद्वहिः । अग्निश्च
यवाहनः । अनन्तःपादं किम् । हव्यवाडग्निरजरः पिता नः ।
विजुपे छन्दसि' ॥३।२।७३॥ उपपूर्वाद्यजो विच् स्यात् । उपयट् ।
बहुलं छन्दसि' ॥३।२।८८॥ धातोः क्विप् । मातृहा ।
छन्दसि लिट्' ॥३।२।१०५॥ भूते । अहं सूर्यमुभयतो ददर्श ।
णेश्छन्दसि' ॥३।२।१३७॥ ण्यन्तादिष्णुच् । दृषदं धारयिष्णुः ।
क्याच्छन्दसि' ॥३।२।१७०॥ क्यच्क्यङ्क्यषन्तात् उः स्यात् ।
त्रयुः । 'एरजधिकारे जवसवौ छन्दसि वाच्यौ' । ऊर्वोरस्तु
जवः । पञ्चौदनसवः । 'मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः'
३।३।९६॥ मन्त्रविषये क्तिन् स चोदात्तः । वृष्टिः । इष्टिः ।
क्तिः । मतिः । वित्तिः । भूतिः । वीतिः । रातिः । उदात्तार्थं
त्रम् । इषे विध्यर्थम् । इषेति निपातात् मन्त्रादन्यत्राद्युदात्तः ।
छन्दसि गत्यर्थेभ्यः' ॥३।३।१२९॥ खल्विषये युच् । सूपसदनोऽग्निः ।
अन्येभ्योऽपि दृश्यते' ॥३।३।१३०॥ युच् । सुदोहनः । 'छन्दसि
लुङ्लङ्लिटः' ॥३।४।६॥ धातुसंबन्धे कालमात्रे । लुङ् । शकलाङ्गुष्ठ-
ोकरत् । लङ् । होतारमवृणीत । लिट् । अद्या ममार । 'शक्ति

१. हव्य° Dc1.

कमुलौ ॥' ३।४।१२॥ शक्नोतौ उपपदे तुमर्थे णमुल्कमुलौ
। विभाजं नाशक्नुवन् । अपलुपं नाशक्नुवन् । विभक्तुम-
ुमित्यर्थः । 'अवचक्षे च' ॥३।४।१५॥ कृत्यार्थे निपातः ।
लक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन्' ॥३।४।१६॥
क्षणे वर्तमानेभ्य एभ्यस्तोसुन् स्यात् । आ संस्थातोर्वेद्यां
न्त । उदेतोः । अपाकर्तोः । प्रवदितोः । प्रचरितोः ।
तोः । आतमितोः । आजनितोः । उन्निपूर्वादपि ग्रहेश्छ-
। सगुह्यमनिपातयोर्घञ् । उद्ग्राभं च निग्राभं च । 'नित्यं
छन्दसोः' ॥४।१।२९॥ अन्नन्तादुपधालोपिनो बहुव्रीहेर्ङीप्
ाम् । सुराज्ञी । यां पञ्चनाम्नी । दासात् परस्य
न्तादेशः स्याच्छन्दसि । दासपत्नी । 'केवलमामकभाग-
पापरसमानार्यकृतसुमङ्गलभेषजाच्च' ॥४।१।३०॥ केवलादिभ्यो
संज्ञाछन्दसोः । केवली । मामकी । भागधेयी । पापी ।
। समानी । आर्यी । कृती । सुमङ्गली । भेषजी ।
ां तु केवला । संज्ञाछन्दसोः केवलीत्यादि । 'रात्रेश्चाजसौ'
।३१॥ अजस्विषये ङीप् संज्ञाछन्दसोः । रात्री व्यख्यत् ।
ता रात्र्यः । अजसादिष्विति वाच्यम् । रात्रिं सहोषित्वा ।
इत्यप्यस्ति । तत्र 'कृदिकारादक्तिनः' इति ङीप् । अन्तर्वत्-
ोश्छन्दसि वा नुक् । अन्तर्वत्नी देवानुपैत् । अन्तर्वती ।
नी तरुणवत्सा । पतिवती । 'नित्यं छन्दसि' ॥४।१।४६॥
भ्यश्छन्दसि नित्यं ङीष् । बह्वी नापिती । 'भुवश्च'
।४७॥ सम्राड्विभ्वी । प्रभ्वी । उत इत्येव । स्वयंभूः ।
च्छन्दसि लिच्च । आनुक् स्यात् स्त्रियाम् । स च लित् ।
च । रथीरभून्मुद्गलानीति । 'दीर्घजिह्वी च च्छन्दसि'
५९॥ ङीषन्तस्य निपातः । दीर्घजिह्वी । 'कद्रुकमण्डल्वो-

न° Do₁.

श्छन्दसि' ॥४।१।७१॥ ऊङ् । कद्रूः । कमण्डलूः
गुग्गुलुमधुजतुपतयालूनां स इष्यते । गुग्गुलूः । आविःशब्दाच्छन्
त्यक्प्रत्ययो वाच्यः शैषिकः । आविष्ट्यः । तिलान्निष्फलात् पि
श्छन्दसि ङिच्च । निष्फलस्तिलस्तिल्पिञ्जः । 'छन्दसि ठञ्' ॥४।३।
वर्षाशब्दात् ठञ् छन्दसि शैषिकः । ठकोपवादः । स्वरे भेदः । नभ
नभस्यश्च वार्षिकावृतू । बहिषष्टिलोप ईकञ् च वाच्यः । बाहीकि
ञित्त्वादाद्युदात्तः । ण्यतो[1] वाङ्मतिपितृमतां छन्दस्युपसंख्यानम् । वाच्य
मात्यम् । पैतृमत्यम् । 'वसन्ताच्च' ॥४।३।२०॥ ऋत्वणोपवाद
छन्दसि । मधुश्च माधवश्च वासन्तिकावृतू । 'हेमन्ताच्च' ॥४।३।
ठञ् । सहश्च सहस्यश्च हैमन्तिकावृतू । 'द्व्यचश्छन्दसि' ॥४।३।१
मयट् विकारे । पर्णमयी जुहूः । 'नोत्त्वद्वर्ध्रबिल्वात्' ॥४।३।१
उकारवतो वर्ध्रबिल्वाभ्यां छन्दसि मयट् न स्यात् । मौञ्जं शिक्य
वार्ध्री । बैल्वः । 'ढश्छन्दसि' ॥४।४।१०६॥ सभाशब्दाच्छन्दसि
साधुरत्रार्थे ढः । सभेयो युवा । 'भवे च्छन्दसि' ॥४।४।१
सप्तम्यन्ताद् भवे यत् । मेध्याय नमो विद्युत्याय । 'पाथोनदी
ड्यण्' ॥४।४।१११॥ तत्र भवे । पाथसि भवः पाथ्यो वृषा । प
न्तरिक्षम् । नाद्यो गिरो मे । 'वेशन्तहिमवद्भ्यामण्' ॥४।४।१
भवे । वैशन्तीभ्यः स्वाहा । हैमवतीभ्यः स्वाहा । 'स्रोतसो वि
ड्यड्ड्यौ' ॥४।४।११३॥ पक्षे यत् । स्रोत्यः । स्व
त्वान्तोदात्तत्वे । ड्यड्ड्यतोः स्रोतस्यः । 'सगर्भसयूथसनुता
॥४।४।११४॥ सगर्भ्यः । सयूथ्यः । सनुत्यः । समानो ग
समानं यूथम् । समानं नुतम् । इति कर्मधारयः । बहुव्रीहि
सर्वत्र 'समानस्य छन्दसि' इति सः । 'तुग्राद् घन्' ॥४।४।१
तुग्रियः । अन्नाकाशयज्ञवरिष्ठेषु तुग्रः । 'अग्राद्यत्' ॥४।४।१
अग्र्यम् । 'घच्छौ च' ॥४।४।११७॥ तत्र भवः । अग्रियः । अग्री

---

१. ण्यतौ PC.

ा तुमीयम् । छे सत्यन्तोदात्तत्वम् । घनि त्वाद्युदात्तत्वम् । 'समुद्रा-
ाद् घः' ॥४।४।११८॥ समुद्रिया नदी । अभ्रियस्येव घोषः ।
बर्हिषि दत्तम्' ॥४।४।११९॥ यत् । बर्हिष्ये निधेहि । 'दूतस्य भाग-
र्मणी' ॥४।४।१२०॥ यत् । 'रक्षोयातूनां हननी' ॥४।४।१२१॥
त् । रक्षस्या तनूः । यातव्या । 'रेवतीजगतीहविष्याभ्यः प्रशस्ये' ॥
।४।१२२॥ यत् । यद्वो रेवती रेवत्यम् । जगत्यम् । हवि-
म् । 'असुरस्य स्वम्' ॥४।४।१२३॥ यत् । असुर्यम् । 'माया-
मण्' ॥४।४।१२४॥ आसुरी माया । 'तद्वानासामुपधानो मन्त्र
ीष्टकासु लुक् च मतोः' ॥४।४।१२५॥ मतुबन्तात् प्रथमान्तात्
पधानमन्त्रवाचिनः षष्ठ्यर्थे इष्टकासु वाच्यासु यत् । मतुपो लुक्
। वर्चस्वानुपधानमन्त्रः आसामिष्टकानां वर्चस्याः । ऋतव्याः ।
अश्विमानण्' ॥४।४।१२६॥ अश्विमानुपधानो मन्त्र आसामिष्टका-
माश्विनीरुपदधाति । 'वयस्यासु मूर्ध्नो मतुप्' ॥४।४।१२७॥
स्वानुपधानो मन्त्रो यासां तासु इष्टकासु वाच्यासु । यत्र मूर्धवय'
ब्दौ स्तः स वयस्वान् मूर्धन्वांश्च । स उपधानो यासां ता उपदधाति ।
त्वर्थे मासतन्वोः' ॥४।४।१२८॥ यत् । नभांसि सन्त्यस्मिन्
स्यो मासः । तन्वाम् । ओजोस्त्यस्या ओजस्या ।
स्या । अनन्तरार्थेपीष्टः । मध्वस्मिन्ननन्तरं मधव्या । लुगकारे-
रेफाश्चेष्यन्ते । लुक् । तपश्च तपस्यश्च । अकारः । इषः ।
नः । इकारः । शुचिः । रेफः । शुक्रः । 'मधोर्ञ च' ॥४।४।१२९॥
र्थे मासतन्वोर्वाच्ययोर्ञः चात् यच्च । उपसंख्यानाल्लुक् च । माधवो
व्यो मधुर्मासः । माधवा मधव्या मधुस्तनुः । 'ओजसोहनि
खौ' ॥४।४।१३०॥ दिने वाच्ये । ओजस्यमहः । ओजसीनम् ।
शोयशआदेर्भगाद्यल्' ॥४।४।१३१॥ वेशोभगयशोभगशब्दाभ्यां
र्थे यल् । वेशोभगोस्यास्तीति वेशोभग्यः । वेशो बलम् । यशोभग्यः ।
काममाहात्म्यप्रयत्नवीर्ययशांसि भगः । 'ख च' ॥४।४।१३२॥

. बर्हिषि त्वं निधेहि PC. २. मधव्यः PC.

वेशोभर्गीनः । 'पूर्वैः कृतमिनयौ च' ॥४।४।१३३॥ पूर्वशब्दात् तृती
न्तात् इनयौ ख च । पथिभिः पूर्विणैः पूर्व्यैः पूर्वीणैः । पूर्वैः कृत
पन्थान इति तेषां प्रशंसा । 'अद्भिः संस्कृतम्' ॥४।४।१३४॥ अ
शब्दात् संस्कृतमित्यर्थे यत् । अप्यं हविः । 'सहस्रेण संमितौ घ
॥४।४।१३५॥ सहस्रशब्दात् तृतीयान्तात् सदृशे वाच्ये घः । सहस्रिय
'मतौ च' ॥४।४।१३६॥ मत्वर्थे च सहस्राद् घः । सहस्रियः
'सोममर्हति यः' ॥४।४।१३७॥ सोममर्हन्ति सौम्या ब्राह्मणाः । 'म
च' ॥४।४।१३८॥ सोमशब्दान्मत्वर्थे आगतविकारावयवप्रकृतिषु य
सोम्यं मधु । सोममयमित्यर्थः । 'मधोः' ॥४।४।१३९॥
निवृत्तः । मधोर्यत् । मधव्याः श्लोकाः । मधुमया इत्यर्थः । 'व
समूहे च' ॥४।४।१४०॥ समूहे मयडर्थे च यत् । वसव्यः । सम्
मयडर्थौ वा । अकारोक्षरात् समूहे वाच्यः । आश्रावयेति च
रक्षरम् । अक्षरस्तोमवृत्तेः छन्दःशब्दात् स्वार्थे यत् । सप्तदः
क्षर[१]छन्दस्यः । वसुशब्दादपि स्वार्थे यदिष्टः । वहुभिर्वसव्यैः
वसुभिरित्यर्थः । 'नक्षत्राद् घः' ॥४।४।१४१॥ स्वार्थे । नक्षत्रियेः
स्वाहा । 'सर्वदेवात्तातिल्' ॥४।४।१४२॥ स्वार्थे । सर्वतातिः
देवतातिः । 'शिवशमरिष्टस्य करे' ॥४।४।१४३॥ शिवादि
षष्ठ्यन्तेभ्यः कर इत्यर्थे तातिल् । शिवस्य करः शिवतातिः
शंतातिः । अरिष्टतातिः । 'भावे च' ॥४।४।१४४॥ शिवस्य भ
शिवतातिः । शंतातिः । अरिष्टतातिः । 'शन्शतोर्डिनि[१]छन्दसि' । तव
परिमाणमित्यर्थे वाच्यः । पञ्चदशिनोर्धमासाः । त्रिंशिनो मास
'विंशतेश्चेति वाच्यम्' । विंशिनोङ्गिरसः । 'छन्दसि साद
युष्मदस्मदोर्वतुब् वाच्यः' । त्वावतः पुरूवसो । यज्ञं वि
मावतः । 'सप्तनोञ् छन्दसि' ॥५।१।६१॥ सप्तन्शब्दात् वर्गेभिधे
स्यात् छन्दसि । सप्त साप्तान्यसृजन् । 'छन्दसि च' ॥५।१।

१. After it तृतीयान्तात् Dc3, PC.

देकमात्रात् तदर्हतीति यः। ओदन्या व्रीहयः। यूप्याः पलाशाः।
ान्ताच्छश्छन्दसि' ॥५।१।९१॥ वत्सरशब्दान्तात् छप्रत्यय-
षे निवृत्तादिषु। इद्वत्सरीयः। 'छन्दसि घस्' ॥५।१।१०६॥
ब्दात् तदस्य प्राप्तमित्यर्थे घस्। सकारः पदत्वार्थः। ऋत्वियः।
र्गाच्छन्दसि धात्वर्थे' ॥५।१।११८॥ उपसर्गाद्धात्वर्थे वतिः
य उद्वतो निवतो यासि। उद्गतो निगतश्चेत्यर्थः। 'थट्
दसि' ॥५।२।५०॥ नान्तादसंख्यादेः परस्य डटः थट् मट् चागमः।
नि। पञ्चमम्। 'छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि'
८९॥ पर्यवस्थातरि प्रतिपक्षे निपातावेतौ। मा त्वा परिपन्थिनो
। मा त्वा परिपरिणो विदन्। 'बहुलं छन्दसि' ॥५।२।१२२॥
त्ययो मत्वर्थे बहुलं स्याच्छन्दसि। अग्ने तेजस्विन्। सूर्यो वर्च-
अंष्ट्रावी। मेखलावी। द्वयावी। उभयावी। रुजावी। हृदयावी।
। इत्यादि। 'छन्दसीवनिपौ वाच्यौ'। वंश्च मतुप् च।
ीरभूत्। सुमङ्गलीरियं वधूः। वनिप्। मघवानमीमहे।
ा च। मतुप्। उद्वती च। 'तयोर्दार्हिलौ च छन्दसि' ॥५।३।२०॥
र्थासंख्यं दार्हिलौ स्तः। इदा। तर्हि। यथाप्राप्तं च। 'था
च्छन्दसि' ॥५।३।२६॥ किमस्था स्यात् हेतौ प्रकारे च।
ामं न पृच्छसि। कथा देवा आसन्। पुरा केन हेतुनेत्यर्थः।
श्चा च च्छन्दसि' ॥५।३।३३॥ अवरस्यास्तातेरर्थे निपातौ
। पश्चसिंहः। पश्चासिंहः। पश्चाद्धसति। 'तुश्छन्दसि'
९१॥ तृजन्तात् तृन्नन्ताच्च इष्ठन्नीयसुनौ स्तः। आसुतिं
। दोहीयसी धेनुः। 'प्रत्नपूर्वविश्वेमात्थाल् छन्दसि'।
११॥ एभ्य इवार्थे थाल्। प्रत्नथा। पूर्वथा। विश्वथा।
। 'अमु च च्छन्दसि' ॥५।४।१२॥ किमेत्तिङव्ययघादमु
त्र स्यात्। प्रतरं न यामः। 'वृकज्येष्ठाभ्यां तिल्तातिलौ
सि' ॥५।४।४१॥ स्वार्थे। वृकतिः। ज्येष्ठतातिः। 'अन-

द्व° PC. २. उष्ट्रावी Dc₃, PC.

सन्तान्नपुंसकाच्छन्दसि' ॥५।४।१०३॥ अन्नन्तादसन्ताच्च क्लीबा
तत्पुरुषे टच् समासान्तः स्यात् । ऋषभचर्मेभिषिच्येते । दे
च्छन्दसामि । वेति वाच्यम् । ब्रह्मचर्म । देवच्छन्दः । 'बहुप्रज
श्छन्दसि' ॥५।४।१२३॥ बहुप्रजा इति निपात्यते । बहुप्रज
निर्ऋतिमाविवेश । 'छन्दसि च' ॥५।४।१४२॥ दन्तशब्दस्य बहुव्री
समासान्तो दत् आदेशः स्यात् । उभयतोदतः प्रतिगृह्णाति
'ऋतश्छन्दसि' ॥५।४।१५८॥ ऋकारान्ताद्बहुव्रीहेः कप्प्रत्ययो न
हता मातास्य हतमाता । छन्दस्वस्अपस्ओकस्कविक्षेमवर्च
निष्केवलउक्थजनपूर्वनवसूरमर्त्याधिष्ण्येभ्यः स्वार्थे यत् । छन्दस्यः
वस्यः । अपस्यो वसाना । ओकस्यः । कव्योसि । क्षेम्यमध्यवस्यसि
वायुर्वर्चस्यः । निष्केवल्यं शंसति । उक्थ्यं शंसति । जन्यस्ताभि
पूर्व्या[1] दिशः स्तोमं जनय । कुलालवरूढनिषादचण्डालमित्रामित्रे
छन्दसि स्वार्थे ण वाच्यः । कुलाल एव कौलालः । वारूढः । नैषाद
चाण्डालः । मैत्रः । आमित्रः । नेत्रन्ताद्बहुव्रीहेश्छन्दस्यब् वाच्यः
बृहस्पतिर्नेता येषां ते बृहस्पतिनेत्रा देवाः । सोमनेत्राः । 'ति
धातोः—' इति द्वित्वम् । छन्दसि वेति वाच्यम् । यो जागार
दाति प्रियाणि । 'तुजादीनां दीर्घोऽभ्यासस्य' ॥६।१।७॥ येषामभ्या
स्याविहितलक्षणं दीर्घत्वं दृश्यते तेषां तुजादीनामभ्यासदीर्घत्वं
स्याच्छन्दसि । तूतुजानः । मामहानः । स्वधां मीमाय । अन
दाधार । स तूताव । भाषायां न । तुतोज शबलान् हरीनिति
'बहुलं छन्दसि' ।६।१।३४॥ ह्वः संप्रसारणं स्यात् । इन्द्र
हुवे । हूयामि । ऋक्शब्दे परे त्रः संप्रसारणमुत्तरपदादिलोप
तिस्र ऋचोत्र तृचं सूक्तम् । 'रयेर्मतौ बहुलम् ।' संप्रसारण
रेवान् । रयिमान् । 'अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्य
श्राताश्रितमाशीराशीर्ताः ॥६।१।३६॥ एते छन्दसि निपात्यन्

१. पूर्वा Do₃, PC.

विष्णो यदपस्पृधेथाम् । स्पर्धेर्लङ्याथाम् । अपपूर्वस्येत्यन्ये ।
अर्कमानृचुः । वसून्यानृहुः । अर्चेरर्हेर्लिट्युसि । चिच्युषे ।
लिटि थासि । तित्याज । त्यजेर्णलि । भ्रातास्त इन्द्र
श्रिता नौ महाः । श्रीञ् पाके निष्ठायाम् । नाशीरं रुद्रे ।
ऊर्जम् । श्रीञ एव क्विपि निष्ठायां च । 'खिदेश्छन्दसि'
२॥ खिद दैन्ये इत्यस्य धातोरेचः स्थाने वा आकारादेशः
चित्तं चिखाद चिखेद । शीर्षश्छन्दसि ॥६।१।६०॥
न समानार्थः शीर्षन् शब्दो निपात्यते । यत्ते
शीर्भाग्यम् । 'वा छन्दसि' ॥६।१।१०६॥ 'अमि पूर्वः'
०७॥ अमि पूर्ववत्त्वं वा । शमीं च शम्यं च ।
णाच्च' ॥६।१।१०८॥ पूर्वरूपं वा । इज्यमानः । यजमानः ।
सि बहुलम्' ॥६।१।७०॥ लोपः स्यात् । या क्षेत्रा ।
। यानि । एमन्नादिषु परेषु पूर्वपरयोः पररूपमेका-
सि । अपां त्वेमन् । गोर्यूतौ छन्दसि । वान्तादेशो वाच्यः ।
शास्ते । 'अङ्ग इत्यादौ च' ॥६।१।११९॥ अङ्गशब्दे
ोति परे प्रकृत्या अङ्गशब्दादौ योकारस्तास्मिन् परे च एङ्
यजुषि । अङ्गे अङ्गे वृषा वृषा । प्राणो अङ्गे दिवो
'अनुदात्ते च कुधपरे' ॥६।१।१२०॥ अनुदात्ते चाति
धकारपरे च एङ् प्रकृत्या यजुषि । अयं सो अग्निः । अयं
रः । 'अवपथासि च' ॥६।१।१२१॥ अवपथाःशब्दे
अकारादौ परे एङ् प्रकृत्या यजुषि । त्री रुद्रेभ्यो
। वपतेस्थासि लङि 'तिङ्ङतिङः' इति निघातः ।
य्ये च च्छन्दसि' ॥६।१।८३॥ बिभेतेः प्रपूर्वस्य
च यति परतोयादेशो निपात्यते । भय्यः किलासीत् ।
प्रवय्या । अयं स्त्रियामेव । हृदय्या आप इति च
। हृदय्या आपः । 'भवे छन्दसि' इति यत् । 'वा

छन्दसि' ॥६।१।१०६॥ दीर्घाज्जसि इचि च परे पूर्वसवर्णदीर्घो वा न स्यात् । मारुतीश्चतस्रः । मारुत्यश्चतस्रः । वाराही । वाराह्यौ छन्दसि 'इकोसवर्णे—' इति प्राप्तस्य शाकल्यस्य सिति प्रत्यये परे निषेधो वाच्यः । 'छन्दसि घस्' इति ऋतुशब्दाद् घस् । ईषाअक्षादिषु छन्दसि प्रकृतिभावमात्रम् । ईषा अक्षा । का ईषिरे । विलाप आँ अगमत् विश्वजनादीनां छन्दसि छे वा तुगागमः । विश्वजनच्छत्रम् । विश्वजन च्छत्रम् । 'आपोजुषाणोवृष्णोवर्षिष्ठेम्बेम्बालेम्बिकेपूर्वे' ॥६।१।११८॥ यजुषि आपो इत्यादीनां चतुर्णामम्बेम्बाले एतयोश्चाम्बिकेपूर्वयोरेङ् अतिपरे प्रकृत्या । आपो अस्मान् । जुषाणो अप्सु राज्यस्य । वृष्णो अंशुभ्याम् । वर्षिष्ठे अधिनाके । अम्बे अम्बाले अम्बिके । यजु षीदृगेव पठ्यते । 'ह्रस्वाचन्द्रोत्तरपदे मन्त्रे' ॥६।१।१५१॥ ह्रस्वा परस्य चन्द्रशब्दस्योत्तरपदस्य सुडागमः स्यात् मन्त्रे । सुश्चन्द्रो युष्मान् पुरुश्चन्द्रः । 'पितरामातरा च छन्दसि' ॥६।३।३३॥ द्वन्द्वे निपातः आ मा गन्तां पितरामातरा च । मातापितरावित्यर्थः । 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्' ॥६।३।६३॥ ङ्यन्तस्याबन्तस्य च बहुलं ह्रस्वः संज्ञायाम् । रेवतिपुत्रः । न च । नान्दीघोषः । छन्दसि कुमारिदारा । न च । फाल्गुनीपौर्णमासी । 'त्वे च ॥६।३।६४॥ त्वप्रत्यये च बहुलं ह्रस्वः । अजत्वम् । रोहिणित्वम् 'समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु' ॥६।३।८४॥ समानस्य सः स्या मूर्धाद्यन्यस्मिन् उत्तरपदे परे । सगर्भ्यः । सयूथ्यः । 'सध मादस्थयोश्छन्दसि' ॥६।३।९६॥ मादस्थयोः परपदयोः सहस्य सधादेशः स्यात् । सधमादो द्युम्नीति । सधस्थः । 'पथि च छन्दसि' ॥६।३।१०८ पथिशब्दे परपदे कोः कवादेशः स्यात् का च वा । कवपथः । कापथ कुपथः । 'साढ्यै साढ्वा साढेति निगमे' ॥६।३।११३॥ एते निपात्यन्ते साढ्यै समन्तात् । साढ्वा शत्रून् । क्त्वान्तस्य निपातौ । साढे तृजन्तस्य । 'छन्दसि च' ॥६।३।१२६॥ अष्टनः परपदे दीर्घः

१. इषिरे PC., $Dc_3$. २. आगमत् $Dc_1$.

पालः । अष्टापदी । भक्षस्य कारे मुम् छन्दसि । भक्षस्य कारः
रः । 'विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये' इति छन्दसि बहुलं
। विश्वाची च घृताची च कद्रीची । स्वरो रोहतौ छन्दस्युत्वं वा
। जाय एहि स्वो रोहाव । अन्येपि पृषोदरादिवत् ज्ञेयाः ।
सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ' ॥६।३।१३१॥ एषां मतुपि परे
न्त्रे । सोमावती । अश्वावती । इन्द्रियावती । विश्वदेव्यावती ।
धेश्च विभक्तावप्रथमायाम्' ॥६।३।१३२॥ दीर्घः स्यान्मन्त्रे ।
भिः । ओषधीभ्यः । विभक्तौ किम् । ओषधिपते । अप्रथमायां
ओषधिः । 'ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्' ॥६।३।१३३॥
ये त्वादीनां दीर्घः । आ तू न इन्द्र । नू मर्तः । उत वा घा
। मक्षू गोमन्तम् । तङ् प्रत्याहारः । भरता जातवेदसम् ।
ङितो ग्रहस्तेनेह न । शृणोत ग्रावाणः । कूमनाः । अत्रा ते ।
गः । 'इकः सुञि' ॥६।३।१३४॥ सुञि परे ऋग्विषये दीर्घः ।
गः सखीनाम् । 'सुञः' इति षः । 'नश्च धातुस्थोरुषुभ्यः' इति
द्व्यचोतस्तिङः' ॥६।३।१३५॥ द्व्यचस्तिङन्तस्यातो मन्त्रे दीर्घः
। विद्मा हि त्वा सत्पतिं शूर गोनाम् । द्व्यचः किम् । अश्वा भवत
: । अतः किम् । आ देवान् वक्षि यक्षि च । 'निपातस्य च'
१३६॥ मन्त्रे दीर्घः । एवा ते । 'छन्दस्युभयथा' ॥६।४।५॥
ासृशब्दयोरङ्गस्य दीर्घो वा नामि । तिसृणाम् । तिसृणाम् ।
ाम् चतसृणाम् । 'वा षपूर्वस्य निगमे' ॥६।४।९॥ असंबुद्धौ
नस्थाने परे षपूर्वस्योपधाया वा दीर्घः । तक्षाणं तिष्ठन्तम् ।
तिष्ठन्तम् । 'जनिता मन्त्रे' ॥६।४।५३॥ इडादौ तृचि णिलोपो
ते मन्त्रे । यो नः पिता जनिता । 'शमिता यज्ञे' ॥६।४।५४॥
ये शमयितेर्णिलोपो निपात्यते । शृतं हविः शमिता । 'युप्लु-
छन्दसि' ॥६।४।५८॥ युप्लुवोर्ल्यपि दीर्घः स्यात् । वियूय
। 'छन्दस्यपि दृश्यते' ॥६।४।७३॥ अनजादीनामप्याट्

लुङादिषु । आवः । आयुनक् । वृयुजोर्लुङि 'मन्त्रे घस—' इ
लेर्लुकि रूपे । 'बहुलं छन्दस्यमाङ्योगेपि' ॥६।४।७५॥ अडाटौ छन्द
स्यमाङ्योगेपि न स्तः । माङ्योगेपि स्तो बहुलम् । जनिष्ठाः । मा व
क्षेत्रे परबीजान्यवाप्सुः । 'इरयो रे' ॥६।४।७६॥ झादेशस्य इ
इत्यस्य रे आदेशो बहुलं छन्दसि । गर्भं प्रथमं दध्र आपः । धात्वो
रेभावस्यासिद्धत्वादातो लोपः । न च स्यात् । अग्निकर्माणि चक्रिरे
'तनिपत्योश्छन्दसि' ॥६।४।९९॥ एतयोरुपधालोपोजादौ क्ङिति । वित
त्निरे कवयः । शकुना इव पप्तिम । 'घसिभसोर्हलि च' ॥६।४।१००
एतयोरुपधालोपो हलि । सग्धिश्च मे । बब्धां ते हरी धानाः । लो
तसस्ताम् । 'विभाषर्जोश्छन्दसि' ॥६।४।१६२॥ ऋजु इत्यस्य ऋत
स्थाने रः स्यादिष्ठेमेयस्सु परतः । रजिष्ठमेति पन्थानम् । रजिष्ठं वा
'ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि' ॥६।४।१७५॥ एतानि
निपात्यन्ते । ऋतौ भवमृत्व्यम् । वास्तौ भवं वास्त्व्यम् । वस्तुनि भवं
वास्त्वः । माध्वीर्नः सन्त्वोषधीः । हिरण्यस्य विकारो हिरण्ययः
छन्दस्यमिपचोरलिट्येत्वं वाच्यम् । व्येमानम् । अमो विपूर्वस्य चानाश
मुक् न । लिङि । पेचिरन् । पेचिम । छान्दसो ह्रस्वः । यजिवप्योश्च
आयेजे । यजेर्वपेश्चानजादेरप्याडागमश्छान्दसत्वात् । 'बहुलं छन्दसि
॥७।१।८॥ धातुमात्रात् परस्य रुट् स्यात् । देवा अदुह्र । 'नेतरा
च्छन्दसि' ॥७।१।२६॥ इतरात् स्वमोरद्डादेशो न । इतरमण्डम
जायत । 'क्त्वापि छन्दसि' ॥७।१।३८॥ अनञ्पूर्वसमासे क्त्वो
ल्यप् क्त्वापि स्याच्छन्दसि । यजमानं परिधापयित्वा । उद्धृत्य
जुहोति । 'श्रीग्रामण्योश्छन्दसि' ॥७।१।५६॥ श्रीणामुदारो धरुणो
रयीणाम् । सूत ग्रामणीनाम् । 'गोः पादान्ते' ॥७।१।५७॥ गोशब्दात
परस्यामो नुट् स्यात् ऋक्पादान्ते । विद्माहि त्वा सत्पतिं शूरगोनाम्
पादान्ते किम् । गवां गोत्रम् । सर्वे विधयश्छन्दसि विकल्प्यन्ते इति
पादान्तेपि क्वचिन्न । गोपतिं गवाम् । 'लोपस्त आत्मनेपदेषु'

कारस्य लोपः स्यात् तङि । देवा अदुह । अदुहतेति
यक्' ॥७।१।४७॥ क्त्वो यगागमः स्यात् । दत्त्वाय
। दत्त्वेति प्राप्ते । 'इष्ट्वीनामिति च' ॥७।१।४८॥ यजेः क्त्वान्ते
इष्ट्वीनं देवान् । 'छन्दस्यपि दृश्यते' ॥७।१।७६॥
स्यक्ष्णामनजादावपि तृतीयादिविभक्तेरन्यत्रापि च दृश्यते
द्रो दधीचो अस्थभिः । अस्थान्युत्कृत्य । अक्षण्वता ।
।' ॥७।१।७७॥ अस्थ्यादीनां द्विवचने परत ई च स्यात् ।
'दृक्स्ववस्स्वतवसां छन्दसि' ॥७।१।८३॥ एषां सौ
। ईदृङ् । स्ववान् । स्वतवान् । 'बहुलं छन्दसि'
ऋकारान्तस्य धातोर्बहुलमुकारः स्यात् । अनोष्ठ्यपूर्वस्यापि
वरुणौ ततुरिः । ओष्ठ्यपूर्वस्यापि न । पप्रितमम् । स्यादपि
शब्दस्यामि छन्दसि त्रयादेशो वा । त्रीणामपि यथा
मपि समुद्राणाम् । 'हु ह्वरेश्छन्दसि' ॥७।२।३१॥ ह्रुरे।
देशः स्यात् । अहुतमसि । 'अपरिह्वृताश्च' ॥७।२।३२॥
त्रो ह्वरतेर्निपात्यते । अपरिह्वृताः सनुयाम वाजम् । 'सोमे
२।३३॥ निपाताद् गुणः । सोमो ह्वरितो विह्वरितस्त्वम् ॥
स्तभितोत्तभितचत्तविकस्ताविशस्तृशंस्तृशास्तृतरुतृतरूतृ-
त्रीरुज्ज्वलितिक्षरितिक्षमित्यमितीति च' ॥७।२।३४॥
नेपाताः । प्रसितं वा एतत्सोमस्य । विष्कभिते
। स्वस्तभितम् । सत्येनोत्तभिता भूमिः । चत्ता वर्षेण
विकस्तमुत्तानाया हृदयम् । एते षट् क्तान्ताः ।
विशस्ता । शंस्ता विप्रा । शास्ता राजा ।
नाम् । तरुतारम् । वरुतारम् । वरूतारम् । वरूत्रीष्ट्वा
वती । वरूत्रयः । एते अष्ट तृजन्ताः । ज्वलानां चतुर्णां
निपात्यते । एते लङन्ताः । अग्निरुज्ज्वलिति । स्तोकं
मिति सोमम् । अभ्यमिति वरुणम् । भाषायां तु

'C.
प्र. कौ. ]

ग्रस्तस्कब्धस्तब्धोत्तब्धचत्तितविकसितविशसितांशसिताशासितातरीत तरितावरीतावरितोज्ज्वलति क्षरति वमति अमति । 'बभूथाततन्थ जगृम्भववर्थेति निगमे' ॥७।२।६४॥ निपातः। त्वं हि होता प्रथमो बभूथ येनान्तरिक्षमुर्वाततन्थ । जगृम्भा ते दक्षिणमिन्द्र हस्तम । ववर्थ त्वं ज्योतिषा । क्रमेण बभूविथ आतेनिथ जगृह्मि ववरिथेति प्राप्ते 'सनिंससनिवांसम्' ॥७।२।६९॥ सनिपूर्वस्य सनोतेः सनतेर्वा पदाः पूर्वो छन्दस्येव निपात्यते । अग्निंत्वाग्ने सनिंससनिवांसम् । पावकादीनां छन्दसि 'प्रत्ययस्थात् कात्पूर्वस्य' इति अत्वं वेति वक्तव्यम् हिरण्यवर्णाः शुचयः पावकाः । अलोमकाः । 'बहुलं छन्दसि ॥७।३।९७॥ अस्तेः सिचश्चापृक्तस्य ईडागमो बहुलं स्याच्छन्दसि आप एवेदं सलिलं सर्वमाः । अहरेवासीत् । सिचः । गोभिरक्षा अभैषीर्मा पुत्रक ।'जसि च' इत्येतत् प्रकरणे जसादिषु छन्दसि वावचनं प्राङ् णौ चङ्युपधाया ह्रस्व इत्येतस्मात् । अम्बार्थम् । अम्बे अम्ब । दर्वे । दर्वि । शतक्रत्वः । शतक्रतवः । पश्वे नृभ्यः पशवे नृभ्यः । किकिदीव्या । किकिदीविना । तलो ह्रस्वत्वं सम्बुद्धौ वेति वाच्यम् । देवते देवतायां हे देवत हे देवते 'नाभ्यस्तस्याचि' इति निषेधो बहुलं छन्दसि इति वाच्यम् जुजुषत् । जुजोषत् । 'नित्यं छन्दसि' ॥७।४।८॥ चङ्युपधाया ऋवर्णस्य स्थाने नित्यमृकारादेशः स्यात् । इरारामपवादः । अवीवृधत् पुरोडाशेन । अवीवृधताम् । अवीवृधन् 'न छन्दस्यपुत्रस्य' ॥७।४।३५॥ पुत्रवर्जितादन्तस्य क्यचि ईत्वदीर्घौ न स्तः । मित्रयुः । 'क्याच्छन्दसि' इत्युः । अपुत्रस्य किम् पुत्रीयन्तः सुदानवः । अपुत्रादीनां वाच्यम् । जनीयन्तो न्वग्रवः 'दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यति' ॥७।४।३६॥ एते क्यचि निपात्यन्ते । दुरस्युः । दुष्टीयतीति प्राप्ते । द्रविणस्युः । द्रविणीयतीति प्राप्ते । वृषण्यति । वृषीयतीति प्राप्ते । रिषण्यति । रिष्टीयती

१. पुत्रवर्जितस्यादन्तस्य PC.

अश्वाघस्यात्' ॥७।४।३७॥ अश्व अघ एतयोः क्यचि आत्
न्दसि । अश्वायन्तो मघवन् । मा त्वा वृका अघायवो
। 'देवसुम्नयोर्यजुषि काठके' ॥७।४।३८॥ देव सुम्न
क्यचि आत्स्याद्यजुषि काठके । देवायन्तो यजमानाय
म्नायन्तो हवामहे । 'कव्यध्वरपृतनस्यर्चि लोपः' ॥७।४।३९॥
न्तस्य क्यचि लोपः स्यादृचि । कवि । कव्यन्तः । अध्वर ।
ः । पृतना । पृतन्यन्तः । 'विभाषा छन्दसि' ॥७।४।४४॥
न्दसि वा हिरादेशः स्यात् क्त्वि परे । हित्वा शरीरं
। हात्वा शरीरं पातव्यम् । 'सुधितवसुधितनेमधितधिष्वाधिषीय
४।४५॥ दधातेर्निपाताश्छन्दसि । गर्भं माता सुधितम् । सुहितमिति
सुधितमग्नौ जुहोति । वसुहितमिति प्राप्ते । नेमधिताः । नेमहिता
: । लोण्मध्यमे धिष्व सोमम् । धत्स्वेति प्राप्ते । आशी-
नेपदोत्तमपुरुषैकवचने धिषीय । धासीयेति प्राप्ते । 'कृषे-
' ॥७।४।६४॥ कृषेर्धातोश्छन्दसि यङि परेऽभ्यासस्य चुत्वं
। कृष्यते । 'दाधर्ति दर्धर्ति दर्धर्षि बोभूतु तेतिक्तेलर्ष्यापनीफणत्-
दत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतः सरी-
वरीवृजन्मर्मृज्यागनीगन्तीति च' ॥७।४।६५॥ एतेष्टादश
ते । दाधर्ति दर्धर्ति दर्धर्षि धारेः श्लौ यङ्लुकि वा निपाताः । बोभूतु
लुगन्तस्य लोट् गुणाभावः । 'भूसुवोस्तिङि' इति गुणाभावे
यङ्लुगन्तस्य गुणप्रतिपत्त्यर्थम् । तेतिक्ते इति तिजेर्यङ्-
। तङ् । अलर्षि इयर्तेर्लटि लत्वम् । अलर्ति इत्यपि स्यात् ।
णत् । फणतेर्यङ्लुकि नीगागमः । संसनिष्यदत् स्यन्द-
मः षत्वं च । करिक्रत् । करोतेः । कनिक्रदत् । क्रन्देः ।
। बिभर्तेर्यङ्लुकि शतृ । दविध्वतः । ध्वरतेः । दविद्युतत् ।
तरित्रतः । तरतेः । सरीसृपतम् । सृपेः श्लौ अम् ।
। वृजेः श्लौ । सर्वेभ्यः शतृ । मर्मृज्येति मृजेर्लिटि णल्

सस्य रुक् । आगनीगन्ति । गमेर्लिटि श्लौ । इतिकरणं
प्रदर्शनार्थम् । 'बहुलं छन्दसि' ॥७।४।७८॥ अभ्यासस्य श्लौ
मिकार आदेशः स्यात् छन्दसि । पूर्णां विवष्टि । वशेरेतद्रूपम् ।
वचेः जनिमा विवक्ति । न च स्यात् । ददातीत्येवं ब्रूयात् ।
स्वतवसोर्मास उषसश्च तकारादेश इष्यते छन्दसि । स्वतवद्भिः ।
ाद्भिः । माद्भिष्ट इन्द्रो वृत्रहा समुषद्भिरजायथाः ।
सीरः' ॥८।२।१५॥ इवर्णान्ताद्रेफान्तात् परस्य मतोर्मस्य वः
। त्रिवती याज्यानुवाक्या भवति । अधिपतिवती जुहोति ।
ादग्निवानिव । सरस्वतीवान् । दधिवान् । छन्दसि विधि-
त्पान्नेह । सप्तर्षिमन्तं पश्य । ऋषिमान् । सूर्यं ते द्यावापृथिवी
न् । रेफान्तात् । गीर्वान् । धूर्वान् । 'अनो नुट्' ॥८।२।१६॥
तान्मतोर्नुट् स्याच्छन्दसि । अक्षण्वतः । 'नाद् घस्य'
२।१७॥ नान्तात् परस्य घस्य नुट् स्याच्छन्दसि । सुपथिन्तरः ।
इन्तमः । भूरिदाव्नस्तुड् वाच्यः । भूरिदावत्तरः । ईद्रथिनः ।
तरः । 'नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानि छन्दसि' ॥८।२।६१॥
ानिषत्तौ निपूर्वस्य सदेः । नसत्तमञ्जसा । नसन्नं निषण्णमिति
। अनुत्तमिति उन्देर्नञ्पूर्वस्य । प्रतूर्तमिति त्वरतेः तुर्वि
स्य वा । सूर्तमिति सृ इत्यस्य । गूर्तमिति गूरी इत्यस्य ।
। सृतं गूर्णमिति प्राप्ते । 'अम्नरूधरवरित्युभयथा छन्दसि'
२।७०॥ एषां छन्दस्युभयथा स्यात् । रुर्वा रेफो वा । अम्न
। अम्नरेव । ऊध एव । ऊधरेव । अव एव । अवरेव ।
श्च महाव्याहृतेः' ॥८।२।७१॥ भुवस् इत्यस्य महाव्याहृते-
दसि रुर्वा रेफो वा । भुव इत्यन्तरिक्षम् । भुवरित्य-
रिक्षम् । छन्दसि प्लुतविकाराविदुतौ वाच्यौ । अग्नाऊ इ
वः । 'मतुवसो रु संबुद्धौ छन्दसि' ॥८।३।१॥ मत्वन्तस्य
न्तस्य संबुद्धौ पदस्य नकारस्य रुः स्यात् छन्दसि । इन्द्र

व इह पाहि सोमम् । हरिवो मेदिनं त्वा । 'दाश्वान्साह्वा-
ांश्च' ॥६।१।१२॥ एते निपात्यन्ते । दाश्वांसो दाशुषः सुतम् ।
न् वलाहकः । मीढ्वस्तोकाय तनयाय । मरुत्वान् हरिवान्
निति प्रकृतिः । वन उपसंख्यानम् । यस्त्वायन्तं वसुना
ेत्वः । 'उभयथर्क्षु' ॥८।३।८॥ अम्परे छवि नकारस्य रुत्वं
च ऋक्षु । तस्मिंस्त्वा दधाति । तस्मिन् त्वा दधाति । तांस्त्वं
। तान् त्वं खाद । 'दीर्घादटि समानपादे' ॥८।३।९॥
नकारस्य रुः स्यात् अटि परे स चेदट् नकारश्च ऋक्-
पादे स्यात् । ऋक्ष्विति प्रकृतत्वात् ऋक्पाद एव गृह्यते ।
अच्छादीव्यत् । महां इन्द्रो य ओजसा । उभयथेत्येव ।
ान् याचिषामहे । 'आतोटि नित्यम्' ॥८।३।३॥ अटि पर
ूर्वस्यातः स्थाने नित्यमनुनासिकः । महाँ इन्द्रः य ओजसा ।
नुस्वारमधीयते । तत्र छान्दसो व्यत्ययः । 'स्वतवान् पायौ'
।११॥ स्वतवानित्यस्य रुः पायौ । स्वतवाः पायुः । स्वतवाँः
। 'छन्दसि वाप्राम्रेडितयोः' ॥८।३।४९॥ विसर्जनीयस्य
ो वा स्यात् कुप्वोः प्रशब्दमाम्रेडितं च वर्जयित्वा । अरुणः
। अरुणस्कारः । अयस्पात्रम् । अयःपात्रम् । अप्राम्रेडितयोः
। अग्निः प्रविद्वान् । परुषः परुषः । 'कःकरत्करतिकृधि-
नदितेः' ॥८।३।५०॥ एषु परेषु अनदितेर्विसर्जनीयस्य सः
न्दसि । कः । विश्वतस्कः । अपस्करत् । अपस्करति ।
कृधि । सदस्कृतम् । अनदितेः किम् । यथा नो अदितिः
।'पञ्चम्याः परावध्यर्थे' ॥८।३।५१॥ पञ्चमीविसर्गस्य सः स्यात्
रे उपरिभावे छन्दसि । दिवस्परि प्रथमं जज्ञे । अग्निर्हिमवत-
। पञ्चम्याः किम् । अहिरिव भोगैः पर्यैति बाहुम् ।
किम् । दिवः पृथिव्याः पर्योज उद्भृतम् । 'पातौ च
' ॥८।३।५२॥ पातौ च परे पञ्चमीविसर्गस्य सः स्याद्बहुलं

छन्दसि । दिवस्पातु । राज्ञस्पातु । न च स्यात् । परिषदः पातु
'इडाया वा' ॥८।३।५४॥ इडाया विसर्गस्य वा सकारः स्य
षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु । इडायास्पतिः । इडाय
पतिः । इत्यादि । 'यजुष्येकेषाम्' ॥८।३।१०४॥ युष्मत्तत्तक्षु
परत एकेषामाचार्याणां मतेन सस्य मूर्धन्यादेशः स्याद् यजुषि
अर्चिभिष्ट्वम् । अर्चिभिस्त्वम् । अग्निष्टे अग्रम् । अग्निस्ते अग्रम्
अर्चिभिष्टतक्षुः । अर्चिभिस्ततक्षुः । 'स्तुतस्तोमयोश्छन्दसि
॥८।३।१०५॥ एतयोः परतः सस्य मूर्धन्यो वा । त्रिभिष्टुतस्य
त्रिभिः स्तुतस्य । गोष्टोमम् । गोस्तोमम् । 'पूर्वपदात्' ॥८।३।१०
पूर्वपदस्थान्निमित्तात् परस्य सस्य मूर्धन्य एकेषाम् । द्विषन्धिः
द्विसन्धिः । 'सुञः' ॥८।३।१०७॥ सुञो निपातस्य पूर्वपदस्
न्निमित्तात् परस्य सस्य मूर्धन्यः । अभीषु णः सखीनाम् । ऊ
ऊ षु णः । 'छन्दस्यृदवग्रहात्' ॥८।४।२६॥ अवग्रह उच्चारभेद
ऋकारान्तादवग्रहात् पूर्वपदादुत्तरस्य णः स्यात् । नृमणाः
पितृयाणम् । इति ऋकारोवगृह्यते । 'नश्च धातुस्थोरुषुभ्यः
॥८।४।२७॥ अस्मदादेशस्य नसो णत्वम् । धातुस्थात् तावत
अग्ने रक्षा णः । शिक्षा णो अस्मिन् । उरु णस्कृधि । अभीषु
सखीनाम् । ऊर्ध्व ऊ षु णः । उदः परस्य स्कन्देश्छन्द
पूर्वसवर्णो वाच्यः । अग्नेः दूरमुत्कन्दनम् । 'सनोतेर
॥८।३।१०८॥ सनोतेर्मूर्धन्यः । गोषाः । अनकारान्तात् किम्
गोसनि वाचमुदीरयन् । 'सहेः पृतनर्ताभ्यां च' ॥८।३।१
आभ्यां सहेः मूर्धन्यः । पृतनाषाहम् । ऋताषाहमित्यपि ।
रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम्' । ८।३।११०॥ एषां मू
न स्यात् । रपर । विस्रंसिकायाः । सृपि । पुरा क्रूरस्य विसृ
सृजि । वाचो विसर्जनात् । स्पृशि । दिवस्पृशः । स्पृ
निस्पृहः । सवनादीनाम् । सवने सवने । सूते सूते ।

। सवनमुखे सवनमुखे । किंसं किंसम् । अनुसवनम् ।
वनम् । गोसनिः । अश्वसनिः । अश्वसनिग्रहणमनिणोऽपि
स्तीति ज्ञापनार्थम् । तुराषाहं जलाषाहमित्येतत् सिद्धं भवति ।
देवं गणपाठः । सवने सवने । सवनमुखे सवनमुखे ।
वनमनुसवनम् । बृहस्पतिसवनः संज्ञायाम् । शकुनिसवनम् ।
सोमे । सूते सूते । संवत्सरे संवत्सरे । विसं विसम् ।
किंसम् । मुसलं मुसलम् । गोसनिः । अश्वसनिः ।
यभिभ्योऽड्व्यवाये वा छन्दसि' ॥८।३।११९॥ एभ्योऽड्व्यवाये
मूर्धन्यो वा । न्यसीदत् पिता नः । व्यसीदत् । अभ्यसीदत् ।
ीत् । व्यस्तौत् । पक्षे मूर्धन्यः । न्यषदित् । व्यषीदत् ।
ष्टौत् । एवं छान्दसानि शिष्टानि सूत्राणि व्याख्याय वैदिकाः
न्तः प्रयोगा दर्शिताः । एवमन्येऽप्यूह्याः ।

श्री रामाचार्यसूनुर्हरिहरभजनैकाग्रधीः श्रीनृसिंहा-
चार्योऽयं माणिकाम्बाप्यजनयदतुलं विट्ठलाचार्यमार्यम् ।
तस्य श्रीपाणिनीयाद्यनुगुणसगुणे प्रक्रियाकौमुदीय-
व्याख्यानेऽस्मिन् प्रसादे निरगमदमला वैदिकी प्रक्रियेयम्* ।

---

Here follows in $Dc_1$ :—

यादृशं पुस्तके दृष्टं तादृशं लिखितं मया ।
यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥
छ । छ । श्रीः । श्रीः । छ । छ ।

१६०९ वर्षे ज्येष्ठ वदि ९ शुक्रे अद्येह श्रीसूर्यपुरवास्तव्य आभ्यन्तरनागर-
स्मार्तवासुदेवकेन लिखितमिदं पुस्तकम् । छ । छ । श्रीरस्तु । शुभं भवतु ।
णमस्तु ।

तैलाद्रक्षेज्जलाद्रक्षेद्रक्षेच्छिथिलबन्धनात् ।
परहस्तगताद्रक्षेदेवं वदति पुस्तिका ॥ १ ॥ छ । छ । $Dc_1$.

अथ 'लिति' इत्यस्य सूत्रस्य व्याख्यानेनोपलक्षितव्याख्यानां
स्वरसूत्राणि व्याकुर्वद्भिरस्माभिः स्वरप्रक्रियोच्यते । उदात्तोनुदात्त
स्वरितश्चेति त्रयः स्वराः । तल्लक्षणानि पूर्वत्रैवोक्तानि । चतुर्थो
प्रचयाख्यः स्वर इति पाठका यं लक्षणकारा एकश्रुतिरि
वदन्ति । तांश्च स्वरान् साधारणप्रकृतिप्रत्ययसमासतिङन्तस्वरप्रकरणे
प्रदर्शयिष्यामः । ततो वैदिकवाक्येषु स्वरप्रदर्शनप्रकरणं षष्ठं भवति
तत्र सुबन्ततिङन्तयोः प्रसङ्गेनोक्ताः स्वरास्ततो ज्ञेयाः । इ
स्वनुक्ता एवोच्यन्ते । तत्र तावत् साधारणस्वरप्रक्रियाप्रकरणम्
'अनुदात्तं पदमेकवर्जम्' ॥६।१।१५८॥ परिभाषेयं स्वरविधिविषया
यत्र पदे यस्योदात्तः स्वरितो वा विधीयते तमेकमचं वर्जयित्व
शेषं पदमनुदात्ताच्कं स्यात् । गोपायतीत्यत्रायप्रत्ययान्तस्य 'धातो
इत्यन्तोदात्तत्वे कृते यकारात्परमकारमुदात्तं वर्जयित्वा शे
पदमनुदात्ताच्कम् ।

आगमस्य विकारस्य प्रकृतेः प्रत्ययस्य च ।
पृथक्स्वरनिवृत्त्यर्थमेकवर्जं पदस्वरः ॥

आगमस्य । 'चतुरनडुहोरामुदात्तः' । चत्वारः । 'चतेरुरन्
इत्युरन्प्रत्ययान्तत्वात् चतुर् आद्युदात्तः । असत्येतस्मिन् चतु
प्रकृतेरागमस्य च पृथक् स्वरः स्यात् । सति त्वेतस्मिन्नेकवर्जस्व
सति शिष्टत्वादागमस्वरः प्रकृतिस्वरं बाधते । विकारस्य
अस्थनि । दधनि । 'अस्थिदधि—' इत्यनङ् । विकार उदात्तः
दधिशब्दः किन्प्रत्ययान्तत्वादन्तोदात्तः । अत्राप्यसत्येकवर्जस्व
दधिशब्दस्यानङश्च पृथगेवोदात्तत्वं स्यात् । अस्मिंस्तु सत्यनङे
सति शिष्टत्वात् । प्रकृतेः । गोपायति । गुपिः 'धातो
इत्यन्तोदात्तः । आयप्रत्ययस्तु 'आद्युदात्तश्च' इत्याद्युदात्तः

१. Before it PC. has—ओं नमो गणेशाय । २. तु पूर्व° $Dc_3$. ३. स्व
रविस्तरप्रदर्शन° $Dc_3$.

ने तु ' सनाद्यन्ता धातवः ' इति धातुत्वादन्तोदात्तः ।
ह् स्वरे प्राप्ते यकारस्यैव धातुस्वरः स्यात् सति
। प्रत्ययस्य । कर्तव्यम् । धातोरन्तोदात्तत्वे प्रत्यय-
त्वे प्राप्ते प्रत्ययाद्युदात्तत्वमेव । सति शिष्टत्वादेव ।
तरङ्गापवादैः स्वरैर्व्यवस्था सति शिष्टेन च । सति
बलीयानिति वक्तव्यमन्यत्र विकरणेभ्य इति वचनात् ।
स्मिन् सति शिष्यते स तद्बाधकः स्यात् । तथानन्तरमेव
। तथा च कृष्णोत्तरासङ्गपुत्र इत्यत्र समासस्वरापवादो
रः सति शिष्टेन समासस्वरेणैव बाध्यते । विकरण-
सति शिष्टोपि सार्वधातुकस्वरं न बाधते । लुनीत इत्यत्र
स्वरः स्यादाद्युदात्तत्वम् । ' तत्पुरुषे तुल्यार्थ—' इति
ेन निपातस्य नञो यदाद्युदात्तत्वं तेन उत्तरपदस्वरो बाध्यते ।
ामित्ताच्च स्वरान्नञ्स्वरो बलीयानिति वाच्यम् । अचत्वारः ।
भक्तिर्निमित्तमामस्तस्य यदुदात्तत्वं तत् सति शिष्टमपि
बाध्यते । यच्चोपपदं कृति नञ् तस्य स्वरो बलीयानिति
। अकरणिर्ह ते वृषल भूयात् । सहनिर्दिष्टस्य स्वरो
ति वाच्यम् । अध्यगीषि भाष्यम् । पदग्रहं वाक्ये
वरार्थम् । देवदत्त गामभ्याज शुक्लां दण्डेनेति । परिमाणार्थं
ग्रणम् । तेन यस्य पदसंज्ञा भविष्यति तत् पदमित्युच्यते
ङन्तम् । तेनैव तत्पदाधिकारस्य निवृत्तिं करोतीति ततः
पदव्यपदेशात् स्वरविधिसमकालमेव शिष्टस्यानुदात्तत्वं
तथा च कुवल्या विकारः कौवलमित्यत्रानुदात्तलक्षणोञ्
यात् । ' अनुदात्तस्य च यत्रोदात्तलोपः ' ॥६।१।१६१॥
दात्ते परे उदात्तो लुप्यते तस्योदात्तः स्यात् । कुमार
। कुमारशब्दोन्तोदात्तः । तस्य ङीप्यनुदात्ते उदात्तो
अनुदात्तग्रहणमादेरनुदात्तस्योदात्तार्थम् । अन्त इति हि

प्रकृतत्वादन्तस्य स्यात् । मा हि धुक्षाताम् । यत्रेति किम् । भार्गवः । भार्गवौ । भृगवः । प्राक् सुबुत्पत्तेर्गोत्रप्रत्ययस्य लुक् । उदात्तलोप इति किम् । वेदी । अत्र ह्यनुदात्तलोपः । 'चौ' ॥६।१।२२२॥ चावित्यञ्चतिर्लुप्तनकारः । तत्र परे पूर्वस्यान्त उदात्तः । दधीचः पश्य । मधूचः पश्य । उदात्तनिवृत्तिस्वरापवादः । अतद्धिते इति वाच्यम् । दाधीचः । प्रत्ययस्वरोऽत्र 'आमन्त्रितस्य च' ॥६।१।१९८॥ आमन्त्रितविभक्त्यन्तस्यादिरुदात्त स्यात् । त्रिप्र । विप्रौ । विप्राः । लुमता लुप्ते प्रत्ययलक्षणमत्रेष्यते सर्पिरागच्छ । सप्तागच्छतेति । 'आमन्त्रितस्य च' ॥८।१।१९। इदं त्वष्टमाध्यायस्थम् । षाष्ठिकस्यानन्तरोक्तस्यापवादः । अत्र च पदस्य पदात् अनुदात्तं सर्वमपादादावित्यनुवर्तते । आमन्त्रितान्तस्य पदात्परस्यापादादौ वर्तमानस्य सर्वस्यानुदात्तः स्यात् । पचसि देवदत्त समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः । नेह । यज्ञदत्त पचसि । देवदत्त आगच्छ । अयं दण्डो हरानेन ओदनं पच तव भविष्यति । 'आम एकान्तरमामन्त्रितमनन्तिके' ॥८।१।५५॥ आम उत्तरमेकपदान्तरमामन्त्रितान्तमनन्तिके विषयेनुदात्तं न स्यात् आम् पचसि देवदत्ता३ । आम् भो देवदत्ता३ । भो इत्यामन्त्रितान्त रेपि प्रतिषेध इष्यते । प्लुतोदात्तः पुनरासिद्धत्वान्न प्रतिषिध्यते अन्ये त्वाहुः । अनन्तिक इत्यनेन यन्न दूरं न संनिकृष्टं तत् परिगृह्यते तेनात्रैकश्रुतेरप्राप्तिरेव । प्लुतोपि नोदाहार्य इति । 'आमन्त्रितं पूर्व मविद्यमानवत्' ॥८।१।७२॥ आमन्त्रितान्तं पूर्वमामन्त्रितकार्यस्य प्रयोजकं न स्यात् । देवदत्त यज्ञदत्त । आमन्त्रितस्य पदात् परस्यो निघातोत्र न भवति । हे देवदत्त पचसि इति 'तिङ्ङतिङः' इ निघातो न । देवदत्त तव ग्रामः स्वम् । अत्र युष्मदादेशो न इत्युदाहार्यम् । 'नामन्त्रिते समानाधिकरणे सामान्यवचनम् ॥८।१।७३॥ पर्यायेषु मा भूदिति । अघ्न्ये देवि सरस्वति । 'विभाषि

शेषवचने बहुवचनम्' ॥८।१।७४॥ आमन्त्रितान्ते विशेषवचने परे
र्वामन्त्रितान्तमविद्यमानवद्वा। देवाः शरण्याः। ब्राह्मणा वैयाकरणाः।
हुवचनं किम्। माणवक जटिलकाऽऽ। नित्यं विद्यमानवदेव। 'सुबा-
न्त्रिते पराङ्गवत् स्वरे' ॥२।१।२॥ सुबन्तमामन्त्रिते परे परस्याङ्गवत्
ात् स्वरे कार्ये। तादात्म्यातिदेशोयम्। सुबन्तमामन्त्रितमनुप्रविशति।
ण्डेनाटन्। मद्राणां राजन्। इत्याद्युदाहर्तव्यम्। सुप् किम्। पड्ढे
ड्यमान। आमन्त्रिते किम्। गेहे गार्ग्यः। परेति किम्। पूर्वस्य
ा भूत्। देवदत्त कुण्डेनाटन्। अङ्गग्रहणं किम्। उभयोराद्युदात्तत्वं
ा भूत्। पिण्डीभूतस्य स्यादिति। वत्करणं स्वाश्रयमपि यथा
ात्। आं कुण्डेनाटन्। एकान्तरता भवति। समानाधिकरणस्यो-
संख्यानमनन्तरत्वात्। तीक्ष्णया सूच्या सीव्यन्। अव्ययानां
िषेधः। उच्चैरधीयान। 'उदात्तस्वरितयोर्यणः स्वरितोनुदात्तस्य'
८।२।४॥ उदात्तस्थाने यो यणादेशस्तथा स्वरितस्य स्थाने यो यणादेश-
स्मात्परस्यानुदात्तस्य स्वरित आदेशः स्यात्। उदात्तयणः।
मर्थ्यै। उदात्तनिवृत्तिस्वरेणायमीकार उदात्तस्तस्य यो यण्
स्मात्परस्यानुदात्तस्य विभक्त्यैकारस्य स्वरितो जातः। स्वरितयणः।
कुलूव्याशा। कृत्स्वरेणान्तोदात्तः। तस्य यो यणादेशः स
दात्तयण्। ततः परस्य सप्तम्येकवचनस्य स्वरितस्य यो यण् तस्मात्
वरितयणः परस्याशाशब्दाकारस्यानुदात्तस्य स्वरितो जातः। ननु
ात्र यणादेशो कार्ये यदुदात्तयणः परस्य सप्तम्येकवचनस्य स्वारितत्वं
त् 'पूर्वत्रासिद्धम्' इत्यसिद्धम्। तत् कथमयं स्वरितयण् स्यात्।
थोच्येत आश्रयात्सिद्धं स्यादिति तर्हि 'उदात्तादनुदात्तस्य स्वरितः'
त्यस्याप्याश्रयात्सिद्धत्वं स्यात्। ततश्च दध्याशेत्यत्र दधिशब्द
ाद्युदात्तः शेषनिघातः 'उदात्तादनुदात्तस्य स्वरितः' इति तस्य
वरितत्वं तस्याप्याश्रयात् सिद्धत्वात् तत्स्थानिकादपि यणः
रस्यानुदात्तस्य स्वरितः प्रसज्येत। अत्रोच्यते। अस्ति ह्यत्र वार्तिकम्।
ण्स्वरो यणादेशे सिद्धो वक्तव्यः स्वरितयणः स्वरितार्थ इति।

तेनास्यैव स्वरितस्याश्रयात् सिद्धत्वं स्यात् नान्यस्य । ननु च
स्वरितयण्ग्रहणं न कार्यम् । यतः खलप्व्याशेत्येवमादावुदात्तयण इ
स्वरितः सिद्धः । न च वाच्यं न सिद्धः । स्वरितयणा व्यवधानादि
स्वरविधौ व्यञ्जनमविद्यमानवदिति तस्याविद्यमानत्वेन व्यवधाय
त्वाभावादिति चेदुच्यते । पूर्वस्मादपि हि विधौ 'अचः परस्मिन्
इति स्थानिवत्त्वमाश्रितमिति व्यवधानमस्त्येव । न च वाच्यं स्वर
स्थानिवत्त्वे 'न पदान्त' इति निषेध इति । यतः स्वरदीर्घयल
लोपाजादेशस्यैवास्थानिवत्त्वात् । उदात्तस्वरितयोः किम्
शार्ङ्गरव्याशा । अनुदात्तयणादेशोयम् । अनुदात्तस्येति वि
कुमार्यत्र । अत्रेत्याद्युदात्तो लित्स्वरेण । 'एकादेश उदात्तेनोदा
॥८।२।५॥ उदात्तेन सहानुदात्तस्य एकादेशो स उदात्तः स्यात् । क
वायू । अग्निवायू प्रातिपदिकस्वरेणान्तोदात्तौ । विभक्तिरनुदा
उदात्तेनेति किम् । पचन्ति । अन्तीत्यस्य लसार्वधातुकत्वानुदात्तत्वे
शबकारस्य च यदुदात्तादनुदात्तस्य स्वरित इति तस्यासिद्धत्वा
नुदात्तयोरेकादेशः । 'स्वरितो वानुदात्ते पदादौ' ॥८।२।६॥ अ
पदादौ परे उदात्तेन सहैकादेशः स्वरितः स्यादुदात्तो वा । सु उ
सूत्थितः । सुशब्दस्य 'सुः पूजायाम्' इति कर्मप्रवचनीयस्यापि
पूजायामिति प्रादिसमासेऽव्ययपूर्वपदप्रकृतिस्वरत्वेनाद्युदात्तत्व
शेषमनुदात्तम् । तेनानुदात्ते पदादावेकादेशो भवति । वि ई
वीक्षते । तिङन्तनिघाते कृते एकादेशः । स्वरितग्रहणं विस्पष्टा
उदात्ते हि विकल्पिते तस्मिन्नसत्यान्तर्यतः स्वरित एव स्य
अनुदात्ते किम् । देवदत्तोत्र । पदादौ किम् । वृ
वृक्षाः । एकादेशस्वरोन्तरङ्गः सिद्धो वाच्यः । किम
अयाय्यावेकादेशशतृस्वरैकाननुदात्तसर्वानुदात्तार्थम् । अय् ।
इदमित्यत्र प्रातिपदिकान्तसप्तम्येकवचनयोरुदात्तानुदात्तयोरेका
स 'एकादेश—' इत्युदात्तः । तस्य सिद्धत्वं वाच्

र्ततोऽयादेश उदात्तो यथा स्यादिति । आयू । कुमार्या
यदि 'उदात्तयणो हल्पूर्वात्' इत्युदात्तत्वे कृते
टश्चैकादेशस्तदा स्यादिदं प्रयोजनम् । अथ कृते एकादेशे
यणो हल्पूर्वात्' इति स्वरस्तदा नैतदस्य प्रयोजनं भवति ।
वृक्षाविदम् । एकादेशस्वरः । गाङ्गेऽनूप इति । गाङ्गेशब्दे
: 'एकादेश उदात्तेनोदात्तः' इत्युदात्तः तस्य सिद्धत्वात्
'एङः पदान्तादति' इत्येकादेशः स उदात्तेन सह भवति ।
स्वरितो वानुदात्ते पदादौ' इति पक्षे स्वरितः स्यात् पक्षे
भवति । शतृस्वरः । तुदती । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे
कादेश उदात्तस्तस्य सिद्धत्वात् 'शतुरनुमो नद्यजादी'
स्वरो भवति । एकाननुदात्तः । तुदन्ति । एकादेशस्वरस्य
त् 'अनुदात्तं पदमेकवर्जम्' इति वर्ज्यमानता स्यात् ।
त्तः । ब्राह्मणास्तुदन्ति । एकादेशस्वरस्य सिद्धत्वात्
स्मिन् 'तिङ्ङतिङः' इति निघातः स्यात् । अन्तरङ्ग
वचनाद्बहिरङ्गस्यासिद्धत्वमेव । पचतीति । इतिशब्दो
द्यादात्तः । अत्र बाह्यपदापेक्षत्वादेकादेशस्य बहिरङ्गत्वान्न
। बहिरङ्गस्यासिद्धत्वाद्वर्ज्यमानता न । 'उदात्तादनुदात्तस्य
:' ॥८।४।६६॥ उदात्तात् परस्यानुदात्तस्य स्वरित आदेशः
। गार्ग्यः । अस्य स्वरितस्यासिद्धत्वात् 'अनुदात्तं
वर्जम्' इत्येतन्न प्रवर्तते । तेनोदात्तः स्वरितश्चेति द्वावपि
। 'नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्' ॥८।४।६७॥
रोऽनुदात्तः स्वरितो न भवति । गार्ग्यस्तत्र । तत्रेत्याद्युदात्ते
ार्ग्यन्तो न स्वरितः । गार्ग्यादीनां तु मते स्वरित एव ।
ादित उदात्तमर्धह्रस्वम्' ॥१।२।३२॥ उदात्तानुदात्तसमाहारः
इत्युक्तम् । तस्यादावर्धह्रस्वमुदात्तं स्यात् शेषमनुदात्तम् ।
वमित्यर्धमात्रा लक्ष्यते । शिक्यमित्यत्रादितोऽर्धमात्रा उदात्ता

र्धित्वा or एकादेशत्वा.

अर्धमात्रा अनुदात्ता । कन्या इत्यत्रार्धमात्रादित उदात्ता अध्य
मात्रा अनुदात्ता । माणवका३ इत्यत्रादितोर्धमात्रोदात्ता अर्धतृती
मात्रानुदात्ता । इत आरभ्य नवसूत्राण्यसिद्धकाण्डे उदात्त
स्यसमात्पराणि पठितव्यानि । एतद्विभागाख्यानमाष्टमिकस्यापि
स्यात् । उत्तरत्रापि प्रयोजनं तत्र तत्र वक्ष्यामः । 'एकश्रु
दूरात् संबुद्धौ' ॥१।२।३३॥ त्रैस्वर्ये पदानां प्राप्ते आरम्भः । ए
श्रुतिर्यस्य तदिदमेकश्रुति । संबोधयति येन तदिदं संबोधनं संबु
रेकवचनम् । दूरात्संबोधने एकश्रुति वाक्यं स्यात् । स्वराणामुदा
दीनां भेदतिरोधानमेकश्रुतिः । आगच्छ भो माणवक देवदत्ता
दूरात् किम् । आगच्छ भो माणवक देवदत्त । 'यज्ञकर्मण्य
न्यूङ्खसामसु' ॥१।२।३४॥ यज्ञकर्मणि मन्त्राणां त्रैकश्रुत्यं स
जपन्यूङ्खसामानि वर्जयित्वा । अपां रेतांसि जिन्वतो३
यज्ञकर्मणीति किम् । स्वाध्यायकाले मा भूत् । अजपादि
किम् । ममाग्ने वर्चो विहवेष्वस्तु । न्यूङ्खाः षोडश ओंकार
तेषु प्रथमसप्तमत्रयोदशास्त्रय उदात्तास्त्रिमात्राः । इतरे त्रये
अनुदात्ता अर्धाकाराः । एतच्च आश्वलायनेनोक्तमुदाहृतं च । सा
वाक्यविशेषस्था गीतयः । ए३विश्वं समत्रिणं दहा३ । 'उच्चै
वा वषट्कारः' ॥१।२।३५॥ यज्ञकर्मणि वषट्कार उच्चैस्तरां वा
एकश्रुतिर्वा । वषट्शब्देनात्र वौषट्शब्दो लक्ष्यते । वौषड्ग्रह
वैचित्र्यार्थं न कृतम् । सोमस्याग्ने वीही३वौ३षट् । 'विभाषा छन्द
॥१।२।३६॥ छन्दसि विषये विभाषा एकश्रुतिः स्यात् । पक्षे त्रै
मेव । वेति प्रकृते विभाषाग्रहणं यज्ञकर्मणीत्यस्य निवृत्त्यर्थं
अग्निमीळे पुरोहितम् । अ॒ग्निमी॑ळे पु॒रोहि॑तम् । केचित्त्वियं व्यव
विभाषेत्याहुः । ततश्च ऋग्वेदब्राह्मणादिविषया एकश्रुतिः । त्रै
विज्ञानं तु ऋग्वेदसंहिताविषयमिति । 'न सुब्रह्मण्यायां स्वरि
तूदात्तः' ॥१।२।३७॥ अत्र 'यज्ञकर्मणि' 'विभाषा छन्द

प्राप्तैकश्रुतिर्निषिध्यते । सुब्रह्मण्यो३ मिन्द्र आगच्छ हरिव
। मेधातिथेर्मेष वृषणश्वस्य मेने गौरावस्कन्दिन्नहल्यायै जार
ब्राह्मण गौतमब्रुवाण श्वः सुत्यामागच्छ मघवन् । अत्र
ोमित्योकारः स्वरितः । उदात्तस्वरितयोरेकादेशत्वात् । तस्यो-
विधीयते । इन्द्र इति 'आमन्त्रितस्य च' इत्याद्युदात्तम् ।
कस्तु निघातोऽसमानवाक्यत्वान्न तस्य । द्वितीयो वर्णः
ादनुदात्तस्य—' इति स्वरितः प्रसक्तः तस्यानेनोदात्तः ।
त्याकार उदात्तः । ततः परोनुदात्तः स्वरितः । तस्यानेनोदात्तः ।
ात्तः । हरिव आगच्छेत्यनयैव प्रक्रियया चत्वार उदात्ताः ।
ात्तौ । मेधातिथेरिति षष्ठ्यन्तं परमामन्त्रितमनुप्रविशति ।
ग्रहावात् । ततः सकलस्यामन्त्रितस्याद्युदात्तत्वे कृते द्वितीया-
ुदात्तं स्वरितस्योदात्तः शेषमनुदात्तम् । वृषणश्वस्य मेने
गौरावस्कन्दिन्निति अहल्यायै जार इति पूर्वेण समानानि ।
कब्राह्मणेति गौतमब्रुवाणेति चेन्द्रेत्यनेन समानम् । श्वः
ागच्छ मघवन्निति आमन्त्रितं निहन्यते । 'देवब्रह्मणोरनुदात्तः' ॥
३८॥ सुब्रह्मण्यायामेव देवब्रह्मण इति पठ्यते । तत्र पूर्वेण
रस्योदात्तः प्राप्तोऽनेनानुदात्तो विधीयते । देवा ब्रह्माण आगच्छत ।
पि पदयोरामन्त्रितत्वादाद्युदात्तत्वे शेषनिघाते उदात्तादनुदात्तस्य
तत्वे कृते तस्यानुदात्तः स्यात् । 'स्वरितात् संहिताया-
ात्तानाम्' ॥ १।२।३९॥ संहितायां विषये स्वरितात्
मनुदात्तानामेकश्रुतिः स्यात् । इमं मे गङ्गे यमुने सरस्वति ।
नेत्यन्तोदात्तं म इत्यनुदात्तम् । विधानकाल एव निघातविधेः ।
नर् 'उदात्तादनुदात्तस्य स्वरितः' इति स्वरितं संपद्यते ।
परेषां गङ्गेप्रभृतीनामनुदात्तानामेकश्रुतिर्भवति । सर्व एते
न्त्रितनिघातेनानुदात्ताः । संहितायां किम् । अवग्रहे मा
। इमं मे गङ्गे यमुने सरस्वति । 'उदात्तस्वरितपरस्य

सन्नतरः' ॥१।२।४०॥ उदात्तात् पूर्वस्य स्वरितात् पूर्वस
नुदात्तस्यानुदात्ततरः आदेशः स्यात् । पृश्निमातरोपः । मा
इत्यनुदात्तः । अपइत्यन्तोदात्तः । तत्रानुदात्तस्वरितयोर्य एका
ओकारः सोनुदात्तः । तस्योदात्ते परेनुदात्ततर आदेशः स्या
अध्यापक क्व गन्ता । अध्यापकेत्याद्युदात्तः । क्वेति स्वरितः । तरि
परे क्वेत्यनुदात्तस्य सन्नतर आदेशः । 'अनुदात्तं च' ॥ ८।१
द्विरुक्तस्य परं रूपमनुदात्तं स्यात् । भुङ्क्ते भुङ्क्ते ॥

इति साधारणप्रक्रिया ॥

अथ प्रकृतिस्वरप्रकरणमुच्यते । प्रकृतिस्तु द्विधा धातुः प्रातिप
च । तत्र तावद्धातुस्वर उच्यते । 'धातोः' ६।१।१६२॥ धातो
उदात्तः स्यात् । क्विबन्ता धातवः सर्वे उदाहरणम् । गोपायतं
अभिजित् विश्वजिदित्यादौ गतिकारकोपपदात् कृदिति कृदुत्त
प्रकृतिस्वरत्वे धातुस्वर एव । यत्र प्रत्ययः तथा धातुस्वरं न
तदप्युदाहरणम् । पचति । पठति । तत्र शप्तिपौ पित्त्वादनुदात्तौ
धातुस्वर एवावतिष्ठते । 'स्वपादिहिंसामच्यनिटि' ॥ ६।१।१
स्वपादीनां हिंसेश्चानिट्यजादौ लसार्वधातुके परे आदिरु
वा स्यात् । स्वपन्ति । श्वसन्ति । हिंसन्ति । पक्षे प्र
स्वरेण मध्योदात्तता । स्वपन्ति । श्वसन्ति । हिंस
स्वपादिरदाद्यन्तर्गणो वृत्करणावधिः । अचि किम् । स्वप्य
अनिटि किम् । स्वपिताः । ङित्यजादावयं विधिरिष्य
इह न । स्वपानि । 'अभ्यस्तानामादिः' ॥६।१।१८९॥
ट्यजादौ लसार्वधातुके परे अभ्यस्तानामादिरुदात्तः स्यात् । द
दधति । जक्षति । आदिरिति वर्तमाने पुनरादिग्रहो नित्यार्थः ।
त्येव । दद्यात् । अनिटीत्येव । जक्षिव । 'अनुदात्ते च'
।१९०॥ अविद्यमानोदात्ते लसार्वधातुके परेभ्यस्तानामादिरुद
ददाति । दधाति । अनुदात्त इति बहुव्रीहिनिर्देशो लोपयणादे

मा हि स्म दधादित्यत्रेकारस्यानुदात्तस्य लोपेऽप्याद्युदात्तता
| दधात्यत्रेत्यत्रेकारस्य यणादेशे कृतेऽपि स्यात् | 'भीह्रीभृहुमदजन-
द्राजागरां प्रत्ययात् पूर्वं पिति' ||६|१|१९२|| भीप्रभृतीनाम-
नां पिति लसार्वधातुके परे प्रत्ययात् पूर्वमुदात्तं स्यात् | बिभेति |
| बिभर्ति | जुहोति | ममत्तु नः | जजनदिन्द्रम् | दधनत् |
ति | जागर्ति | पिति किम् | दरिद्रति | 'आदिर्णमुल्यन्यतर-
' ||६|१|१९४|| णमुलि परेऽभ्यस्तानामादिर्वोदात्तः स्यात् |
लोलूयम् | आम्रेडितानुदात्तत्वे कृते पूर्वो लोलूयशब्दः पक्षे
ात्तः | अपरोऽत्र लित्स्वरेण मध्योदात्तः | 'अचः कर्तृयकि'
|१९५|| उपदेशेऽजन्तानां धातूनां कर्तृयकि परे आदिरुदात्तो वा |
केदारः स्वयमेव | २ | यदाद्युदात्तत्वं न तदा सार्वधातुक-
यक एव स्वरः स्यात् | जनादीनामुपदेश एवात्वं द्रष्टव्यम् |
प्रस्य स्वरस्येष्टिः | जायते स्वयमेव | सायते | खायते | अचि
| भिद्यते स्वयमेव | कर्तृयकि किम् | लूयते केदारो देवदत्तेन |
ऽन्यतरस्याम्' ||६|१|२१८|| चङन्ते धातावुपोत्तममुदात्तं
मा हि चीकरताम् | 'न माङ्योगे' इत्यटि निषिद्धे 'हि च'
निघाते 'अदुपदेशात्' इति लसार्वधातुकत्वानुदात्तत्वे च कृते चङ
स्वरे प्राप्ते पक्षे धात्वकार उदात्तः स्यात् |

इति धातुस्वरः |

अथ प्रातिपदिकस्वरः | स चाष्टाध्याय्यां केषांचित् प्रातिपदिकानां
ात् सूत्रैरुक्तः | अनुक्तस्य तु कृदन्तस्य तद्धितान्तस्य च प्राति-
कस्य कृत्तद्धितप्रत्यययोर्ज्ञेयः | शेषस्य तु प्रातिपदिकस्य उणादि-
पत्तिपक्षे उणादिप्रत्यये ज्ञेयः | अव्युत्पत्तिपक्षे फिट्सूत्रे ज्ञेयः | एतच्च
द्वयं महाभाष्य एवोक्तम् | उणादयो व्युत्पन्नानि प्रातिपदिकानि
ादयोऽव्युत्पन्नानि प्रातिपदिकानीत्युक्तेः | यास्केनाप्युक्तं मतद्वयम् |
ान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च न सर्वाणीति

गार्ग्यो वैयाकरणानां चैके इति । फिट्सूत्राण्यग्रे व्याख्यास्यामः ।
यथावसरं चाष्टाध्याय्युक्तान्येव समाससूत्राणि व्याख्यास्यामः ।
'कर्षात्वतो घञोऽन्त उदात्तः' ॥६।१।१५९॥ कर्षतेर्धातोराकारवतश्च
घञन्तस्यान्त उदात्तः स्यात् । कर्षः । पाकः । दायः । 'ञ्नित्यादि-
र्नित्यम्' इत्यस्यापवादः । 'उञ्छादीनां च' ॥६।१।१६०॥ अन्त
उदात्तः । यथायोगं प्राप्तस्य स्वरस्यापवादः । उञ्छः । म्लेच्छः । जल्पः ।
एते घञन्ताः । जप व्यध इत्यबन्तौ । केचित् वध इत्याहुः ।
युग इति घञन्तः । निपातनादगुणत्वं कालविशेषे रथाद्यवयवे च
प्रयोगः । अन्यत्र योग इत्येव । गरशब्दोऽबन्तो दूष्य एवान्तोदात्तः ।
गरो विषम् । वेगवेदचेष्टबन्धाः करणे घञन्ताः । भावे त्वाद्युदात्ता एव
स्तुयुद्रुवश्छन्दसि । परिष्टुत् । सुयुत् । परिद्रुत् । वर्तनिशब्द
सामस्थोऽन्तोदात्तः । श्वभ्रे दरः । श्वभ्रे दरशब्दोऽन्तोदात्तः । साम्बतापे
गर्हायाम् । उत्तमशश्वत्तमौ सर्वत्र । केचिद्भावगर्हायामित्यनुवर्तयन्ति
भक्षमन्थभोगदेहा घञन्ताः । 'चतुरः शसि' ॥६।१।१६७॥ चतुरोऽन्त
उदात्तः शसि परे । चतुरः पश्य । इह न स्यात् । चतस्रः पश्य
'झल्युपोत्तमम्' ॥६।१।१८०॥ षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्त
दन्ते पदे उपोत्तममुदात्तं स्यात् । त्र्यादीनामन्त्यमुत्तमं तस्य समीपमु
पोत्तमम् । पञ्चभिः । तिसृभिः । चतुर्भिः । मध्योदात्ताः संपन्नाः
झलि किम् । पञ्चानाम् । उपोत्तमं किम् । षड्भिः । 'विभाष
भाषायाम्' ॥६।१।१८१॥ अनन्तरे विधौ विकल्पोऽयम् । पञ्चभिः । २
तिसृभिः । २ । चतसृभिः । २ । 'सर्वस्य सुपि' ॥६।१।१९१॥ सु
परे सर्वशब्दस्यादिरुदात्तः । सर्वः । सर्वौ । सुपि किम् । सर्वतरः
प्रत्ययलक्षणेनाप्ययमिष्यते । सर्वस्वरोऽनकच्कस्य वाच्यः । सर्वक
अन्तोदात्तः । 'ञ्नित्यादिर्नित्यम्' ॥६।१।१९७॥ ञिति निति च
नित्यमादिरुदात्तः स्यात् । 'गर्गादिभ्यो यञ्' । गार्ग्यः । 'वासुदेव
र्जुनाभ्यां वुन्' । वासुदेवकः । आद्युदात्तानि स्वपदानि संपन्नानि

मत्र नेष्यते। गर्गाः चञ्चा इत्यत्र यञि कनि च लुप्ते
स्वरापवादः । 'पथिमथोः सर्वनामस्थाने' ॥६।१।१९९॥
ः । पन्थाः । पन्थानौ । मन्थाः । मन्थानौ । सर्व-
किम् । पथः पश्य । मथः पश्य । उणादिकेन्प्रत्ययान्त-
न्तौ । उदात्तनिवृत्तिस्वरेणान्तोदात्ते संपन्ने । प्रत्ययलक्षणम-
ते । ततः पथिप्रिय इत्यत्र पूर्वपदप्रकृतिस्वरेणान्तोदात्तः
। 'अन्तश्च तवै युगपत्' ॥६।१।२००॥ तवैप्रत्ययान्त-
तश्च युगपदुदात्तौ स्तः । युगपद्ग्रहणं पर्यायेण मा भूदिति ।
र्जमिति वचनाद्यौगपद्यं न स्यात् । 'क्षयो निवासे' ॥६।१।
ाद्युदात्तः । क्षये जागृहि । निवासादन्यत्र एरजन्तोदात्तः ।
ानाम् । 'जयः करणम्' ॥६।१।२०२॥ करणवाची जय
ः । जयत्यनेनेति जयोऽश्वः । करणं किम् । जयो ब्राह्मणा-
भावे एरजन्तोदात्तः । 'वृषादीनां च' ॥६।१।२०३॥ आदि-
। वृषः । जनः । ज्वरः । ग्रहः । हयः । गयः । नयः ।
आमः । वेदः । वन्धः । अजन्ताः । गय इति गायतेर्निपात-
। सूदः । इगुपधलक्षणः कः । गुहा । भिदाद्यङ् । शमरणौ
संमतौ भावकर्मणोः । शमो भावे रणः कर्मणि निपातनाद-
मन्त्रः अजन्तः । शान्तिः क्तिजन्तः । कामः । यामः ।
। आराधाराकारा अङन्ताः । वहः घान्तः । कल्पः अजन्तः ।
अन्तः । तत्र क्वचित् 'कर्षात्वतः—' अनेनान्तोदात्ते प्राप्ते
त्तः । वृषादिराकृतिगणः । अविहितमाद्युदात्तत्वं वृषादिषु ।
ामुपमानम्' ॥६।१।२०४॥ आद्युदात्तः । चञ्चेव चञ्चा । कनोऽत्र
केमर्थमुच्यते प्रत्ययलक्षणत्वादाद्युदात्तत्वं सिद्धम् । एवं तर्ह्येतत्
ते स्वरविधौ क्वचित् प्रत्ययलक्षणं नेति । तथैवोदाहारि ।
किम् । अग्निर्माणवकः । उपमानं किम् । देवदत्तः । 'निष्ठा
जनात्' ॥६।१।२०५॥ निष्ठान्तस्य द्व्यचः संज्ञायामादिरुदात्तः

स चेदादिराकारो न । दत्तः । गुप्तः । प्रत्ययस्वरापवादः । निष्ठा किम् । देवः । द्व्यच् किम् । रक्षितः । अनात् किम् । त्रातः । 'शुष्कधृष्टौ' ॥६।१।२०६॥ एतावाद्युदात्तौ । शुष्कः । धृष्टः । असंज्ञार्थम् । 'आशितः कर्ता' ॥६।१।२०७॥ कर्तृवाच्याशितः आद्युदात्तः । आशितो देवदत्तः । 'रिक्ते विभाषा' ॥६।१।२०८॥ आदिरुदात्तो वा । रिक्तम् । २। 'जुष्टार्पिते च छन्दसि' ॥६।१।२०९॥ छन्दस्येतावाद्युदात्तौ । जुष्टः ।२। अर्पितः ।२। भाषायां प्रत्ययस्वरेणान्तोदात्तौ । 'नित्यं मन्त्रे' ॥६।१।२१०॥ पूर्वोक्तं मन्त्रे नित्यम् । जुष्टो देवानाम् । अर्पितः पितॄणाम् । केचिदत्रार्पितशब्दं नानुवर्तयन्ति अन्तोदात्तो हि मन्त्रे पठ्यते । त्रिंशता न शङ्कवोऽर्पिता इति । 'युष्मदस्मदोर्ङसि' ॥६।१।२११॥ एतौ मदिक्प्रत्ययान्तावन्तोदात्तौ ङसि आद्युदात्तौ स्तः । तव स्वम् । मम स्वम् । 'ङयि च' ॥६।१।२१२॥ ङयि च परे पूर्वोक्तम् । तुभ्यम् । मह्यम् । 'यतो नावः' ॥६।१।२१३॥ द्व्यजिति वर्तते । यत्प्रत्ययान्तस्य द्व्यच आदिरुदात्तः । न च नौशब्दात् परो यत् । चेयम् । जेयम् । कण्ठ्यम् । अनावः किम् । यदि नाव्यं तरेत् । द्व्यच इत्येव । चिकीर्ष्यम् । 'ईडवन्दवृशंसदुहां ण्यतः' ॥६।१।२१४॥ एषां ण्यदन्तानामादिरुदात्तः । ईड्यम् । वन्द्यम् । वार्यम् । शंस्यम् । दोह्यम् । 'विभाषा वेण्विन्धानयोः' ॥६।१।२१५॥ अनयोरादिरुदात्तो वा । वेणुः ।२। इन्धानः ।२। वेणुरित्युपमानं यदा तदा 'संज्ञायामुपमानम्' इति नित्यमाद्युदात्तत्वमिष्यते । 'त्यागरागहासकुहश्वठक्रथानाम्' ॥६।१।२१६॥ आदिरुदात्तो वा । त्यागः ।२ रागः ।२। हासः ।२। एते घञन्ताः । पक्षे कर्षात्वत इत्यन्तोदात्ताः कुहः ।२। श्वठः ।२। क्रथः ।२। एतेजन्ताः । 'मतोः पूर्वमात् संज्ञायां स्त्रियाम्' ॥६।१।२१९॥ मतोः पूर्व आकार उदात्तः स्यात् स्त्रीनाम्नि उदुम्बरावती । शरावती । 'शरादीनां च' इति दीर्घः । आदि किम् । इक्षुमती । संज्ञायां किम् । खट्वावती । स्त्रियां किम् । शरावान् मतोः किम् । गवादिनी । 'अन्तोवत्याः' ॥६।१।२२०॥ अवत

न्त उदात्तः संज्ञायाम् । अजिरवती । खदिरवती । वेत्र-
हंसवती । ङीपः पित्त्वादनुदात्तत्वं प्राप्तम् । 'ईवत्याः'
१२॥ ईवत्यन्तस्यान्त उदात्तः संज्ञायाम् । अहीवती
॥

## फिट्सूत्राणि ।

थ फिट्सूत्राणि व्याख्यास्यामः । 'फिषः' ॥ फिषः प्राति-
त्यधिक्रियते । 'अन्त उदात्तः' ॥ प्रातिपदिकस्य । उच्चैः ।
दधत् । 'गेहार्थानामस्त्रियाम्' ॥ अन्त उदात्तः । गेहम् ।
स्त्रियां तु शाला । 'गुदस्य च' ॥ अन्त उदात्तः ।
ग्रस्य—' इत्यस्यापवादः । 'ध्यपूर्वस्य स्त्रीविषयस्य' ॥ अन्ता-
पूर्वस्य यपूर्वस्य चान्त उदात्तः । अन्तर्धा । जाया । माया ।
ाश्मादेः' ॥ खशब्दान्तस्यान्त उदात्तः । सुखम् । दुःखम् ।
कारादेस्तु न । शाखा । मखः । 'हिष्ठवत्सरतिशत्थान्ता-
॥ अन्त उदात्तः । बंहिष्ठः । संवत्सरः । त्रिंशतिः ।
। निशीथः । 'दक्षिणस्य साधौ' ॥ अन्त उदात्तः ।
साधुः । अन्यत्र दक्षिणो देशः । 'स्वाङ्गाख्या-
ो' ॥ दक्षिणस्येनन्प्रत्ययान्तत्वान्नित्यमाद्युदात्तत्वे प्राप्ते
ख्यायां पाक्षिकोदात्तत्वार्थं विधिः । दक्षिणो बाहुः । 'छन्दसि
आदिरन्तोदात्तो वा । अस्वाङ्गार्थमसाध्वर्थं च । दक्षिणः ।
यामृगाख्या चेत्' ॥ 'वर्णानां—' इत्याद्युदात्तत्वे प्राप्ते अन्त
। कृष्णः । मृगाख्यायां तु कृष्णः राञ्यै । 'वा नामधेयस्य' ॥
। अयं वां कृष्णः । कृष्णः ऋषिः । 'शुक्लगौरयोरादिः' ॥
दात्तः । शुक्लस्य फिषोन्तोदात्तत्वे गौरस्य च प्रज्ञाद्यणन्तस्या-
त्त्वे प्राप्ते । शुक्लः । गौरः । 'अङ्गुष्ठोदकबकवशानां
न्तः' ॥ उदात्तः । अङ्गुष्ठः । उदकम् । बकः । वशा ।
। च' ॥ छन्दस्यन्त उदात्तः । पृष्ठमुपदधाति । 'वा

भाषायाम्' ॥ पृष्ठं पृष्ठम् । 'अर्जुनस्य तृणाख्या चेत्' ॥ अन्त उदात्तः । अर्जुनानि तृणानि । 'अर्यस्य स्वाम्याख्या चेत्' ॥ अर्यः स्वामी । 'आशाया अदिगाख्या चेत्' ॥ अन्त उदात्तः । आशा । 'नक्षत्राणामाब्विषयाणाम्' । अन्त उदात्तः । आर्द्रा । आश्लेषा । 'न कुपूर्वः कृत्तिकाख्या चेत्' ॥ अन्त उदात्तः । कृत्तिका नक्षत्रम् । 'घृतादीनाम्' ॥ अन्त उदात्तः । आदिशब्दः प्रकारे । घृतम् । 'ज्येष्ठकनिष्ठयोर्वयसि' ॥ ज्येष्ठो वर्षिष्ठः । कनिष्ठो यविष्ठः । अन्यत्र ज्येष्ठः श्रेष्ठः । कनिष्ठोल्पिष्ठः । 'बिल्वतिष्ययोः स्वरितो वा' ॥ अन्त उदात्तो वा । बिल्वः । तिष्यः ।

'अथादिः प्राक् शकटेः' ॥ 'शकटिशकट्योः' इत्यतः प्राक् आदिरुदात्त इत्यधिकारः । 'ह्रस्वान्तस्य स्त्रीविषयस्य' ॥ आदिरुदात्तः । बलिः । नाभिः । तनुः । 'नब्विषयस्यानिसन्तस्य' । क्लीबविषयस्येसन्तवर्जितस्यादिरुदात्तः । कुण्डम् । धनम् । इसन्तस्य तु सर्पिः । 'तृणधान्यानां च द्व्यषाम्' ॥ आदिरुदात्तः । कुशा व्रीहयः । बह्वचां तु गोधूमः । 'त्रः संख्यायाः' ॥ आदिरुदात्तः पञ्च चत्वारः । द्व्यष एव । एकादश । 'स्वाङ्गशिटामदन्तानाम्' ॥ शिट् सर्वनाम । अदन्तानामेषामादिरुदात्तः । कर्णः तुष्टः । सर्वः । विश्वः । 'प्राणिनां कुपूर्वः' ॥ कवर्गात्पूर्व आदिरुदात्तः । काकः । शुकः । 'खय्युवर्णं कृत्रिमाख्या चेत्' । खयि परे पूर्वमुवर्णमुदात्तम् । कन्दुकः । कृत्रिमाख्या चेत् किम् बन्धूकः । 'उनर्वन्नन्तानाम्' ॥ आदिरुदात्तः । उन । वरुणः ऋ । स्वसा । वन् । सेवा । 'वर्णानां तणतिनितान्तानाम्' । आदिरुदात्तः । एतः । हरिणः । शितिः । पृश्निः । हरित् 'ह्रस्वान्तस्य ह्रस्वमनृत्ताच्छील्ये' ॥ ऋद्वर्जं ह्रस्वान्तमाद्युदात्तम् मुनिः । 'अक्षस्यादेवनस्य' ॥ आदिरुदात्तः । अक्षः । देवने तु अक्षैर्दीव्यति । 'अर्धस्यासमद्योतने' ॥ अर्धो ग्रामस्य । समेंशके

र्धं पिप्पल्याः । 'पीतद्र्वर्थानाम्' ॥ आदिरुदात्तः । पीतद्रुः
। 'ग्रामादीनां च' । आदिरुदात्तः । ग्रामः । सोमः । यामः ।
ादृश्योपमेयनामधेयस्य' ॥ आदिरुदात्तः । चञ्चेव चञ्चा
। 'न वृक्षपर्वतविशेषव्याघ्रसिंहमहिषाणाम्' ॥ उपमेयनाम्नां
ात्तः । ताल इव तालः । मेरुरिव मेरुः । व्याघ्रः । सिंहः ।
। 'राजविशेषस्य यमन्वाख्या चेत्' ॥ आदिरुदात्तः ।
ः विषयः । एवं वङ्गाः । 'लघावन्ते द्वयोश्च बह्वषो गुरुः ।
ृघौ द्वयोश्चान्ते लघ्वोः परतो बह्वषो गुरुरादिरुदात्तः ।
ः । कोलाहलः । 'स्त्रीविषयवर्णाक्षुपूर्वाणाम्' ॥ स्त्री-
र्णनामक्षुपूर्वाणामादिरुदात्तः । श्येनी । हरिणी । 'शकुनीनां
पूर्वम्' ॥ पूर्वं लघूदात्तम् । कुक्कुटः । तित्तिरिः ।
ाख्यायाम्' ॥ यथालक्षणं प्राप्तमुदात्तत्वं न । वसन्तः ।
ाः । 'धान्यानां च वृद्धक्षान्तानाम्' ॥ आदिरुदात्तः ।
श्यामाकाः । षान्ता माषाः । 'जनपदशब्दानामषान्ता-
॥ केकयः । 'ह्रयादीनामसंयुक्तलान्तानामन्तः पूर्वं वा' ॥
ामसंयुक्तलशब्दान्तानामन्त उदात्तः स्यात् पूर्वं वा ।
। शललम् । अन्यत्र मल्लः । 'इगन्तानां च द्व्यषाम्' ॥
ात्तः । कृषिः । रषिः ।

अथ द्वितीयं प्राग्धीषात्' ॥ 'ईषान्तस्य ह्रयादेः' इत्यतः
द्वितीयाधिकारः । 'त्र्यचां प्राङ्मकरात्' ॥ 'मकरवरूढ'
प्राक् त्र्यचां द्वितीयमुदात्तं ज्ञेयम् । 'स्वाङ्गानामकुर्वा-
' ॥ कवर्गरेफवकारादीन् वर्जयित्वा स्वाङ्गानां द्वितीय-
् । ललाटम् । कुर्वादीनां तु कपोलः । रसना । वदनम् ।
ाम्' ॥ त्र्यचां द्वितीयमुदात्तम् । मलयः । मकरः ।
ां शाकानाम्' ॥ अचां द्वितीयमुदात्तम् । शीतन्या ।
। 'पान्तानां गुर्वादीनाम्' ॥ पादपः । आतपः ।

लघ्वादीनां तु अनूपम् । द्व्यचां तु नीपम् । 'युतान्यण्यन्तानाम्' ॥ युते अयुतम् । अनि धमनिः । अणि विपणिः । 'मकरवरूढ-पारेवतवितस्तेक्ष्वार्जिद्राक्षाकलोमाकाष्ठापेष्ठाकाशीनामादिर्वा' ॥ आदिर्द्वितीयो वोदात्तः । मकरः २ । वरूढः २ । इत्यादि । 'छन्दसि च' ॥ अमकराद्यर्थ आरम्भः । लक्ष्यानुसारात् आदिर्द्वितीयं चोदात्तं ज्ञेयम् । 'कर्दमादीनां च' ॥ आदिर्द्वितीयं वोदात्तम् कर्दमः २ । आदिशब्दः प्रकारार्थः । 'सुगन्धितेजनस्य ते वा' । आदिर्द्वितीयं च ते च उदात्ते वा स्तः । सुगन्धितेजनः । 'नप फलान्तानाम्' ॥ क्लीबानां फलान्तानामादि द्वितीयं वोदात्तम् राजादनफलम् । 'यान्तस्यान्त्यात् पूर्वम्' ॥ उदात्तम् । शालयः 'थान्तस्य च नालघुनी' ॥ थान्तस्य शब्दस्य नाशब्दो लघुश्चोदात्तौ स्तः सनाथा सभा । 'शिशुमारोदुम्बरबलीवर्दोष्ट्रारपुरूरवसां च' अन्त्यात् पूर्वमुदात्तं द्वितीयं वा । शिशुमार इत्यादि । 'साङ्काश्यका म्पिल्यनासिक्यदार्वाघाटानाम्' ॥ द्वितीयमुदात्तं वा । साङ्काश्यमित्यादि 'ईषान्तस्य हलादेरादिर्वा' । हलीषा । लाङ्गलीषा । 'उशीरदाशेर कपालपलालशैवालश्यामाकशारीरशरावहृदयहिरण्यारण्यापत्यदेवरा-णाम्' ॥ आदिरुदात्तः । उशीर इत्यादि । 'महिष्यषाढयोर्जायेष्टक ख्या चेत्' ॥ आदिरुदात्तः । महिषी जाया चेत् । अषाढा इष्टक चेत् ।

'शाकटिशाकस्योरक्षरमक्षरं पर्यायेण' ॥ उदात्तम् । शाकटिः शाकटी २ । 'गोष्ठजस्य ब्राह्मणनामधेयस्य' ॥ अक्षरमक्षरं क्रमेण दात्तम् । गोष्ठजो ब्राह्मणः । अन्यत्र गोष्ठजः पशुः । कृदुत्तरपदप्रकृ स्वरेणान्तोदात्तः । 'पारावतस्योपोत्तमवर्जम्' ॥ शेषमक्षरं क्रमेण दात्तम् । पारावतः । 'धूम्रजानुमुञ्जकेशकालवालस्थालीपाकानाम जलस्थानाम्' ॥ एषां धूजलस्थानि वर्जयित्वा शेषाक्षराणि क्रमेण दात्तानि । धूम्रजानुरित्यादि । 'कपिकेशहरिकेशयोश्छन्दसि' ॥ प्र

मेणोदात्तम् । कपिकेशः । हरिकेशः । 'न्यङ्स्वरौ' ॥ इतो न्यक् अधोन्यश्च । 'न्यर्बुदव्यल्कशयोरादिः' ॥ । न्यर्बुदाय स्वाहा । पाकदूर्वाव्यल्कशाः । 'तिल्यशिक्य-धान्यकन्याराजन्यमनुष्याणामन्तः' ॥ स्वरितः । तिल्य-इ । 'बिल्वभक्ष्यवीर्याणि छन्दसि' ॥ अन्तस्वरितानि । इत्यादि । 'त्वत्त्वसमसिमेत्यनुच्चानि' ॥ एतान्यनुदात्तानि स्तरीरुत्वत् इत्यादि । 'सिमस्याथर्वणेन्त उदात्तः' । । 'निपाता आद्युदात्ताः' ॥ स्वाहा अह इत्यादि । 'उपसर्गा-र्जम्' ॥ प्रादय आद्युदात्ता अभिं वर्जयित्वा । अभिः देकत्वादन्तोदात्तः । 'एवादीनामन्तः' ॥ उदात्तः । एव । । इत्यादयः । सह । 'वावादीनामुभावुदात्तौ' ॥ वाव । उभौ ग्रहणम् 'अनुदात्तं पदमेकवर्जम्' इत्यस्य बाधाय । ोनुदात्ताः' ॥ च वा ह इत्यादि । 'यथेति पादान्ते' ॥ तम् । तन्नेमिमृभवो यथा । पादान्ते किम् । यथा नो अदितिः । 'प्रकारादिद्विरुक्तौ परस्यान्त उदात्तः' ॥ पटुपटुः । 'शेषं सर्व-तम्' ॥ शेषं द्विरुक्तं सर्वमनुदात्तम् । ग्रामे ग्रामे रमणीये । ाभिः ।

इति प्रकृतिस्वरप्रकरणं समाप्तम् ॥

अथ प्रत्ययस्वर उच्यते । 'आद्युदात्तश्च' ॥३।१।३॥ प्रत्यय त्तः स्यात् । अनियतस्वरप्रसङ्गे अनेकाक्षु च देशस्यानियमे चनम् । कर्तव्यम् । तैत्तिरीयम् । 'अनुदात्तौ सुप्पितौ' ४॥ पूर्वस्यापवादः । सुपः पितश्च प्रत्यया अनुदात्ताः स्युः । । 'चितः' ॥६।१।१६३॥ चितोन्तोदात्तं स्यात् । घुरच् । म् । 'आगस्त्य—' इति कुण्डिनच् । कुण्डिनः । चिति सप्रकृतिकस्य समुदायस्यान्तोदात्त इष्यते । बह्वकजर्थम् । वः । उच्चकैः । एतत् सूत्रं बाहुल्येन प्रत्ययस्वरप्रतिपादक-

मेत्यत्र प्रकरणे पठितम् । कुण्डिना इत्याद्यर्थं पूर्वप्रकरणे ज्ञेयम् । तथा 'ञ्नित्या—' इति सूत्रं प्रत्ययानुबन्धेनापि प्रकृतिस्वरप्रतिपादक-मेति पूर्वत्र व्याख्यातम् । 'लिति' इति तु वैदिकप्रक्रियान्ते मूल एव व्याख्यातम् । 'तद्धितस्य' ॥६।१।१६४॥ परमपि ञित्स्वरं बाधित्वान्तोदात्तत्वमेव यथा स्यादित्येवमर्थं चितस्तद्धितस्यान्तोदात्तो विधीयते । 'गोत्रे कुञ्जादिभ्यश्च्फञ्' । कौञ्जायनः । 'कितः' ॥६।१।१६५॥ कितस्तद्धितस्यान्त उदात्तः स्यात् । 'नडादिभ्यः फक्' । नाडायनः । 'तिसृभ्यो जसः' ॥६।१।१६६॥ अन्त उदात्तः । 'उदात्त-स्वरितयोः—' इत्यस्यापवादः । तिस्रस्तिष्ठन्ति । 'सावेकाचस्तृतीया-दिर्विभक्तिः' ॥६।१।१६८॥ साविति सप्तमीबहुवचनग्रहः । तत्र य एकाच् ततः परा तृतीयादिर्विभक्तिरुदात्ता । वाचा । वाग्भ्याम् । सौ किम् । राज्ञा । एकाचः किम् । राजसु । तृतीयादिः किम् । वाचौ । विभक्तिः किम् । वाक्तरा । 'अन्तोदात्तादुत्तरपदादन्यतर-स्यामनित्यसमासे' ॥६।१।१६९॥ नित्यसमासादन्यत्र यदुत्तरपदमन्तो-दात्तमेकाच् ततः परा तृतीयादिविभक्तिरन्तोदात्ता वा स्यात् । परम-वाचा । पक्षे समासान्तोदात्ततैव । अन्तोदात्तात् किम् । अवाचा । मयूरव्यंसकादित्वात् समासे 'तत्पुरुषे तुल्यार्थ—' इत्यव्ययपूर्व-पदप्रकृतिस्वर इत्याद्युदात्तमेतत् । उत्तरपदग्रहणमेकाच्त्वेनोत्तरपदं विशेषयितुमन्यथा समासविशेषणं स्यात् । ततः शुन ऊर्क् श्वोर्ज्जे-त्यत्रायं विधिः स्यात् । अनित्यसमास इति नित्याधिकारविहितः समासः पर्युदस्यते । अग्निचिता । 'उपपदम्—' इति नित्याधिकार-समासः । तत्र 'गतिकारकोपपदात्—' इति प्रकृतिस्वरेण चित् शब्द उदात्तः । यस्तु विग्रहाभावे नित्यसमासः तत्र स्यादेव विकल्पः अवाचा सुवाचा ब्राह्मणेन इति 'नञ्सुभ्याम्—' इति उत्तरपदा-न्तोदात्तत्वम् । 'अञ्चेश्छन्दस्यसर्वनामस्थानम्' ॥६।१।१७०॥ अञ्चे-पराऽसुट्विभक्तिरुदात्ता स्यात् । प्रतीचो बाहून् । 'चौ' इति पूर्व

दान्तोऽन्तत्वं प्राप्तम् । तृतीयादिरिति वर्तमाने असर्वनामस्थानग्रहणं
सुपरिग्रहार्थम् । 'ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः' ॥६।१।१७१॥ एभ्यो-
द्विभक्तिरुदात्ता स्यात् । ऊठ् । प्रष्ठौहः । ऊठ्युपधाग्रहणं कर्तव्य-
ह मा भूत् । अक्षद्यूः । अक्षद्युवे । इदम् । आभ्याम् । अन्वादेशे
। अथो आभ्यां निपुणमधीतम् । पदादयः 'पद्दन्नोमास्हृन्निश्—'
ते षडेव । निपदश्चतुरो जहि । या दतो धावति । अपः पश्य ।
ट्नो दीर्घात्' ॥६।१।१७२॥ शसादिविभक्तिरुदात्ता भवति ।
शभिः । नेह । अष्टसु । 'शतुरनुमो नद्यजादी' ॥६।१।१७३॥ अनुम्
तृप्रत्ययस्तदन्तादन्तोदात्तात्परा नदी अजादिश्च शसादिर्विभक्ति-
ात्ता स्यात् । तुदती । तुदता । अजादिः किम् । तुदद्भ्याम् ।
तोदात्तादित्येव । जक्षती । 'अभ्यस्तानामादिः' इत्युदात्तः ।
न्महतोरुपसंख्यानम् । बृहती । बृहता । महती । महता ।
दात्तयणो हल्पूर्वात्' ॥६।१।१७४॥ उदात्तस्थाने यो यण्
पूर्वस्तस्मात्परा नदी शसादिविभक्तयश्चोदात्ताः स्युः । कर्त्री ।
ी । तृजन्तोदात्तः । उदात्तयणः किम् । कर्त्री । तृन्नन्तोऽय-
ुदात्तः । हल्पूर्वात् किम् । बहति नावा ब्राह्मण्या । नकारग्रहणं
ार्थम् । वाक्पत्नीयं कन्या । 'नोङ्धात्वोः' ॥६।१।१७५॥
योर्यणः परे शसादय उदात्ता न स्युः । ऊङ् । ब्रह्मबन्ध्वा ।
ध्वा । 'ह्रस्वनुड्भ्यां मतुप्' ॥६।१।१७६॥ ह्रस्वान्तादन्तो-
ानुटश्च परो मतुबुदात्तः स्यात् । अग्निमान् । वायुमान् ।
ण्वान् । अन्तोदात्तादित्येव । वसुमान् । स्वरविधौ व्यञ्जन-
मानवदितीह नाश्रीयते । तेन मरुत्वानित्यत्र न स्यात् ।
शच । आरेवान् । त्रेः परस्य निषेधः । त्रिवती । 'नाम-
्याम्' ॥६।१।१७७॥ मतुपि यो ह्रस्वस्तदन्तात् परो नामुदात्तो
अग्नीनाम् । सनुट्कस्य ग्रहणं किम् । धेन्वाम् । 'उदात्तयणः—'
तोदात्तः । ह्रस्वादित्येव । कुमारीणाम् । अन्तोदात्तादित्येव ।

बहुव्रीहौ समासे पूर्वपदस्य यः स्वरः उदात्तः स्वरितो वा स प्रकृ
स्यात् । न विकारमनुदात्तत्वमापद्यते । समासस्वरापवादो योगः
कार्ष्णोत्तरासङ्गः । कृष्णो मृगस्तस्य विकारः । 'प्राणिरजतादिभ्योऽ
कार्ष्णः । अञन्तत्वादाद्युदात्तः । अध्यापकपुत्रः । अध्यापकश
ण्वुलन्तो 'लिति' इति मध्योदात्तः । मनुष्यनाथः । मनुष्यश
'मनोर्जातौ' इति यदन्तत्वात् स्वरितान्तः । उदात्तग्रहणं स्वरि
ग्रहणं चेहानुवर्तते । तेन सर्वानुदात्ते पदे नायं विधिः । किं
समासान्तोदात्तत्वमेव । समभाग इति । समशब्दो हि सर्वानुदात्तः
'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः' ॥ स
पूर्वपदभूतास्तत्पुरुषे प्रकृत्या । तुल्यार्थे । तुल्यश्वेतः । सदृक्छ्वेतः
'कृत्यतुल्याख्या—' इति तत्पुरुषः । तुल्यशब्दो 'नौवयोधर्म—
इति यदन्तो 'यतोनावः' इत्याद्युदात्तः । तृतीया शङ्कुलया खण्ड
शङ्कुलाखण्डः । सप्तमी । अक्षशौण्डः । अशेर्देवन इति सप्रत्ययान्त
क्षशब्दोन्तोदात्तः । उपमानम् । शस्त्रीश्यामा । शस्त्री ङीप्प्रत्ययान्त
न्तोदात्तः । अव्ययम् । अब्राह्मणः । नञाद्युदात्तः । अव्यये नञ्कुनि
पातानामिति वाच्यम् । नेह स्नात्वाकालकः । द्वितीया । मुहूर्तसुखम्
मुहूर्तशब्दः पृषोदरादित्वादन्तोदात्तः । कृत्य । भोज्योष्णम् । भोज्यो
ण्यदन्तोन्तस्वरितः । 'वर्णो वर्णेष्वनेते' ॥६।२।३॥ एतवर्जिते वर्णवाचि
न्युत्तरपदे वर्णवाचि पूर्वपदं प्रकृत्या तत्पुरुषे । कृष्णसारङ्गः । 'कृषेर्वर्णे
इति कृष्णशब्दो नक्प्रत्ययान्तोन्तोदात्तः । वर्णः किम् । परमकृष्णः
वर्णेषु किम् । कृष्णतिलाः । अनेते किम् । कृष्णैतः । 'गाधलवण
प्रमाणे' ॥६।२।४॥ इयत्तावाचिनि तत्पुरुषे अनयोः पर
पूर्वपदं प्रकृत्या । अरित्रगाधमुदकम् । तत्प्रमाणमित्यर्थः । गोलवणम्
यावद् गवे दीयते तावदित्यर्थः । षष्ठीसमासः । अरित्रशब्द
'अर्तिलूधू—' इतीत्रप्रत्ययान्तो मध्योदात्तः । गोशब्दो डोप्रत्य
यान्तोन्तोदात्तः । स्वरव्यङ्ग्यं प्रमाणविषयत्वमेषाम् । प्रमाणे किम्

मगाधम् । परमलवणम् । 'दायाद्यं दायादे' ॥ ६।२।५॥ दायाद्य-
चे पूर्वं दायादे परे प्रकृत्या । विद्यादायादाः । विद्येति 'संज्ञायां
जनिषद—' इत्युदात्तः क्यप् । 'प्रतिबन्धि चिरकृच्छ्रयोः'
।२।६॥ कार्यसिद्धिं प्रतिबध्नाति विहन्तीति प्रतिबन्धि । ताच्छील्ये
।श्यके वा णिनिः । प्रतिबन्धिवाचि पूर्वं चिरकृच्छ्रयोस्तत्पुरुषे प्रकृत्या
र् । गमनचिरम् । गमनकृच्छ्रम् । गमनं ल्युडन्तं लित्स्वरेणाद्यु-
म् । गमनं च तच्चिरं चेति विशेषणसमासो मयूरव्यंसकादिर्वा ।
णवैकल्याच्चिरभावि कृच्छ्रयोगि वा यद् गमनं तत् कार्यसिद्धेः
बन्धि जायते । प्रतिबन्धि किम् । मूत्रकृच्छ्रः । 'पदेपदेशे'
२।७॥ व्याजवाचिनि पदशब्दे पूर्वं तत्पुरुषे प्रकृत्या । मूत्रपदेन-
ातः । मूत्रशब्दो मुचेः ष्ट्रन्प्रत्ययान्तो मूत्रयतेर्वा घञन्त आद्युदात्तः ।
षणसमासो मयूरव्यंसकादिर्वा । अपदेशे किम् । विष्णुपदम् ।
ाते वातत्राणे' ॥६।२।८॥ निवाते परे पूर्वं प्रकृत्या तत्पुरुषे ।
निवातम् । वातस्याभावो निवातं निरुद्धो वातोऽत्र वा निवातम् ।
ाब्दो गौरादिङीषन्तोऽन्तोदात्तः । वातत्राणे किम् । राज-
ते वसति । निवातशब्दोऽयं पार्श्ववाची । षष्ठीसमासः । 'शारदे-
·' ॥६।२।९॥ प्रत्यग्रवाचिनि शारदे परे पूर्वं प्रकृत्या ।
ारदमुदकम् । सद्यो रज्ज्वुद्धृतम् । प्रत्यग्रमित्यर्थः । अत्र च
समासोऽस्वपदविग्रह इष्यते । तृतीयातत्पुरुषः । रज्जुशब्दः 'सृजे-
च' इत्युप्रत्ययान्तो 'धान्येनित्' इत्यनुवृत्तेराद्युदात्तः ।
वे किम् । परमशारदम् । शरदि ऋतौ भवं यत्तदिह शारदम् ।
र्युकषाययोर्जातौ' ॥ ६।२।१०॥ अनयोः पूर्वं प्रकृत्या जाति-
ने तत्पुरुषे । प्राच्याध्वर्युः । अयं जातिवाची कर्मधारयः । तत्र
ाब्दो यत्प्रत्ययान्त आद्युदात्तः । जातौ किम् । परमाध्वर्युः ।
प्रतिरूपयोः सादृश्ये' ॥ ६।२।११॥ अनयोः पूर्वं प्रकृत्या
ं चेत् तत्पुरुषार्थः । पितृसदृशः । पितृशब्दोऽन्तोदात्तो निपा-

ः । सादृश्ये किम् । परमसदृशः । समासार्थोत्र पूज्यमानता सादृश्यम् । 'द्विगौ प्रमाणे' ॥६।२।१२॥ द्विगावुत्तरपदे सर्वं त्या प्रमाणवाचिनि तत्पुरुषे । गान्धारिसप्तसमः । सप्त समाः ाणमस्येति मात्रच् । 'प्रमाणे लो द्विगोर्नित्यम्' इति लुक् । न्धारिशब्दः कर्दमादित्वादाद्युदात्तो मध्योदात्तो वा । द्विगौ किम् । हिप्रस्थः । प्रमाणे किम् । परमसप्तसमः । 'गन्तव्यपण्यं वाणिजे' ।२।१३॥ गन्तव्यं वा पण्यवाचि प्रकृत्या वाणिजे परे तत्पुरुषे । वाणिजः । मद्रशब्दो रक्प्रत्ययान्तत्वादन्तोदात्तः । गन्तव्यपण्यं किम् । मवाणिजाः । 'मात्रोपज्ञोपक्रमच्छाये नपुंसके' ॥६।२।१४॥ एषु वतत्पुरुषान्तेषु पूर्वं प्रकृत्या । समुद्रमात्रं पाणिनीयम् । अत्र मुद्रस्य तुल्यप्रमाणमित्यस्वपदविग्रहः षष्ठीसमासः । समुद्रशब्दः ाटलापालङ्काम्बासागरार्थानाम्' इत्यन्तोदात्तः । व्याड्युपज्ञं दुष्क- म् । व्याडिरितीञन्तत्वादाद्युदात्तः । आढ्योपक्रमम् । एत्यैनं यतीत्याढ्यः । घञर्थे कः । पृषोदरादित्वात् ह्रस्वम् । थाथादि- रेणान्तोदात्तः । इषुच्छायम् । इषुशब्दः 'इषेः किच्च' इत्युप्रत्यया- ' 'धान्ये नित्' इत्यनुवृत्तेराद्युदात्तः । नपुंसके किम् । ष्यच्छाया । 'सुखप्रिययोर्हिते' ॥६।२।१५॥ अनयोः परयोः पूर्वं त्या हितवाचिनि तत्पुरुषे । वचनसुखम् । व्याहरणप्रियम् । ानाधिकरणसमासौ । वचनव्याहरणे लित्स्वरः । हितं किम् । मसुखम् । 'प्रीतौ च' ॥६।२।१६॥ प्रीत्यर्थे गम्ये तथा । ब्राह्मण- ं पायसम् । कन्याप्रियो मृदङ्गः । ब्राह्मणः प्रत्ययस्वरेणान्तोदात्तः । न्याशब्दः स्वरितान्तः । प्रीतौ किम् । राजसुखम् । 'स्वं ामिनि' ॥६।२।१७॥ स्वामिनि परे स्ववाचि प्रकृत्या । गोस्वामी । किम् । परमस्वामी । 'पत्यावैश्वर्ये' ॥६।२।१८॥ पत्यौ परे र्यैर्थे तत्पुरुषे पूर्वं प्रकृत्या । गृहपतिः । गृहशब्दोयं 'गेहे कः' कप्रत्ययान्तोन्तोदात्तः । ऐश्वर्ये किम् । ब्राह्मणो वृषलीपतिः ।

हियर्थः । 'न भूवाक्चिद्दिधिषु' ॥६।२।१९॥ पत्यौ परे
त्पुरुषे भ्वादीनि प्रकृत्या न स्युः । भूपतिः । दिधिषूपतिः
समासान्तोदात्तत्वमेव । 'वा भुवनम्' ॥६।२।२०॥ पत्यौ
ा वा । भुवनपतिः । 'भूसूधूभ्रस्जिभ्यश्छन्दसि' इति
ोदात्तः । 'आशङ्काबाधनेदीयस्सु संभावने' ॥६।२।२१॥
पूर्वं प्रकृत्या संभावनार्थे तत्पुरुषे । अस्तित्वाध्यवसायः
गमनाशङ्कम् । गमनमाशङ्क्यत इति संभाव्यते । गमना-
गमनमाबाध्यत इति संभाव्यते । गमननेदीयः । गमन-
ते संभाव्यते । षष्ठीसमासा एते । क्लीबता क्रियाविशेषण-
व्ययीभावश्च' इति चकाराद्वा लिङ्गस्य लोकाश्रयत्वाद्वा ।
र्वे' ॥६।२।२२॥ पूर्वशब्दे परे पूर्वं प्रकृत्या भूतपूर्वार्थे
आढ्यो भूतपूर्वः आढ्यपूर्वः । पूर्वशब्दो वृत्तिविषयो
ेते । तत्र विशेषणसमासो मयूरव्यंसकादिर्वा । भूतपूर्वे
रमपूर्वः । 'सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये'
। एषु परेषु पूर्वपदं प्रकृत्या सामीप्यार्थे तत्पुरुषे ।
( । मद्रसनीडम् । मद्रसमर्यादम् । मद्रसवेशम् । मद्र-
'विस्पष्टादीनि गुणवचनेषु' ॥६।२।२४॥ एतानि प्रकृत्या
परेषु । विस्पष्टकटुकम् । विस्पष्टं कटुकमिति विगृह्य
' इति समासः । एवं सर्वत्र । विस्पष्टादयोत्र प्रवृत्तिनिमित्त-
णानि । कटुकादयस्तु गुणवद् द्रव्यं वदन्ति । अतो
ान्न कर्मधारयः । विस्पष्टो 'गतिरनन्तरः' इत्याद्युदात्तः ।
ाम् । अव्ययस्वरेणाद्युदात्तो विचित्रशब्दः । व्यक्तलवणम् ।
'उदात्तस्वरितयोर्यणः—' इत्यादिना स्वरितः । ये
ठ्यन्ते तत्र संपन्ननिपुणौ 'थाथ—' इत्यन्तोदात्तौ । पटु-
प्रत्ययकृत्प्रत्ययान्तावन्तोदात्तौ । कुशलः कृत्स्वरेणान्तो-

भिकरण्यात् कर्म° PC. २. विस्पष्टशब्दो Deo.
प्र. कौ. ]

दात्तः । चपलशब्दः 'चुपेरच्चोपधायाः' इत्यन्तोदात्तः
तत्र वर्तते । तत्पुरुष इति निवृत्तम् । 'अज्यावमक
कर्मधारये' ॥६।२।२५॥ एषूत्तरपदेषु पूर्वं प्रकृत्या
धारये । गमनश्रेष्ठम् । गमनश्रेयः । वचनज्येष्ठम् ।
गमनकनिष्ठम् । गमनपापिष्ठम् । गमनपापीयः । भावे किम्
गमनम् । तच्छ्रेयो गमनश्रेयः । कर्मधारये किम् । :
गमनश्रेयः । 'कुमारश्च' ॥६।२।२६॥ पूर्वपदं कर्मधार
कुमारश्रमणा । कुमारोन्तोदात्तः । 'आदिः प्रत्येनसि
कुमारस्यादिरुदात्तः प्रत्येनसि परे कर्मधारये । कु
अतिगतमेनोस्य प्रत्येनाः । 'पूगेष्वन्यतरस्याम्' ॥६।
वाचिन्युत्तरपदे कुमारस्यादिर्वोदात्तः । कुमारचातकाः । कु
चातकादौ 'पूगाञ्ञ्यो ग्रामणीपूर्वात्' इति ञ्यः । त
स्य बहुषु' इति लुक् । 'इगन्तकालकपालभगालशर
॥६।२।२९॥ एषु परेषु पूर्वं प्रकृत्या द्विगौ । पञ्चारत्नयः प्रमा
मात्रचो द्विगौ लुक् । पञ्चमास्यः । पञ्चमासान् भृतो
वा । द्विगोर्यप् । पञ्चवर्षः । 'वर्षाल्लुक् च' इति :
पञ्चकपालः । पञ्चभगालः । पञ्चशरावः । अत्र 'सं
भक्षाः' इति कृताणो 'द्विगोर्लुगनपत्ये' इति लुक् । '
इति पञ्चशब्द आद्युदात्तः । 'बह्वन्यतरस्याम्' ॥६।२।
दिषूत्तरपदेषु बहुशब्दः प्रकृत्या । बह्वरत्निः । बहुर
तस्य प्रकृतिस्वरे कृते यत्र यणादेशस्तत्र 'उदात्तस्व
इत्येष स्वरः । बहुमास्यः । बहुकपालः । बहुभगालः ।
'दिष्टिवितस्त्योश्च' ॥६।२।३१॥ अनयोरिगन्तत्वेपि पू
वा । पञ्चदिष्टिः । दशवितस्तिः । 'सप्तमी सिद्धशु
ष्ववकालात्' ॥६।२।३२॥ सप्तमीस्वरः कृत्स्वरेण बाधितः प्र

१. प्रतिगुप्त° PC. २. प्रतिप्रसूयते $Dc_3$.

ु सप्तम्यन्तं प्रकृत्या सा चेत् सप्तमी कालान्न । साङ्काश्य-
। निधनशुष्कः । कुम्भीपक्वः । चक्रबन्धः । 'साङ्काश्य-
प—' इत्यन्तोदात्तो मध्योदात्तश्च । निधनेति क्युप्रत्ययान्तो
तः । कुम्भीति ङीषन्तोन्तोदात्तः । चक्रेत्यन्तोदात्तः । 'परि-
वर्ज्यमानाहोरात्रावयवेषु' ॥६।२।३३॥ पर्यादयः प्रकृत्या
ादिषूत्तरपदेषु । अव्ययीभावार्थोयमारम्भः । बहुव्रीहि-
ोः सिद्धत्वात् । वर्ज्यमाने परित्रिगर्तं वृष्टो देवः । परि-
। परिपूर्वरात्रम् । एवं प्रतिपूर्वाह्णादि । 'उपसर्गाश्चाभिवर्जम्'
न्तानि पूर्वपदानि । 'राजन्यबहुवचनद्वन्द्वेन्धकवृष्णिषु'
३॥ अभिषिक्तवंश्यक्षत्रियवाचिनोत्र राजन्यास्तेषां बहुवचना-
द्वन्द्वोन्धकवृष्णिषु वर्तते तत्र पूर्वपदं प्रकृत्या । शिनिवासुदेवाः ।
दात्तः । तदपत्येष्वभेदेन वर्तते । राजन्येति किम् । द्वैप्य
। द्वीपे भवा द्वैप्याः । वैमेरपत्यानि युवानः वैमायनाः ।
णय एते नाभिषिक्ता न च क्षत्रियाः । बहुवचने किम् ।
सुदेवौ । द्वन्द्वे किम् । वृष्णीनां कुमारा वृष्णि-
अन्धकवृष्णिषु किम् । कुरुपञ्चालाः ॥ 'संख्या' ॥६।२।३५॥
न्द्वे पूर्वपदं प्रकृत्या । एकादश । 'इणभीका—'
तत्वादाद्युदात्तः । 'आचार्योपसर्जनश्चान्तेवासी' ॥६।२।३६॥
ठनछात्रद्वन्द्वे पूर्वं प्रकृत्या । आपिशलपाणिनीयाः । अपि-
यमापिशलिस्तेन प्रोक्तमापिशलम् । 'इञश्च' इत्यण् ।
तेप्यापिशलाः । प्रोक्ताल्लुक् । आपिशलेर्वा छात्रा आपिशलाः ।
र्जनः किम् । छान्दसवैयाकरणाः । अन्तेवासीति किम् ।
ाणिनीये शास्त्रे । 'कार्तकौजपादयश्च' ॥६।२।३७॥ एषां
ं प्रकृत्या । कार्तकौजपौ । कृतस्यायं कार्तः । कुजपस्यायं
अणन्तौ । सावर्णिमाण्डूकेयौ । सावर्णिरिञन्तः । आवन्त्य-
अवन्तेरपत्यानि बहूनि तन्निवासो जनपदः । तथा

अश्मकाः । पैलश्यापर्णेयाः । पीलाया अपत्यं पैलस्तस्यापत्यं युवा 'अणो—' इति कृतस्य फिञः 'पैलादिभ्यश्च' इति लुक् । श्यापर्ण बिदादिः । तस्यापत्यं स्त्री श्यापर्णी । तस्यापत्यं युवा श्यापर्णेयः कपिश्यापर्णेयः । कपिरन्तोदात्तः । तस्यापत्यं बहुत्वे कपिबोधादाङ्गिरस इत्युत्पन्नस्य यञो लुक् । शैतिकाक्षपाञ्चालेयाः । शितिकक्षस्यापत्यम् । ऋष्यण् । तदपत्ये यूनि य इञ् तस्य 'ण्यक्षत्रियार्ष—' इति लुक् । पाञ्चालस्यापत्यं स्त्री पाञ्चाली । तदपत्यं युवा पाञ्चालेयः शैतिकाक्षपाञ्चालेयौ । कटुकवाधूलयाः । कटेरौणादिकोकप्रत्यये संज्ञा । कटुकस्यापत्यम् । इञ् । तस्य 'बह्वच इञः—' इति लुक् वधूलयस्यापत्यं वाधूलयः । शाकलशुनकाः । शाकलसणका इति केचित् । शकलस्यापत्यं शाकल्यस्तस्य छात्राः । कण्वादित्वादण् शुनकस्यापत्यम् । बिदादिभ्योऽञ् तस्य बहुषु लुक् । सणकशब्दादुत्पन्नस्येञः 'बह्वच इञः—' इति लुक् । शणकबाभ्रवाः । आर्चाभिमौद्गलाः । ऋचाभेन प्रोक्तमधीयते आर्चाभिनः । 'वैशम्पायनान्ते—' इति णिनिः । मुद्गलः कण्वादिस्तदपत्यस्य छात्राः । कुन्तिसुराष्ट्राः । चिन्तिसुराष्ट्राः । कुन्तेः सुराष्ट्रस्य चापत्येषु बहुषु तन्निवासे वा जनपदे द्वन्द्वः । तण्डवतण्डाः । पचाद्यजन्तौ । गर्गादित्वाद्यञ् । तत्रापत्यबहुत्वे यञो लुक् । अविमत्तकामविद्धाः । अविमत्तो नञ्स्वरेणाद्युदात्तः । द्वयोरप्यपत्यबहुत्वे 'बह्वचः—' इति यञो लुक् । कठकालापाः । कठकौथुमाः । कौथुमलौकाक्षाः । कठेन प्रोक्तमधीयते । 'वैशम्पायनान्तेवासि—' इति णिनिः । कठचरकाल्लुक् । कलापिना प्रोक्तमधीयते कालापाः । 'कलापिनोण्' । 'सब्रह्मचारी—' इति टिलोपः । कुथुमिना प्रोक्तमधीयते । प्राग्दीव्यतोण् । पूर्ववट्टिलोपः । लोकाक्षेण प्रोक्तमधीयते लौकाक्षाः । लोकाक्षस्य वापत्यं लौकाक्षिः । स्त्रीकुमारम् । स्त्री अन्तोदात्तः । मौदपैप्पलादाः । मौदपैप्पलादाः । मुदस्यापत्यं मौदिस्तच्छात्राः । तथा पैप्पलादाः ।

योजनं पक्षे समासान्तः । वत्सजरत् । वत्सोन्तोदात्तः ।
ार्थिवाः । सुश्रुतस्य पृथोश्छात्राः । जरामृत्यु । आज्या-
। यजेर्ण्यत् । 'यजयाच—' इति कुत्वाभावः । वचेर्ण्यत् ।
त्वम् । 'तित् स्वरितम्' इत्यन्तस्वरितः । इहाचार्योप-
तेवासिनां पाठः प्रपञ्चार्थः । 'महान् व्रीह्यपराह्णगृष्टीष्वासजाबाल-
तहैलिहिलरौरवप्रवृद्धेषु' ॥६।२।३८॥ द्वन्द्व इति निवृत्तम् ।
षु दशसु उत्तरपदेषु महानिति पूर्वपदं प्रकृत्या । महाव्रीहिः ।
ह्णः इत्यादि । महानन्तोदात्तः । तस्य यः प्रतिपदोक्तः
त्—' इति समासः तत्रैव स्वरः । अन्यत्र षष्ठीसमासे
न्तोदात्तत्वमेव । 'क्षुल्लकश्च वैश्वदेवे' ॥६।२।३९॥ क्षुल्लको
वैश्वदेवे उत्तरपदे प्रकृत्या । क्षुल्लकवैश्वदेवम् । क्षुधं लातीति
ततोऽज्ञातादिषु 'प्रागिवात् कः' इत्ययमन्तोदात्तः । 'उष्ट्रः
न्योः' ॥६।२।४०॥ एतयोरुत्तरपदयोरुष्ट्रः पूर्वपदं प्रकृत्या ।
दं । उष्ट्रवामि । उष्ट्रः ष्ट्रन्प्रत्ययान्त आद्युदात्तः । कर्म-
। षष्ठीसमासो वा । 'गौः सादसादिसारथिषु' ॥६।२।४१॥
षु गोशब्दः पूर्वपदं प्रकृत्या । गोसादः । गोः सादः । गां
ोति वा । गोः सादिः गोसादिः । गोसारथिः । 'कुरुगार्हपत-
सूतजरत्यश्लीलदृढरूपापारेवडवा तैतिलकद्रूः पण्यकम्बलो
राणां च' ॥६।२।४२॥ एषामष्टानां समासानां पूर्वं प्रकृत्या
रादेश्चाकृतिगणस्य पूर्वपदम् । कुरुगार्हपतम् । 'कृग्रोरुच्च
ः कुप्रत्ययान्तोन्तोदात्तः । 'कुरुवृज्योर्गार्हपत इति वाच्यम्' ।
र्हपतम् । वृजिशब्द आद्युदात्तः । रिक्तो गुरुः रिक्तगुरुः ।
विभाषा' इति रिक्त आद्युदात्तोन्तोदात्तो वा । असूता
असूतजरती । अश्लीला दृढरूपा अश्लीलदृढरूपा । लावण्य-
ः । असूताश्लीलौ नञ्समासत्वादाद्युदात्तौ । पारे वडवेव
। निपातनादेवायमिवार्थे समासो विभक्त्यलोपश्च ।

पारशब्दो घृतादित्वादन्तोदात्तः । तैतिलानां कद्रूस्तैतिलकद्रूः ।
लिनोपत्यं छात्रो वा तैतिलोऽणन्तः । पण्यकम्बलः । पण्यो र
त्वादाद्युदात्तः । पण्यकम्बलः । संज्ञायामिति वाच्यम् । ३
समासान्तोदात्तत्वमेव । दासीभारः । देवहूतिः । देवभूतिः ।
नीतिः । पूर्वपदान्तोदात्तानि । वसुनीतिः । पूर्वमाद्युदात्तम् । अ
ओषो धीयतेस्यां किप्रत्ययान्तः । ओषो घञन्त आद्युदा
चन्द्रमाः । 'चन्द्रे मोसिः' इत्यसिप्रत्ययान्तः । चन्द्रो रक्प्र
न्तोन्तोदात्तः।यस्य तत्पुरुषस्य पूर्वपदप्रकृतिस्वरत्वमिष्यते न च
स सर्वो दासीभारादिषु द्रष्टव्यः । 'चतुर्थी तदर्थे' ॥६।२।४३॥ च
न्ताभिधेयार्थे उत्तरपदे चतुर्थ्यन्तं प्रकृत्या । यूपदारु । यूप आद्युदा
'कुयुभ्यां च' इति पप्रत्ययान्तः । तत्र निदित्यनुवर्तते । तदर्थे कि
कुबेरबलिः । प्रकृतिविकारभावे इष्यते । इह न । अश्वघार
'अर्थे' ॥६।२।४४॥ अर्थे परे चतुर्थ्यन्तं प्रकृत्या । मात्रर्थम् ।
र्थम् । मातृपितृशब्दावन्तोदात्तौ । 'क्ते च' ॥६।२।४५॥ क्तान्ते
पूर्वं प्रकृत्या । गोहितम् । गोरक्षितम् । 'कर्मधारयेऽनिष्ठा' ॥६।२।
कर्मधारये क्तान्ते परे पूर्वमनिष्ठान्तं प्रकृत्या । श्रेणिकृताः । श्रेणि
दात्तः । कर्मधारये किम् । श्रेण्या कृतं श्रेणिकृतम् । अनिष्ठा कि
कृताकृतम् । 'अहीने द्वितीया' ॥६।२।४७॥ क्तान्ते परे द्वितीय
प्रकृत्या अहीनवाचिनि समासे । कष्टश्रितः । कष्टशब्दोन्तोदा
अहीने किम् । कान्तारातीतः । हीनं त्यक्तं विभक्तमिति याव
द्वितीयानुपसर्गे इति वाच्यम् । इह न । सुखप्राप्तः । दुःखाप
'तृतीया कर्मणि' ॥६।२।४८॥ कर्मार्थकक्तान्ते परे तृतीय
प्रकृत्या । अहिहतः । रुद्रहतः । 'आङि श्रिहनिभ्याम्
इत्यन्तोदात्तोऽहिर्व्युत्पादितः । केचिदाद्युदात्तमिच्छन्ति । रुद्रो रै
प्रत्ययान्तोन्तोदात्तः । कर्मणि किम् । रथेन यातो रथयात

१. त्यस्यन्तोयम् PC. २. श्रेणिशब्द आ PC. ३. रुक° PC.

त्यर्थत्वात् कर्तरि क्तः । 'गतिरनन्तरः' ॥६।२।४९॥ कर्मार्थक्तान्ते
रे गतिसंज्ञः प्रकृत्या । प्रकृतः । संहृतः । अनन्तरे किम् ।
भ्युद्धृतः । व्यवहितगतेर्न । अनन्तरस्य स्यादेव । कर्मणीत्येव ।
कृतः कटं देवदत्तः । कारकपूर्वस्य तु सतिशिष्टत्वात् थाथादिस्वर
व । दूरादागत इति । 'तादौ च निति कृत्यतौ' ॥६।२।५०॥
तकारादौ निति तुशब्दवर्जिते कृति परे गतिरनन्तरः प्रकृत्या ।
त्स्वरापवादः । प्रकर्ता । तृन् । प्रकर्तुम् । प्रकृतिः । तादौ
केम् । प्रजल्पाकः । निति किम् । प्रकर्ता । कृद्ग्रहं उपदेशे
ार्थः । इहापि स्यात् । प्रलपिता । अतौ किम् । आगन्तुः ।
तवै चान्तश्च युगपत्' ॥६।२।५१॥ तवैप्रत्ययस्यान्त उदात्तः
ातिश्च प्रकृत्या युगपदुभयं स्यात् । अन्वेतवै । कृत्स्वरापवादः ।
अनिगन्तोऽञ्चतौ वप्रत्यये' ॥६।२।५२॥ अनिगन्तो गतिर्वप्रत्यये-
ञ्चतौ परे प्रकृत्या । प्राङ् । प्राञ्चौ । प्राञ्चः । एकादेश उदात्तः
रितो वा । अनिगन्त इति किम् । प्रत्यङ् । प्रत्यञ्चौ । प्रत्यञ्चः ।
उत्तरपदप्रकृतिस्वर इह स्यात् । वप्रत्यये किम् । उदञ्चनः ।
ाः 'अनिगन्तोऽञ्चतौ वप्रत्यये' इत्येष स्वरः परत्वात् स्यात् । पराचः ।
न्यधी च' ॥६।२।५३॥ वप्रत्ययान्तेऽञ्चतौ परे इगन्तावपि न्यधी
कृत्या । न्यङ् । न्यञ्चौ । न्यञ्चः । अध्यङ् । अध्यञ्चौ । अध्यञ्चः ।
उदात्तस्वरितयोः—' इत्यञ्चतेरकारः स्वरितः । 'ईषदन्यतरस्याम्'
६।२।५४॥ उत्तरपदे प्रकृत्या । ईषत्कडारः । ईषदित्ययमन्तोदात्तः ।
ग्भेद इत्यादौ कृत्स्वर एव । 'हिरण्यपरिमाणं धने' ॥६।२।५५॥
रण्यपरिमाणवाचि पूर्वपदं धने परे प्रकृत्या वा । द्विसु-
र्णधनम् । द्वौ सुवर्णौ परिमाणमस्येति द्विसुवर्णं तदेव धनमिति
र्मधारयः । बहुव्रीहावपि परत्वाद्विकल्प एव । द्विसुवर्णधनः ।
रण्यग्रहः किम् । प्रस्थधनम् । परिमाणं किम् । काञ्चन-
नम् । धने किम् । निष्कमाला । 'प्रथमोऽचिरोपसंपत्तौ' ॥

१. °हितस्याभेर्न PC. २. पश्चैतदुभयं PC. ३. एवेह PC.

॥६।२।५६॥ अभिनवार्थे प्रथमशब्दः पूर्वपदं प्रकृत्या । प्रथमवै
करणः । संप्रत्यध्येतुं प्रवृत्त इत्यर्थः । प्रथमशब्दोन्तोदात्त
अचिरोपसंपत्तौ किम् । प्रथमवैयाकरणः । आद्यो वैयाकरणानामित्य
'कतरकतमौ कर्मधारये' ॥६।२।५७॥ प्रकृत्या वा । कतरकला
कतमकठः 'आर्यो ब्राह्मणकुमारयोः' ॥६।२।५८॥ आर्यः प्रकृ
वा । आर्यब्राह्मणः । आर्यकुमारः । ण्यदन्तत्वात् स्वरितः । क
धारय इत्येव । आर्यस्य ब्राह्मण आर्यब्राह्मणः[1] । 'राजा
६।२।५९ ॥ ब्राह्मणकुमारयोः प्रकृत्या वा । राजब्राह्मण
कर्मधारय इत्येव । राज्ञो ब्राह्मणो राजब्राह्मणः । 'षष्ठी प्रत्येनसि
॥६।२।६०॥ राजशब्दः प्रत्येनसि परे प्रकृत्या वा । राज्ञः प्रत्ये
राजप्रत्येनाः । षष्ठी किम् । राजा चासौ प्रत्येनाश्च राजप्रत्येना
'क्ते नित्यार्थे' ॥६।२।६१॥ क्तान्त उत्तरपदे नित्यार्थे सम
पूर्वपदं प्रकृत्या वा । नित्यप्रहसितः । सततप्रहसितः । 'काल
इति द्वितीयासमासः । नित्यशब्दस्त्यबन्तत्वादाद्युदात्तः । सततश
भावक्तान्तो थाथादि स्वरेणान्तोदात्तः[2] । कर्मक्तान्तस्तु गतिस्वरेणाद्युदा
नित्यार्थे किम् । मुहूर्तप्रहसितः । 'ग्रामः शिल्पिनि' ॥६।२।६
ग्रामः प्रकृत्या शिल्पवाचिनि परे । ग्रामनापितः । ग्राम आद्युदात्त
शिल्पिनि किम् । ग्रामरथ्या । 'राजा च प्रशंसायाम्' ॥६।२।६
राजा प्रकृत्या वा शिल्पवाचिनि परे प्रशंसा चेत् समासार्थः । र
नापितः । शिल्पिनीत्येव । राजहस्ती । 'आदिरुदात्तः' ॥६।२।६
इत उत्तरं पूर्वपदस्यादिरुदात्त इत्येतदधिकृतम्[3] । 'सप्तमीहारि
धर्म्येहरणे' ॥६।२।६५॥ सप्तम्यन्तं हारिवाचि च पूर्वपदमाद्यु
हरणादन्यस्मिन् धर्म्यवाचिनि उत्तरपदे । हारीति देयं यः स्वीकर
सः । धर्म्यमित्याचारनियतं देयम् । स्तूपेशाणः । मुकुटेकार्षापणम्[4]
हलेद्विपदिका । 'संज्ञायाम्' इति समासः । 'कारनाम्नि च'

१. PC. has after it प्रत्ययान्तोदात्तं परम् । २. भावक्तप्रत्ययान्तोद
PC. ३. क्रियते PC. ४. °पणः । PC.

न्तेरलुक् । हारी याज्ञिकाश्वः । वैयाकरणहस्ती । क्वचिदयमाचारः ादिषु शाणादि देयं याज्ञिकादीनामश्वादीति । धर्म्ये किम् । बेरमः । अहरणे किम् । वाडवहरणम् । वाडवस्य बीजनिषेकात् ात् पुष्ट्यर्थं यद्दीयते तद्धरणमुच्यते । परोपि कृत्स्वरो हारिस्वरेण यते इति हरणनिषेधो ज्ञापयति । तेन वाडवहार्यमिति हारिस्वरः येत् । 'युक्ते च' ॥६।२।६६॥ तत्परार्थे समासे पूर्वस्यादिरुदात्तः । ल्लवः । अश्वबल्लवः । 'विभाषाऽध्यक्षे' ॥६।२।६७॥ अध्यक्षे रपदे पूर्वपदमाद्युदात्तं वा । गवाध्यक्षः । 'पापं च शिल्पिनि' ॥६। ८॥ शिल्पिवाचिन्युत्तरपदे पापमाद्युदात्तम् । पापनापितः । पापा- कुत्सितैः' इति प्रतिपदोक्ते समासे स्यात् । इह न । पापस्य तः पापनापितः । 'गोत्रान्तेवासिमाणवब्राह्मणेषु क्षेपे' ॥६।२।६९॥ सिश्रुतः । कुमारीदाक्षाः । भिक्षामाणवः । श्राद्धब्राह्मणः । नवात्स्यः । कुमार्यादिलाभकामा ये दाक्षादिभिः प्रोक्तानि ाण्यधीयते तच्छिष्यतां वा प्रतिपद्यन्ते ते एवं क्षिप्यन्ते । ङ्गानि मैरेये' ॥६।२।७०॥ मैरेये परे तदङ्गवाचीनि पूर्वपदान्याद्यु- ानि । गुडमैरेयः । 'भक्ताख्यास्तदर्थेषु' ॥६।२।७१॥ अन्नवाचिन- र्थे परे आद्युदात्ताः । भाजीकंसः । भिक्षाकंसः । तदर्थेषु [ । भिक्षाप्रियः । 'गोबिडालसिंहसैन्धवेषूपमाने' ॥६।२।७२॥ मानवाचिषूत्तरपदेषु पूर्वस्यादिरुदात्तः । धान्यं गौरिव धान्य- । गवाकृत्या संनिवेशितमुच्यते । एवं गोबिडालः । तृणसिंहः । सैन्धवः । उपमाने किम् । परमसिंहः । 'अके जीविकार्थे' २।७३॥ अकप्रत्ययान्ते परे पूर्वमाद्युदात्तं जीविका चेत् समासार्थः ।

वडवाश्वाय PC. २. °दात्तं वा PC. ३. एषु परेषु पूर्वस्यादिरुदात्तः त् समासार्थः । गोत्रे-ओदनवात्स्यः । अन्तेवासिनि-ओदनपाणिनीयाः । -भिक्षामाणवः । ब्राह्मणे-श्राद्धब्राह्मणः । ओदनलाभार्थं ये वात्स्यगोत्रत्व- नीयशिष्यत्व-माणवब्राह्मणत्वानि प्रतिपद्यन्ते त एवं क्षिप्यन्ते । PC. कान्ते PC.

न्तलेखकः । 'प्राचां क्रीडायाम्' ॥६।२।७४॥ प्राच्यक्रीडायां समासार्थे अके परे पूर्वस्यादिरुदात्तः । उद्दालकपुष्पभञ्जिका । प्राचां किम् । जीवपुत्रप्रचायिका । इयमुदीचां क्रीडा । 'अणि नियुक्ते' ॥६।२।७५॥ अणन्ते परे पूर्वमाद्युदात्तं नियुक्ते । छत्रधारः । नियुक्ते किम् । काण्डलावः । 'शिल्पिनि चाकृञः' ॥६।२।७६॥ शिल्पिन्यणन्ते परे पूर्वमाद्युदात्तम् । तन्तुवायः । अकृञः किम् । कुम्भकारः । 'संज्ञायां च' ॥६।२।७७॥ पूर्ववत् । तन्तुवायो नाम कीटः । अकृञ इत्येव । रथकारो नाम ब्राह्मणः । 'गोतन्तियवं पाले' ॥६।२।७८॥ पाले परे एतान्याद्युदात्तानि । गोपालः । तन्तिपालः । यवपालः । 'णिनि' ॥६।२।७९॥ णिनन्ते परे पूर्वमाद्युदात्तम् । पुष्पहारी । 'उपमानं शब्दार्थप्रकृतावेव' ॥६।२।८०॥ उपमानवाचि पूर्वं शब्दार्थप्रकृतावेव णिनन्ते परे । पुष्पहारी । उपमानं नियम्यते । उष्ट्रक्रोशी । शब्दार्थप्रकृतौ किम् । वृकप्रेक्षी । उपसर्गवति मा भूत् । खरोच्चारी । एवेति अनुपमानेपि यथा स्यात् । पुष्कलजल्पी । 'युक्तारोह्यादयश्च' ॥६।२।८१॥ एते समासा आद्युदात्ताः । युक्तारोही । आगतरोही । आगतयोधी । आगतनर्दी । आगतप्रहारी । एते णिन्नन्ताः । णिनीत्यस्यै-वोदाहरणार्थः पाठः पूर्वोत्तरपदनियमार्थो वा । इह न । वृक्षारोही युक्ताध्यायीति । आगतमत्स्या । क्षीरहोता । भगिनीभर्ता । ग्राम-गोधुक् । अश्वत्रिरात्रः । गर्गत्रिरात्रः । व्युष्टत्रिरात्रः । शणपादः । एते षष्ठीसमासाः । एकशितिपात् । एकः शितिः पादोस्येति त्रिपदो बहुव्रीहिः तत्रैकशितिः 'तद्धितार्थोत्तरपद—' इति तत्पुरुषस्तस्य निमित्ति-स्वरबलीयस्त्वादन्तोदात्तता प्राप्तेत्यत्र पाठः । तेन द्विशितिपादित्यत्र शितिरुदात्तः । निमित्तस्वरबलीयस्त्वस्याप्येकशितिपात्स्वरवचनमेव

१. अण्यन्ते Dc3. २. ब्राह्मणः omitted PC. ३. पूर्वं तथा PC ४. परे तथा । उष्ट्रकोशी । PC. ५. °नन्दी । PC. ६. तेनेह न । PC ७. इति निमित्तस्वरबलीयस्त्वा.

तम् । पात्रेसमितादयश्च युक्तारोह्यादयस्ततस्तेप्याद्युदात्ताः ।
काशतुषभ्राष्ट्रवटं जे' ॥६।२।८२॥ दीर्घान्ताः काश तुष भ्राष्ट्र वट
नपरे आद्युदात्ताः। कुटीजः। काशजः। तुषजः। भ्राष्ट्रजः। वटजः।
्यात् पूर्वं बह्वचः' ॥६।२।८३॥ जे परे बह्वचोन्त्यात् पूर्वमुदात्तम्।
रजः। मन्दुरजः। वडवाजः। बह्वचः किम्। दग्धजानि तृणानि।
 निवसन्तः'. ॥६।२।८४॥ अनिवसद्वाचि पूर्वमाद्युदात्तं ग्रामे
मल्लग्रामः। वणिग्ग्रामः। समूह इत्यर्थः। अनिवसन्तः किम्।
ग्रामः। 'घोषादिषु च' ॥६।२।८५॥ एषु पूर्वं तथा। दाक्षिघोषः।
। पल्लव। बदरी। पिङ्गल। पिशङ्ग। माला। रक्षा।
। शाल्मली। अश्वत्थ। तृण। दाक्षिशाल्मली। शाल्मलि-
। दाक्षिकूटः। 'छात्र्यादयः शालायाम्' ॥६।२।८६॥
यामुत्तरपदे तथा। छात्रिशाला। छात्रि। ऐलि। भाण्डि।
ड। आखण्डि। आघडि। गोमि। यदा शालान्तः समासः
तदापि 'तत्पुरुषे शालायाम्—' इत्येतस्माद्विप्रतिषेधेनायमेव
। छात्रिशालम्। 'प्रस्थेवृद्धमकर्क्यादीनाम्' ॥६।२।८७॥
परे कर्क्यादिवर्जितमवृद्धमाद्युदात्तम्। इन्द्रप्रस्थः। अवृद्धं
। दाक्षिप्रस्थः। अकर्क्यादीनां किम्। कर्कीप्रस्थः। कर्की।
। मकरी। कर्कन्धू। शमी। करीर। कैरट। कवल।
। 'मालादीनां च' ॥६।२।८८॥ प्रस्थे परे एषामादिरुदात्तः।
प्रस्थः। माला। शाला। द्राक्षा। क्षामा। काञ्ची। एक। शोण।
। एकशोणयोः 'एङ् प्राचां देशे' इति वृद्धत्वम्। 'अमह-
नगरेनुदीचाम्' ॥६।२।८९॥ नगरे परे महन्नववर्जितं पूर्व-
ात्तं तच्चेदुदीचां न। सुह्मनगरम्। अमहन्नवं किम्।
गरम्। नवनगरम्। अनुदीचां किम्। कान्तीनगरम्। 'अर्मे
 द्व्यच् त्र्यच्' ॥६।२।९०॥ अर्मे परे द्व्यच् त्र्यच्
ान्तं पूर्वमाद्युदात्तम्। गुप्तार्मम्। कुक्कुटार्मम्। अवर्ण किम्।

बृहदर्मम् । ह्यच् त्र्यच् किम् । कपिञ्जलार्मम् । अमहन्नवमित्येव । महार्मम् । नवार्मम् । 'न भूताधिकसंजीवमद्राश्मकज्जलम्' ॥६।२।९१॥ अर्मे परे एतान्याद्युदात्तानि न स्युः । भूतार्मम् । अधिकार्ममित्यादि । दिवोदासादयश्छन्दस्याद्युदात्ताः । दिवोदासाय गायत । वध्र्यश्वाय दाशुषे । 'अन्तः' ॥६।२।९२॥ अधिकारोऽयं प्रागुत्तरपदादिरित्यस्मात् । 'सर्वं गुणकार्त्स्न्ये' ॥६।२।९३॥ पूर्वपदसर्वस्यान्त उदात्तो गुणकार्त्स्न्यं चेदर्थः । सर्वश्वेतः । सर्वं किम् । परमश्वेतः । आश्रयव्याप्त्या परमत्वं श्वेतस्येति गुणकार्त्स्न्ये वर्तते । गुणे किम् । सर्वसौवर्णः । कार्त्स्न्ये किम् । सर्वेषां श्वेततरः सर्वश्वेतः । 'संज्ञायां गिरिनिकाययोः' ॥६।२।९४॥ गिरौ निकाये च पूर्वमन्तोदात्तं संज्ञायाम् । अञ्जनागिरिः । शाण्डिलिनिकायः । संज्ञायां किम् । ब्राह्मणनिकायः । 'कुमार्यां वयसि' ॥६।२।९५॥ कुमार्यां परे पदे पूर्वमन्तोदात्तं वयसि गम्ये । वृद्धकुमारी । वयसि किम् । परमकुमारी । 'उदकेऽकेवले' ॥६।२।९६॥ मिश्रार्थे समासे सति उदके परे पूर्वं तथा । गुडोदकम् । 'स्वरितो वा—' इति पक्षे स्वरितः । अकेवले किम् । शीतोदकम् । 'द्विगौ क्रतौ' ॥६।२।९७॥ द्विगौ परे क्रतौ वाच्ये पूर्वं तथा । गर्गत्रिरात्रः । द्विगौ किम् । अतिरात्रः । 'सभायां नपुंसके' ॥६।२।९८॥ सभाशब्दे उत्तरपदे क्लीबे पूर्वमन्तोदात्तम् । गोपालसभम् । सभायां किम् । विप्रसेनम् । नपुंसके किम् । राजसभा । 'पुरे प्राचाम्' ॥६।२।९९॥ पूर्वमन्तोदात्तम्[1] । शिवदत्तपुरम् । प्राचां किम् । शिवपुरम् । 'अरिष्टगौडपूर्वे च' ॥६।२।१००॥ एतत्पूर्वसमासे पुरे परे तथा । अरिष्टपुरम् । गौडपुरम् । पूर्वग्रहणादिहापि । अरिष्टश्रितपुरम् । गौडभृत्यपुरम् । 'न हास्तिनफलकमार्देयाः' ॥६।२।१०१॥ पुरे परे एतानि नान्तोदात्तानि[2] । हास्तिनपुरम् । फलकपुरम् । मार्देयपुरम् ।

---

१. प्राच्ये पुरे PC. २. एते पुरे परे नान्तोदात्ताः । PC.

ल्कूपकुम्भशालं बिले' ॥६।२।१०२॥ बिले परे एतान्यन्तो-
नि । कुसूलबिलम् । 'दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु'
।।१०३।। एषु परेषु दिक्शब्दा अन्तोदात्ताः । पूर्वेषुकामशमी ।
द—पूर्वपञ्चालाः । आख्यान—पूर्वयायातम् । अधिराममधिकृत्य
ग्रन्थ आधिरामम् । चानराट—पूर्वचानराटम् । 'आचार्योप-
श्चान्तेवासिनि' ॥६।२।१०४॥ आचार्योपसर्जनान्तेवासिवाचि-
रपदे दिक्शब्दा अन्तोदात्ताः । पूर्वपाणिनीयाः । 'उत्तरपद-
सर्वं च' ॥६।२।१०५॥ उत्तरपदस्येत्यधिकृत्य या वृद्धिरुक्त
परे सर्वशब्दः दिक्शब्दश्चान्तोदात्तः । सर्वपाञ्चालकः ।
गञ्चालकः । अधिकारलक्षणादिह न । सर्वकारकः । 'बहुव्रीहौ
संज्ञायाम्' ॥६।२।१०६॥ अत्र विश्वं पूर्वपदमन्तोदात्तम् ॥
देवः । विश्वमहान् । पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वं प्राप्तम् ।
हौ किम् । विश्वे च ते देवा विश्वेदेवाः । संज्ञायां किम् ।
देवा अस्य विश्वदेवः । विश्वामित्रो विश्वाजिन इत्यत्र 'संज्ञायां
जिनयोः' इति परत्वात्स्यात् । प्रागव्ययीभावाद् बहुव्रीह्यधिकारः
राश्वेषुषु' ॥६।२।१०७॥ पूर्वमन्तोदात्तं बहुव्रीहौ संज्ञायाम् ।
रः । कुवलयाश्वः । महेषुः । 'क्षेपे' ॥६।२।१०८॥ क्षेपे गम्ये
ादिषु परेषु बहुव्रीहौ संज्ञायां पूर्वं तथा । कुण्डोदरः । कटुकाश्वः ।
वलेषुः । 'नदी बन्धुनि' ॥६।२।१०९॥ बन्धुनि परे नद्यन्तम-
त्तं बहुव्रीहौ । गार्गीबन्धुः । नदी किम् । ब्रह्मबन्धुः । ब्रह्मशब्द
दात्तः । 'निष्ठोपसर्गपूर्वमन्यतरस्याम्' ॥६।२।११०॥ उपसर्ग-
नेष्ठान्तं पूर्वपदमन्तोदात्तं वा । प्रक्षालितपादः । निष्ठा किम् । प्रसे-
ुखः । उपसर्गपूर्वं किम् । शुष्कमुखः । 'उत्तरपदादिः' ॥६।२
॥ अधिकारः । आपादान्तम् । 'कर्णो वर्णलक्षणात्' ॥६।२।

एत अन्तोदात्ताः PC. २. अपरयायातम् PC. ३. यायातमधिकृत्य ग्रन्थ यायातम् PC. ४. उत्तरपदाधिकारः आपादान्तः । आद्यधिकारः ा भगालमित्यवधिकः । Pc.

११२॥ आभ्यां परः कर्णशब्दः आद्युदात्तो बहुव्रीहौ । शुक्लकर्णः । दात्राकर्णः । 'कर्णे लक्षणस्य' इति दीर्घः । लक्षणमिति पशूनां विभागज्ञापनार्थं कर्णादिषु दात्रादिप्रतिरूपकं यत् क्रियते तदिह गृह्यते । तेनेह न । स्थूलकर्णः । 'संज्ञौपम्ययोश्च' ॥६।२।११३॥ अत्र यो बहुव्रीहिस्तत्र कर्ण उत्तरपदमाद्युदात्तं संज्ञायाम् । कुम्भकर्णः । औपम्ये- गोकर्णः । 'कण्ठपृष्ठग्रीवाजङ्घं च' ॥६।२।११४॥ संज्ञौपम्ययोरेते आद्युदात्ताः संज्ञायाम् । शितिकण्ठः । काण्डपृष्ठः । दशग्रीवः । गोजङ्घः । औपम्ये । उष्ट्रकण्ठः । गोपृष्ठः । उष्ट्रग्रीवः । नाडी- जङ्घः । 'शृङ्गमवस्थायां च' ॥६।२।११५॥ अवस्थायां संज्ञौ- पम्ययोश्च शृङ्गमुत्तरपदमाद्युदात्तम् । उद्गतशृङ्गः । ऋष्यशृङ्गः । मेषशृङ्गः । 'नञोजरमरमित्रमृताः' ॥६।२।११६॥ नञः परे एते आद्युदात्ता बहुव्रीहौ । अजरमित्यादि । 'सोर्मनसी अलोमोषसी' ॥६।२।११७॥ सोः परं लोमोषसी वर्जयित्वा मन्नन्तमसन्तं चाद्युदात्तम् । सुकर्मा । सुयशाः । सोः किम् । कृतकर्मा । अलोमोषसी किम् । सुलोमा सूषा । 'क्रत्वादयश्च' ॥६।२।११८॥ आद्युदात्ता बहुव्रीहौ । सुक्रतुः । क्रतु । दृशीक । प्रतीक । प्रपूर्ति । हव्य । भव्य । भग । 'आद्युदात्तं द्व्यच्छन्दसि' ॥६।२।११९॥ यदाद्यु- दात्तं द्व्यच् तत् सोरुत्तरं बहुव्रीहावाद्युदात्तम् । स्वश्वाः । सुरथाः । नित्स्वरेणाश्वरथावाद्युदात्तौ । आद्युदात्तं किम् । सुबाहुः । अन्तो- दात्तोयम् । द्व्यच् किम् । सुगुरसत् । 'वीरवीर्यौ च' ॥६।२।१२०॥ सोरुत्तरावेव तौ छन्दस्याद्युदात्तौ बहुव्रीहौ । सुवीरेण । सुवीर्यस्य । बहुव्रीह्यधिकारो निवृत्तः । 'कूलतीरतूलमूलशालाक्षसममव्ययी- भावे' ॥६।२।१२१॥ एतान्युत्तरपदान्यव्ययीभावे आद्युदात्तानि । उपकूलम् । उपतीरम् । उपतूलम् । उपमूलम् । परिशालम् । पर्य- क्षम् । सुषमम् । कूलादिग्रहः किम् । उपकुम्भम् । अव्ययीभावे किम् । परमकूलम् । 'कंसमन्थशूर्पपाय्यकाण्डं द्विगौ' ॥६।२।१२२॥

१. °कर्णम् PC. २. अवस्थावगमे PC. ३. सोरुत्तरं &c. PC.

